REPRODUCTION OF EARLIE EDITION OF THE
SABDARTHACINTAMANIH

# शब्दार्थचिन्तामणिः
# SABDARTHACİNTAMANIH

चतुर्थ खण्ड

भाग - ब

ब्राह्मावधूत श्रीसुखानन्दनाथः

प्रिन्टवैल

जयपुर- 302 004

Published by
PRINTWELL
S-12 Shopping Complex
Tilak Nagar Jaipur 302 004

Distributed by
RUPA BOOKS PVT LTD
H O S-12 Shopping Complex Tilak Nagar Jaipur - 302 004
B O 295-B Bharti Nagar P N Pudur Coimbatore 641 041

ISBN 81 7044-369 5 (Set)

**SABADARTH CHINTAMANI**

First Published 1860
Reprint - 1992

*Printed at*

**Efficient Offset Printers**
**215, Shahzada Bagh Indl Complex,**
**Phase-II, Phone 533736, 533762**
**Delhi 110035**

नाबुद्धिरूपिणा ।' शैवशास्त्रं तथा प्रोक्तं नग्नलोलपटादिकम् । आपत्यश्रुतिवाक्यानां दर्शनं लोकगर्हितम् ॥ कर्मस्वरूपत्यागत्वमत्रैव प्रतिपद्यते । सर्वकर्मपरिभ्रष्टैः कर्मस्तु तदुच्यते ॥ गौतमप्रोक्तशास्त्रार्थनिरताः सर्व एव हि । शार्गालीं योनिमापन्नाः सन्दिग्धाः सर्वकर्मस्विति ॥ शास्त्रविहीनोऽस्य । यदि स्नाम् । अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकम् । सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः ॥ इति ॥ शासनम् । शिष्यतेऽनेनवा । शासु अनुशिष्टौ । सर्वधातुभ्यष्ट्रन् ॥ विहायशास्त्रजालानि यत्सत्यं तदुपास्यताम् ॥

शास्त्रकृत् । पुं॰ ऋषौ । मुनौ ॥ त्रि॰ शास्त्रकारि ॥

शास्त्रगण्ड । पुं॰ प्रघटाविदि । छात्रगण्डे ॥ पदाद्यविदि । श्लोकाद्यवेत्तरि ॥

शास्त्रचक्षुस् । न॰ व्याकरणे ॥

शास्त्रचारणः । पुं॰ शास्त्रदर्शिनि ॥

शास्त्रज्ञ । त्रि॰ शास्त्रविदि । आगमज्ञे । मन्तुयोग्ये ॥ यथा । अनियुक्तो नियुक्तो वा शास्त्रज्ञो वक्तुमर्हति । दैवीं वाचं स वदति यः शास्त्रमुपजीवतीति । शास्त्रं जानातीति । ज्ञा॰ । क ॥

शास्त्रतत्त्वज्ञ । परमार्थविदि ॥ गणके ॥ शास्त्रतत्त्वं जानाति । ज्ञा॰ । क ॥

शास्त्रदर्शी । त्रि॰ शास्त्रज्ञे ॥

शास्त्रदृष्टि । स्त्री॰ विवेकनयनप्रस्तायाम् ॥

शास्त्रयोनि । पुं॰ वेदप्रमाणके । परमात्मनि ॥ शास्त्रयोनि कारणं प्रमाणमस्य । यतोऽनुमानिभूता गीत्वादिशास्त्रादेः प्रमाणाज्जगतो जन्मादिकारणं ब्रह्माधिगम्यते ॥ वेदात्मकनिश्वासे ॥

शास्त्रयोनित्वम् । न॰ शास्त्रस्य वेदस्यापि कारणत्वे ॥ शास्त्रयोनि कारणं प्रमाणं यस्य । तस्य भावे ।

शास्त्रवित्॰द्॰ । त्रि॰ अन्तर्यामी । शास्त्रज्ञे ॥ शास्त्रं वेत्ति । विद॰ । सत्सूद्विषेत्यादिना क्विप् ॥

शास्त्रविधि । पुं॰ शास्त्रसम्बन्धिलिङादिशब्दे । कुर्यान्नकुर्यादित्येवं प्रवर्त्तनानिवर्त्तनात्मकं कर्त्तव्याकर्त्तव्यज्ञानहेतौ विधिनिषेधाख्ये ॥ विधिनिषेधातिरिक्तमपि तत्त्वप्रतिपादकं शास्त्रमस्तीति सूचयितुं विधिशब्दः ॥

शास्त्रशिल्पिन् । पुं॰ भूमिकीरेषु । कश्मीरदेशे ॥

शास्त्रित । त्रि॰ शिक्षिते ॥ शास्त्रं सञ्जातमस्य । तारकादित्वादित

शिख० । अश्वमं कृत्वा न कर्तरि क्त ।

शिखतोद्धर । पु० प्रखरमुखि । श्वा र्थ ॥

शिख्य । त्रि० नियम्ये ॥

शिखण्ड । पु० बर्हे । मयूरपिच्छे । मोरपङ्ख० इ० भा० ॥ चूडायाम् ॥ शिखिनाअम्यते । अमगत्यादिषु । अमन्ताड्ड । शकन्ध्वादि ॥

शिखण्डक । पु० काकपक्षे । पङ्ख० इ० भा० । शिखात्रये । यथा । बालानाञ्चशिर कार्यं चिशिखसुण्ड मेवचेति ॥ पु० न० केकिपुच्छे ॥

शिखण्डिक । पु० कुक्कुटे । शिखण्डोऽस्यास्ति । ठन् ॥

शिखण्डिका । स्त्री० शिखायाम् ॥

शिखण्डी । पु० कलापि । बर्हे । मोरपङ्ख० इ० भा० ॥ मयूरे । बर्हिणि । गाङ्गेयारौ । भीष्मरिपौ । द्रुपदराजपुत्रे । कुक्कुटे । बाणे ॥ गोपवेशधरेविष्णौ ॥ शिखण्डोबर्हकलापोलङ्काररुपमस्यास्तिन् बाहितमतङ्गनिठनाचितीनि ॥

शिखण्डिनी । स्त्री० गुञ्जायाम् ॥ यूथिकायाम् ॥ द्रुपदराजकन्यायाम् ॥ मयूरपिच्छभूषणायाम् ॥ मयूरकान्तास्त्रयाम् ॥ शिखण्डोऽस्यस्याः । इन्नन्तान् ङीप् ॥

शिखण्डी । स्त्री० गुञ्जायाम् ॥ यूथिकायाम् ॥ गौरादित्वात् ङीष् ॥

शिखर । पु० न० द्रुमाग्रे । शिरसि । अग्रे ॥ पद्रिशृङ्गे । कूटे । शृङ्गे ॥ पुलके ॥ कक्षे ॥ पक्वदाडिमबीजाभमाणिक्यशकले ॥ अग्रे ॥ कोटौ ॥ शिखाऽस्यास्ति । शिखायाङ्कलच्चेतिर ॥ शिखारालिबा । रा० । क । इगुपेरिसिङ्कल ॥

शिखरवासिनी । स्त्री० उमायाम् । दुर्गायाम् ॥ सातेभवतुसुप्रीतादेवीशिखरवासिनी । उग्रं चतपसालब्धो यथापशुपति पति ॥

शिखरा । स्त्री० मूर्वायाम् ॥

शिखरिणी । स्त्री० रसालाप्रभेदे ॥ यथा । गव्यमावर्त्तितदुग्धनिवद्ध दधिमाहिषम् । एकीकृत्यपटे घृष्टं शुभ्रशर्करयासमम् । एलालवङ्गकर्पूरमरीचैस्समन्वितम् । नाम्नाशिखरिणीकुर्यात्द्रुचि सन्ततप्रभा ॥ अत्यष्टि १७ प्रभेदे ॥ यथा । रसैरुद्रैश्छिन्नायमनसभलाग शिखरिणी ॥ यथा । कराद्भ्रष्टनतुशिखरिणीहस्यतिशिशी । विलीना । स सत्यनियतमवधेयतदखिलं । इतिचसाद्गोपानुचितनिभृतालापजनितस्मितविभ्रंदेवोजगदवतुगोवर्द्धनधर ॥ इशिचतिशिशीद्रुतिच्छेद । नारीरत्ने ॥ मल्लिकायाम् ॥ रोमावल्याम् ॥ नवमालिकायाम् ॥

शिखनोध्वज ॥

शिखी । पुं॰ अग्नौ वैश्वानरे ॥ चित्रकवृक्षे ॥ बलीवर्द्दे ॥ शरे ॥ केतुग्रहे ॥ द्रुमे ॥ मयूरे ॥ कुक्कुटे ॥ वृषे ॥ शिखा सन्त्यस्य । शिखा स्त्यस्यवा । इत्युक्तेपतामिति॰ इ॰ त्रि॰ ब्रीह्यादित्वादः ॥ अजमोदमि ॥ सितावरे ॥ मेथिकायाम् ॥ मूर्कश्रिम्ब्याम् ॥ त्रि॰ शिखायुक्ते ॥

शिखिनी । स्त्री॰ मयूर॰ शिखायाम् ॥

शिखिपुच्छम । न॰ मयूरपिच्छे ॥

शिखिप्रिय । पु॰ लघुबदरे ॥

शिखिमण्डल । पुं॰ वरुणद्रुमे ॥

शिखिमूलम् । न॰ गृञ्जने ॥

शिखिमोदा । स्त्री॰ अजमोदायाम् ॥

शिखियूप । पुं॰ शीकारीमृगे ॥

शिखिवर्द्धक । पु॰ कूष्माण्डे ॥

शिखिवाहन । पु॰ कार्त्तिकेये । महासेने ॥ शिखीमयूरोवाहनमस्य ॥

शिखिव्रतम् । न॰ व्रतविशेषे ॥

शिग्रु । पु॰ शाकमात्रे ॥ शोभाञ्जने । अस्यपर्यायायथा । शोभाञ्जने शिग्रुतीक्ष्णगन्धकाक्षीवमोचकाः । रक्तोसौमधुशिग्रुः स्यादिति ॥ अस्य गुणायथा । शिग्रुः कटुकः पाके तीक्ष्णोष्णोमधुरोलघुः । दीपनोरोचनोरूक्षः क्षारस्तिक्तोविदाहकृत् ॥ संग्राही शुक्रलोहृद्यः पित्तरक्तप्रकोपणः चक्षुष्यः कफवातघ्नो विद्रधिश्वयथुक्रिमीन् । मेदोऽपचीविषप्लीहगुल्मगण्डव्रणान् हरेत । श्वेतः प्रोक्तगुणोज्ञेयोविशेषाद्दाहकृद्भवेत् । प्लीहानंविद्रधिंहन्ति व्रणघ्न पित्तरक्तहृत् ॥ मधुशिग्रुः प्रोक्तगुणोविशेषाद्दीपनः सरः । शिग्रुवल्कलपत्राणां स्वरसःपरमार्त्तिहृत् ॥ अपिच । कीलिङ्ग्वराजकविनावनितावतंसे शिग्रोरसुष्यकाथितोस्तिकिमुपयोगः । एतस्य पल्लवरसात्समधो किमन्यद्दृष्ट्वा शिमाश्वरजघेमहिलाग्रगण्ये ॥ इति ॥ शिनोति । शिञ् निशाने । अम्बूगादयश्चेतिनिपातितः ॥ शोभ्य तेवा । शोकृसेचने । बाहुलकादुः ॥ स्त्री॰ गश्च ॥

शिग्रुकम् । न॰ वाह्लीकेषुप्रसिद्धेशाकविशेषे ॥

शिग्रुजम् । न॰ श्वेतमरिचे । शोभाञ्जनसम्बीजे ॥ अस्यगुणाः । चक्षुष्यंशिग्रुजंशीतंतीक्ष्णोष्णंविषनाशनम् । अवृष्यंकफवातघ्नंतन्नस्येनशिरोर्त्तिनुत् ॥ त्रि॰ शिग्रुभवे ॥ शिग्रोर्जायतेस्म । जनी॰ । ड ॥

शिग्रुपुष्पम् । न॰ शोभाजनकुसुमे । तत्पुष्पकगुणा । शिग्रोः पुष्पन्तु कटूष्णंतीक्ष्णंस्नायुशोथनुत् । कृमिहृत्कफवातघ्नं विद्रधिप्लीहगुल्म

ने । शिन्० शिज्वा । शते सौ यात्० क्रमितमिशतिस्त्रामत क्रुमेति० क्रनूसचकित्० यतह्रदा देशीया ॥

शितिकण्ठ । पु० शम्भौ । हुँशे । शिवे । शिति काल कण्ठोऽस्य ॥ दात्यूहखगे ॥

शितिचर । पु० सुनिषण्णशाके ॥

शितिवार । पु० शाकविशेषे ॥

शितिच्छद ।
शितिपक्ष । पु० हंसे ॥

शितिसार । पु० तिन्दुके । स्फूर्जके । तेंदू० हू० प्र० हले ॥ शिति काल सारोमज्जायस्य ॥

शितिसारक । पु० शितिसारे ।

शिथिलम् । त्रि० श्लथे । ढीला हू० भा० । न० मन्दकर्मणि ॥ श्लथ बन्धे । सयोगविशेषे ॥ श्रथमोचने । श्रथिरशिथिरशिथिलेतिकिरच्० उपधायाह्रत्वम० रेफलोप प्रत्ययरेफस्यलत्वञ्चनिपात्यते ॥

शिथिलित । त्रि० विश्लथिते ॥

शिनि । पु० सात्यकेः पितामहे० क्षत्रियविशेषे ॥

शिनिनप्ता । पु० सात्यकौ । शिनेर्नप्ता ॥

शिविः । पु० रक्षौ ॥ पशौ ॥ पा० ॥ बाहुलकात्क ॥

शिपिविष्ट । पु० खलतौ । खल्वाटे । दुश्चर्मणि । पिनाकिनि । शिवे ॥ विष्णौ । यथा । शैत्याच्छयनयोगाच्चशीतशारिप्रपद्यते । ततपानाद्र सणाच्चैवशिपयोरश्मयोमता । तेष्वप्रवेशाद्विश्वेश शिपिविष्टस्तुहीच्यते ॥ शिपिषु० रश्मिषुपशुषुवा विष्टप्रतिष्ठितोयत्स्वरूपेणेतितथा ॥

शिप्र । पु० कालिकापुराणप्रसिद्धे० सरोवरविशेषे ॥

शिप्रा । स्त्री० अवन्तिदेशप्रसिद्धपुण्य सरिद्विशेषे ॥

शिफा । स्त्री०वटादिद्रुमाणांजटायाम् । मूले ॥ सरिति ॥ मांसकायाम् ॥ मातरि । शतपुष्पायाम ॥ हरिद्रायाम् ॥ शेते । बाहुलकात्० शीङ फकह्रस्वश्च ॥

शिफाक । पु० पद्ममूले ॥

शिफाकन्द । पु० कशेरुटे । पद्ममूले । शिफामूलतरुप्ररोह तत्सहित कन्दोमूलम ॥

शिफाधर । पु०
शिफाधरा । स्त्री० शाखायाम् ॥

शिफारुह । पु० वटवृक्षे ॥

शिम्बी । स्त्री० क्षुपविशेषे । मतिदायाम् । द्रवन्तृपल्याम् । वातघ्नाम ॥ गुच्छपुष्पाम ॥

शिम्ब । पु० रक्तकमर्दके ॥

शिम्बा । स्त्री० सध्याम् । बीजगुप्त्याम । सेमफली० हू० भा० ॥

र्थ्यां ।। शिरसिभव' शिरसिषि तीथा । शरीरावयवावात् ॥

शिरा । स्त्री० धमन्याम् । नाड्याम् ॥ श्रिनोति । श्रिञ • बहुल मन्यत्रापीतिरक् ॥

शिरापत्र । पु • हिन्तालवृक्षे ॥ क पित्थे ॥

शिराक्षम् । न० कमरके ॥ चि० शिरासन्तति ॥

शिरालक' । पु • अस्थिभक्षवृक्षे ॥

शिरावृत्तम् । न० सीसके ॥

शिरि । पु • शलभे ॥ हिंस्रे ॥ हन्तरि ॥ शृणाति' श॒० । कृ गृपृकटीभ्यादिनाद्रू ॥ खड्गे ॥ शरे ॥

शिरीष । पु • कपीतने । भण्डिले । सिरसइतिप्रसिद्धवृक्षे ॥ शिरीषोमधुरोनुष्णस्तिक्तश्चतुवरोलघु । दोषशोथविसर्प घ्न कासव्रणवि षापहः ॥ शृणातिशीर्यतेवा । श॒० । शॄपृभ्यांकिर्श्चति० ईष न् ॥

शिरीषपत्रिका । स्त्री० श्वेतकिणिहाम् ॥

शिरोगृहम् । न० चन्द्रशालायाम् ॥ शिरसिगृहम् । कृ० चि० न्द्र ॥

शिरोधरा । स्त्री० ग्रीवायाम् ॥ शिर सोधरा ॥ कृ० चि० न्द्र: ॥

शिरोधानम् । न० उपधाने । उप धाने । गण्डो । सिराहना० कृ० भा० ॥ शिरोधीयतेऽत्र । डुधा ञ करणाधिकरणयोश्चेत्यधिकर णेल्युट ॥

शिरोधि । स्त्री० ग्रीवायाम् ॥ शि रोधीयतेऽस्याम् । कर्मण्यधिकरणे चेतिकि ॥

शिरोमणि । पु • स्त्री० शिरोधार्य रत्ने । चूडामणौ ॥ शिरस मणि ॥

शिरोमर्मा । पु • शूकरे ॥

शिरोरत्नम् । न० शिरोमणौ ॥ शिरसीरत्नम् ॥

शिरोरुजा । स्त्री० ससपर्वाक्षे । शिरोरोगे ॥

शिरोरुह । पु • केशे । मूर्द्धजे । शि रसिरोहति । इगुपधेतिकः क. ॥

शिरोरोग । पु • शिरपीडायां ॥

शिरोवल्ली । स्त्री० मयूरचूडायाम् ॥

शिरोव्रतम् । न० मरिचे ॥ श्रीदेवी भागवतैकादशस्कन्धे श्रीनारायण प्रोक्तेव्रतविशेषे ॥

शिरोवृत्तफल । पुं० रक्तापामार्गे ॥

शिरोवेष्ट । पुं० उष्णीषे । वेष्टावष्टु ले ॥ कृ० चि० शेष: ॥

शिरोवेष्टनम् । न० शिरोवेष्टे ॥

शिरोस्थि । न० मस्तकास्थनि । करो टी । शिरस्त्राणे ॥

शिरोषिका । स्त्री० धारिशिरोषिका

शिलात्मज । पु॰ लौहे ॥

शिलात्मिका । स्त्री॰ मूषायां ।

शिलाद्रु, पु॰ मलिये । शिला जतुनि ॥

शिलाधातु । पु॰ सितोपले । ख स्याम् सेलखड़ी॰ इ॰ भा॰ ॥ स्वर्णगैरिके । सोनागेरू॰ इ॰ भा॰ प्र॰ ॥

शिलापट्ट । पु॰ पेषणार्थशिला याम् । सिलवट॰ भा॰ ॥

शिलापुत्र । पु॰ घर्षणशिले । सिलव ट्टा॰ लोढ़ा॰ इ॰ भा॰ प्र॰ ॥

शिलापुष्पम् । न॰ शैलेये । अश्मपु ष्पे । शिलाजतुनि ॥

शिलाभस्म । न॰ शिलापुष्पे ॥

शिलाभेद । पु॰ पाषाणभेदिनि व ष ॥ पाषाणभेदकार्ये ॥

शिलारम्भा । स्त्री॰ काष्ठकदल्याम् ॥

शिलावल्का । स्त्री॰ औषधद्रव्यविशेषे । वल्कलायाम् । शैलगर्भाह्वाम । शिलावाक॰ इ॰ भा॰ प्र॰ ॥

शिलाव्याधि । पु॰ शिलाजतुनि ॥

शिलासनम् । न॰ शैलेये ॥ पाषाण रचितासने ।

शिलासन्धि । पु॰ पर्वतगह्वरे । गुहायाम् ।

शिलासारम् । न॰ लौहे ।

शिलाह्वम् । न॰ शिलाजतुनि ॥

शिलि, पु॰ भूर्जपत्रवृक्षे । स्त्री॰ द्वाराध स्थितकाष्ठे ॥

शिलिन्द । पु॰ मत्स्यविशेषे ॥ य था 'शिलिन्द श्लेष्मलो बल्यो वि पाके मधुरो गुरु । आमवातकरो हृद्यो वातपित्तहरो मत । इ॰ रा॰ भ ॥

शिली । स्त्री॰ गण्डूपद्याम् । स श्मार्यां ॥ द्वारध स्थितदारुणि ॥ शिलति । शिल॰ । इगुपध कित् । आतिरस्त्रीति॰ ङीष् ।

शिलीन्ध्र । पु॰ मत्स्यविशेषे । विषफले ॥ यथा । शिलीन्ध्र श्लेष्मलो बल्यो विपाके मधुरो गुरु । वातपित्तहरो हृद्य आमवातकरस्त स ॥ तरुप्रभेदे । न॰ कदल्यां । छत्राके । कदलीपुष्पे ॥ विपु टाख्ये ॥

शिलीन्ध्रकम् । न॰ छिलीरे । गो मयच्छत्रिकायाम् ॥

शिलीन्ध्री । स्त्री॰ विहङ्गीविशेषे ॥ गण्डूपद्याम् ॥ मृदि ॥

शिलीपद । पु॰ श्लीपदाभिधपाद रोगे । पादवल्मीके । गोड॰ इ॰ गौ॰ भा॰ प्र॰ । पीलुपांव॰ इ॰ भा॰ ॥ अस्य विप्रकृष्टनिदानं॰ सा मान्यलक्षणञ्चाह । पुराणोदकभू यिष्ठा । सर्वर्त्तुषु च शीतला । ये देशास्तेषु जायन्ते श्लीपदानि विशेष त ॥ य सज्वरो वङ्क्षणजोऽभ

शिल्पिका । स्त्री॰ तृणविशेषे ॥

शिल्पी । त्रि॰ कारौ । शिल्पविद्या व्यवसायिनि कारुकार॰ इ॰भा॰प्र॰ ॥ यथा । तक्षा च तन्तुवायश्च नापितो रजकस्तथा । पञ्चमश्चर्मकारश्च कारवः शिल्पिनो मताः ॥ अपि च । मालाकार कर्मकार शङ्खकार कुविन्दकाः । कुम्भकार कंसकार षडेते शिल्पिनां वराः । सूत्रधारश्चित्रकार स्वर्णकारस्तथैव च । पतितास्ते ब्रह्मशापादयाज्या वर्णसङ्कराः ॥ शिल्प क्रियाकौशलमस्यास्तीति इनि ॥ शिल्पिनो वर्णसङ्कराः ॥

शिल्पिनी । स्त्री॰ कोलदलौषधौ ॥

शिल्पिशाला । स्त्री॰ शिल्पशालायाम् । आवेशने । शिल्पिनां शाला ॥

शिवः । पु॰ शम्भौ ईशे । पशुपतौ । शूलिनि । महेश्वरे । महादेवे । हरे । चन्द्रशेखरे । अप्रतिहतनिरतिशयसर्वार्थदृक्क्रियाशक्तौ । नामस्मरणमात्रेणास्मत्पापावनशिवे । परिशुद्धपरमानन्दबोधरूपे ॥ सर्वदेहेतीयत्वात्स्मात ॰ तुरीये ॥ मोक्षे ॥ वेदे । कीले । कीलकयष्टौ ॥ वालुके ॥ गुग्गुलौ ॥ पुण्डरीकद्रुमे ॥ कृष्णधूस्तूरे । पारदे ॥ देवे । सुरे ॥ अच्छमादिपुंश्चि

तितमेघे ॥ मतञ्जालस्य फलं यथा । महेशभक्तः सुतपा रहस्याजितेन्द्रियश्चारुतनुर्महात्मा । शिवाभिधाने खलु योगराजे प्रसूतिकाले यदि मानवानाम् ॥ आर्द्रानक्षत्रे । यस्मादस्य प्रथमपर्याये । मगणे ॰ SSS॰ ॥ शेतेऽस्मिन् सर्वम् शेतेऽनेन वा । शीङ् स्वप्ने । सर्वनिघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अतन्त्रे । इत्युणादौ वन् ॰ इत्यनिपातितः ॥ न॰ कल्याणे । मङ्गले । क्षेमे ॥ जले ॥ सुखे ॥ समुद्रलवणे ॥ सैन्धवे ॥ श्वेतटङ्कणे ॥ शिवं सुखं तदस्यास्ति । अर्श आद्यच् ॥ शिवयतीति वा तत्करोतीति णिजन्तात् ॰ पचाद्यच् ॥

शिवकः । पु॰ कीलके । बन्धनकाष्ठे । खूँटा॰ इ॰ भा॰ । गवां गात्रकण्डूयनार्थं गोष्ठे निखाते स्तम्भे ॰ इति सुभूति ॥ छिन्नशाखकाण्डम् ॰ शेतेऽत्र वा । शान्तकर्म्मणि॰ शीङ् स्वप्ने । सर्वनिघृष्वेति साधु । स्वार्थे कः ॥

शिवङ्करः । त्रि॰ मङ्गलकारके ॥ पु॰ अतीतकल्पार्हद्भेदे ॥

शिवकीर्त्तनः । पु॰ भृङ्गरीटौ शिवगणे । असुरद्विषि । हरौ ॥ शैवे ॥

शिवक्षेमम् । न॰ । ख्यापिते शय

शिवदूतिका । स्त्री॰ मातृकाविशेषे ॥
शिवदूती । स्त्री॰ भवान्याम् । दुर्गा
याम् ॥ यतोनियुक्तोदौत्ये न तया दे
व्याशिवः स्वयं । शिवदूतीतिलो
केस्मिं स्ततः साख्यातिमागता ॥ शि
वमदूतवतिसन्देशम्प्रापयतीत्यर्थे
॰ गौरादेराकृतिगणत्वात् ङीष् ।
बहुव्रीहौतुटाप्स्यादित्याहुः । व
स्तुतस्तु॰ दूतीतिदूतनिर्व्याहौत्यर्थे
तिनिष्ठायांदीर्घे सत्यत्यसन्देशप्रापक
त्वविवक्षायांकादन्यास्त्रायामिति॰
बहुव्रीहावपिङीप सम्भवति ॥ मा
तृभेदे ॥ योगिनीविशेषे ॥
शिवद्रुम । पु॰ बिल्वे । काल्पवृक्षे ॥
शिवद्विष्टा । स्त्री॰ केतक्याम् ॥
शिवधातु । पु॰ पारदे ॥
शिवनाभि । पु॰ शिवलिङ्गविशेषे ॥
शिवपुराणम् । न॰ उपपुराणविशेषे ॥
शिवपुरी । स्त्री॰ काश्याम् ॥
शिवप्रिय । पुं॰ बकद्रुमे ॥ स्फटि
के ॥ धत्तूरे ॥ धत्तूरधूस्तूरकयो
रुद्रनिवासयोग्यस्याभिप्रायपति
मानिर्निर्विशेतोसि । किवेरथापि
वितसन्ततः प्रयातिकिंवापि
कवसतिकिंदूषदः स्तवन्ति ॥ न॰
रुद्राक्षे ॥ त्रि॰ शिवेष्टद्रव्ये ॥
शिवस्यप्रिये ॥
शिवप्रिया । स्त्री॰ उमायाम् ॥
शिवभट्टारक । पुं॰ सर्वज्ञाना



कौशिते ॥
शिवमल्लक । पुं॰
शिवमल्लिका । स्त्री॰
शिवमल्ली । स्त्री॰ व
याम् ॥
शिवरस । पु॰ प
राष्ट्यापिताम्ब
शिवरात्रि । स्त्री॰
म् ॥ चतुर्दशीसुपव
यथा । माघफाल्गुन
मध्ये या । तु
र्यं यातपोपवासर
प्रकृतं व्यशिवप्री
हरेस्नानपूजाप
शोवावेष्टवावा
क । सर्वपूज
शिवशिर्मुख ॥
सप्तमिमाह । व
यानुगताचतुर्द
शाशिमसिन्धः
यापिवाऽमयायु
पारणा ॥ यदा
भवेत्तर्हं गौसा
हाविचक्षत्वादुतर
याविकालवर्धि
तिविंदाभरणम
चित्रकार्यं भद्रण
पवासं तिथ्यन्ते
। तिथ्यन्तपार

म् । चतुर्दश्यामेवपारणम् । यथो
क्तम् । ब्रह्माण्डोदरमध्यतुयानितो
र्थानिसन्तिवे । पूजितानिभवन्तो
हभूताश्चेपारणेकृतेकृते ॥

शिवलिङ्गम् । न॰ महादेवस्यशिश्ने ॥

शिवलोकः । पु॰ कैलासे ॥

शिवबल्लभः । त्रि॰ शिवप्रिये ॥ शि
वस्यबल्लभः । शिवोवल्लभोस्यवा ॥

शिवबल्लभा । स्त्री॰ शतपत्र्याम् ॥

शिवशिखा । स्त्री॰ लिङ्गिन्याम् ।

शिववल्ली स्त्री॰ श्रीवल्ल्याम् ॥
लिङ्गिन्याम्

शिववाहन । पुं॰ वृषभे ॥

शिवबीजम् । न॰ पारदे ॥

शिवशेखर । पुं॰ वकद्रुमे ॥ ध
त्तूरे ॥ शिवमस्तके ॥

शिवसायुज्यम् । न॰ शिवेनसहयोगे ॥

शिवसुन्दरी । स्त्री॰ भवगेहिन्याम्
। गौर्य्याम् ॥

शिवा । स्त्री॰ गौर्य्याम् । भवान्याम्
। यथा । शिवामुक्तिः समाख्या
ताये।गिनांमोक्षगामिनी । शिवा
यथाजपेद्देवींशिवालोकेततः स्मृ
तेतिदेवीपुराणम् ॥ अपिच । शि
वाकल्याणरूपाचशिवदाचशिवप्रि
या । प्रियेदातरिवाशब्दः शिवातेन
प्रकीर्त्तितेतिब्र॰ वै॰पुराणम् ॥ पु
नश्च । शिवकल्याणवचनश्चैवोत्कृ
ष्टवाचकः । समृद्धवाचकश्चैवमा
कारोदातृवाचकः ॥ श्रेय. सम्
द्योत्कृष्टदात्रीशिवातेनप्रकीर्त्तिता
। अथवाशिवमूर्त्तिमतीशिवातेन
प्रकीर्त्तितेतिब्र॰ वै॰ पु॰ ॥ आ
त्मानुभूतिनिष्णातोवेतमावविव-
र्ज्जिता । तेपिप्रेम्णाभजन्त्ये
नामित्यसर्वोत्तमांशिवेल्युमासहि
ता ॥ मुक्तौ ॥ फेरौ ॥ सप्तपत्ना
याम् । फाटामलीवधौ ॥ अभ
यायाम् ॥ आमलक्याम् ॥ श
म्याम् ॥ हरिद्रायाम् ॥ दूर्वाया
म् । गोरोचनायाम् ॥ बुद्धिशक्ति
विशेषितारायाम् ॥ शिवमस्यश्रा
शिवोविभर्त्यनयाभूतिरा ।
अथ वाधाम् ॥ शिव शिवाभा
देवताभक्तिपश्चा अथवायाम् ।
शकुनावेदकत्वात् ॥ शिवंकरोति
। तत्करोतीतिणिच् । पचाद्यच् ।
शिवयति ॥

शिवाक्षम् , न॰ रुद्राक्षे ॥

शिवाटिका । स्त्री॰ वंशपत्र्याम् ॥

शिवात्मकम् । न॰ सैन्धवे ॥ त्रि॰
शिवमये ॥

शिवानी । स्त्री॰ जयन्तीवृक्षे ॥ दु
र्गायाम् ।

शिवापीड । पुं॰ चन्द्रमसि ॥ ब
कवृक्षे ॥ शिवस्यआपीडः ॥

शिवाप्रिय । पुं॰ छागे ॥

शिवाफला । स्त्री॰ शमीवृक्षे ॥

शिवाराति । पु० सारमेये ।

शिवारुतम् । न० शृगालध्वानिनादे ॥

शिवालय । पु० हरमन्दिरे ॥ र
क्ततुलस्याम ॥ श्मशाने ॥

शिवालु । पु० शृगाले ॥

शिवास्मृति । स्त्री० जयन्तीवृक्षे ॥

शिवाह्लाद । पु० बकवृक्षे ॥ शि
वस्यानन्दे ॥

शिवाह्वय । पु० पारदे त्रि० शिव
नामके ॥

शिशाह्वा । स्त्री० रुद्रजटायाम् ॥

शिवि । पु० उशीनरदेशाधिपतौ
भूपतिवरे ॥ औशीनरे ॥ उदारो
ऽयंमहीपतिर्येनस्वमांसश्येनायदत्वा०
शरणागत, कपोतोरक्षित ॥ भू
र्जपत्रवृक्षे ॥ व्याघ्रे । हिंस्रपशौ ॥

शिविका । स्त्री० याप्ययाने । झंपा
न० डोला० चौपाला० पालकी० इ
त्यादिभाषाप्रसिद्धे बहुविधे । शि
वीरथे ॥ शिवेव । शिवंकरोतिशिवा
। तत्करोतिण्यन्तात्० वुल् ॥

शिविरम् । न० युद्धवेश्मनि ॥ नि
वेशे । आगन्तुकसैन्यवसतौ ॥ सेना
यावासस्थाने ॥ राजनिवेशे ॥ अ
थशिविरलक्षणम् । श्रीभगवानुवा
च । शिविरपरिखायुक्तमुच्चप्राका
रवेष्टितम् । युक्ताद्दशशारवसिंहद्वा
रपुरस्कृतम् ॥ युक्तं चित्रैर्विचित्रैश्च
क्वचित्मेचकपाटकै । निषिद्धसर्व

हितप्रसिद्धंचपुरस्कृतम ॥ सुत
राणांचद्वैधप्राङ्गणास्कृतंचदेवे
ति । विशेषोब्रह्मवैवर्त द्रष्टव्य
कृष्णखण्डके १०२ अध्याये ॥ शव
मृत्यच । शवगतौ । बाहुलकात्कि
रच ० अतद्रूलस्य ॥ यद्वा । शेरते
राजबलान्यस्मिन । शीङ् स्वप्ने ।
बाहुलकात्किरच् । शीङोवुगह्र
स्वश्च ॥

शिवी । स्त्री० गौर्याम् ॥ पुयोगेङी
ष ॥

शिवीरथ । पु० शिविकायाम् ॥ ङ
० हाली ॥

शिवेष्ट । पु० बकवृक्षे ॥ त्रि० शि
वप्रिये ॥

शिवेष्टा । स्त्री० दूर्वायाम् ।

शिशयिषु । त्रि० शयितुमिच्छौ ॥ शी
ङ सन्नन्तादुप्रत्यय ॥

शिशिर । पु० हिमे । तुषारे ॥ द्वीपा
न्तरप्रसिद्धगिरिविशेषे ॥ पु० न०
ऋतुविशेषे । तपस्तपस्ययो, । माघ
फाल्गुनयो । अम्भसि । शीते ।
हिमकूटे ॥ अस्यगुणायथा । शिशि
र शीतलोऽतीवरूक्षोवातग्निवर्द्ध
न । अपिच । शिशिरशीतलव्व्य
शीतवातप्रकोपणमिति ॥ अतआ
तस्यफलम् । मिष्टान्नभोगीमधुरप्र
वादीकलत्रपुत्रादियुत, चधार्मि
। क्रोधीसुधीस्यात्कलेवरस्यप्रसू

रण विष्णुपुराणे २ अंशे १२ अ
ध्यायेयथा । शिशुमारस्तुय प्रोक्त
सध्रुवीयत्रतिष्ठति । सन्निवेशस्तत
स्यापिश्रूयतांमुनिसत्तम ॥ यदह्नाकु
रुतेपापंदृष्टातन्निशिमुच्यते । ताव
त्यश्चैवताराता शिशुमाराश्रिता
दिवि ॥ तावन्त्येवतुवर्षाणिजीवत्य
भ्यधिकानितु । उत्तानपादस्तस्याथ
विज्ञेयोह्युत्तरोहनुः ॥ यज्ञोऽधर
श्चविज्ञेयोधर्मोमूर्द्धानमाश्रितः ।
हृदिनारायणश्चास्ते अश्विनौपूर्वपा
दयोः ॥ वरुणश्चार्यमाचैवपश्चिमेत
स्यसक्थिनी । शिश्नेसंवत्सरस्तस्यमि
त्रोऽपानं समाश्रितः ॥ पुच्छेऽग्नि
श्चमहेन्द्रश्चकश्यपोथततोध्रुवः । ता
रकाशिशुमारस्यनास्तमेतिचतुष्टय
म् ॥ इत्येषसन्निवेशोयंपृथिव्यांज्यो
तिषांतथा । द्वीपानामुदधीनाञ्चप
र्वतानाञ्चकीर्त्तितः ॥ वर्षाणाञ्च
नदीनाञ्चयेचतेषुवसन्तिवै । तेषां
स्वरूपमाख्यातंसङ्क्षेपः श्रूयतां
पुनः ॥ यदम्बुवैष्णवः कायस्ततो
विप्रवसुन्धरा । पद्माकारासमुद्भूता
पर्वताब्ध्यादिसंयुता ॥ ज्योतींषि
विष्णुर्भुवनानिविष्णुर्वनानिविष्णु
र्गिरयोदिशश्च । नद्यः समुद्राश्च
सएवसर्वंयदस्तियन्नास्तिचविप्रवर्य ॥
ज्ञानस्वरूपोभगवान्यतोऽसावशे
षमूर्त्तिर्नतुवस्तुभूतः । ततोहिशै

लाब्धिधरादिभेदान्जानीहिविज्ञा
नविजृम्भितानि ॥ यदाहिशुद्धं नि
जरूपसर्वं कर्म्मक्षयेज्ञानमपास्तदो
षम् । तदाहिसङ्कल्पतरोः फला
निभवन्तिनोवस्तुषुवस्तुभेदाः ॥ मही
घटत्वं घटतः कपालिकाकपालिका
चूर्णरजस्ततोऽणुः । जनैः स्वक
र्मस्तिमितात्मनिश्चयैरालक्ष्यते
ब्रूहिकिमत्रवस्तु । इति ॥ अपिच
। तारामयंभगवतः शिशुमाराकृ
तिप्रभोः । दिविरूपंहरेर्यत्तुतस्य
पुच्छेस्थितोध्रुवः ॥ सैषभ्रमन्भ्रा
मयतिचन्द्रसूर्यादिकान्ग्रहान् ।
भ्रमन्तमनुतंयान्तिनक्षत्राणिचचक्र
वत् । सूर्याचन्द्रमसौतारानक्षत्रा
णिग्रहैः सह । वातानीकमयैर्बन्धै
र्ध्रुवेबद्धानितानिवै ॥ शिशुमारा
कृतिप्रोक्तं यद्रूपंज्योतिषांदिवि । ना
रायणोयनंधाम्नांतस्याधारः स्वयंहृ
दीति ॥

शिशुमारक । पुं॰ वनच्छागे ॥ चि॰
बालकवे॰ढरि ॥

शिशुवाहक । पु॰ पडवी । वनच्छागे ॥

शिश्न । पु॰ मेढ्रे । मेड्रने । श्नक्षसि
॥ सत्ति । शश॰ । शिनोतिवा ।
शिञ्निशाने । बाहुलकान्नक् ।
पृषोदरादि ॥

शिश्नक । पु॰ मेढ्रे ॥ स्वार्थेकन् ॥

शिश्निदान । त्रि॰ कृष्णकर्म्मणि ।

तास्तजले । अम्बुकरणेषु ॥ शीक्ते । शीकसेचने । तालव्यादि । ऋफ्छेररन्निति बाहुलकादरन् ॥ न॰ सरलद्रवे ॥

शीघ्रम् । न॰ उशीरे । नलदे । चक्राङ्के ॥ त्वरिते । लघुनि । क्षिप्रे अरे । द्रुते । सत्वरे । चपले । तूर्णे । अविलम्बिते । आशुनि ॥ तूर्णपर्यायं क्रियाविशेषणवद्द्रव्ये वर्त्तमानं क्लीवे । यथा॰ शीघ्रकुरु इति । सत्वगामी तु वाच्यलिङ्ग । यथा । कलौ शीघ्राजरा॰ शीघ्रो स्त्व ' शीघ्रश्यस्तथेति ॥ शिङ्घति॰ व्याप्नोति । शिधिव्याप्ताच । शीघ्रादयश्चेतिरगन्तो निपातितः ॥ त्रि॰ द्रुतगतौ ॥

शीघ्रग । त्रि॰ नभसुति । वायौ ॥ त्रि॰ त्वरितगामिनि ॥

शीघ्रगामी । त्रि॰ आशुगमनशीले । द्रुतगतौ ॥

शीघ्रचेतन । पुं॰ शुनि । त्रि॰ त्वरितचेतनायुक्ते ॥

शीघ्रजन्मा । पु॰ पूतिकरञ्ज ॥

शीघ्रपुष्प । पु॰ वकवृक्षे । अगस्त्यागे ॥

शीघ्रवेधी । पुं॰ लघुहस्ते । शिक्षितास्त्रे । आशुशरादिना लक्ष्यवेधकर्त्तरि ॥

शीघ्रा । स्त्री॰ उदुम्बरपर्णीम् । दन्त्यास् ॥

शीत । पुं॰ वानीरे । वञ्जुले । वेतसवृक्षे । शीतमस्यास्ति । अर्श आद्यच् । शीतवीर्यत्वलेपादाहशमनाच्च । बह्वाले । बहुवारके ॥ निम्बे ॥ पर्पटे । कर्पूरे ॥ अशनपर्णीम् ॥ नरकान्तरे । हिमर्त्तौ । न॰ हिमगुणे । जले । त्वचे । दारचीनी॰ इ॰ भा॰ ॥ शीतगुणा रवानीरबहुवारद्रुमेषु चेत्यजय ॥ त्रि॰ शीतले । अलसे शीतस्पर्शे । शीतविशिष्टेऽर्थे । अर्श आद्यच् ॥ विशिष्टीभूत शीतशब्दोनपुंसकम् । यस्मिन् द्रव्ये शीतः स्पर्शः स्यादौ विशिष्टगोभूतस्तु शीतशब्दो विशेष्यनिघ्न ॥ श्यायतष्क्तिशीत । श्यैङ् गतौ । भावेक्त । द्रवमूर्त्ति स्पर्शयो ' श्यइति सम्प्रसारणम् । हलइतिदीर्घं । श्ये स्पर्शइति पर्युदासान्ननिष्ठानत्वम् ॥

शीतक । पु॰ शीतकाले ॥ ऋतावुष्णशीत॰ इ॰ यावादिषुपाठात् स्वार्थेकन् ॥ अशनपर्णीम् ॥ त्रि॰ सुस्थिते । सुस्थे ॥ अलसे । दीर्घसूत्रिणि । मन्दे ॥ शीतकरोति । शीतोष्णाभ्याकारिणीति कन् । वृश्चिके ॥

शीतकर । पु॰ चन्द्रे ॥ त्रि॰ शीतलपाणियुक्ते ॥ शीतकारिणि ॥

शीतकषाय । पु॰ हिमकषाये यथा । चु णा द्रव्यपल सम्यक षड्भिर्जलप ले मुतम् । शर्वरीमुषित म स्यादृधिम शीतकषायकइतिवैद्य काम् ॥

शीतकाल । पु॰ हिमर्तौ । मार्गशी पयो । हेमन्ते । कूपोदकवटच्छाया श्यामास्त्रीइष्टकागृहम । शीतका लभवेदुष्णमुष्णकालेचशीतलम् ॥ हेमन्तशिशिरर्त्तौ ॥

शीतकिरण । पुं॰ हिमांशौ ॥ चन्द्र मसि ॥ यथा । कान्तेकेयमुदेतिशी तकिरणोनास । कुलीनारिधौकस्मि सुन्दरिसोदर । करमहोदर्त्तत्वदी ये सखे । धन्यास्त्वयुवतीसखीकुश वतीभ्रातापिधन्यस्तवइत्य शौपरि हासकेलिकलयासुग्धीश्वरि मातु व ॥

शीतकुम्भ । पुं॰ करवीरे ॥

शीतकुम्भी । स्त्री॰ जलजन्तविशेषे । शिउलीक्षोप॰ इ॰ गो॰ भा॰ प्र॰ । चस्या पर्यायायथा । शीतलोशीत कुम्भीचश्रुक्रपुष्पाअजीत्रवितिरक्षमा खा ॥

शीतकृच्छ्र । पु॰ व्रतविशेषे । यथा । त्र्यहंशीतपिवेत्तोयत्र्यहमशीतंपय पिवेत् । त्र्यहशीतधृतपीत्वावायुभ च्य, परंत्र्यहमितियमस्मृतिः ॥

शीतचारम् । न॰ श्वेतटङ्कणे ।

शीतगन्ध । पु॰ श्वेतचन्दने ॥

शीतगु । पु॰ चन्द्रे ॥

शीतचम्पक । पु॰ चातपर्के । त पर्वे ॥ दिमे ॥ दीपे ॥ दर्पणे ॥

शीतपर्णी । स्त्री॰ अर्कपुष्पिकायाम् । सूयवल्लाम् ॥

शीतपाकिनी । स्त्री॰ महासमङ्गाया म् ॥ काकोल्याम् ॥

शीतपाकी । स्त्री॰ वाव्यालकी ॥ गुञ्जा याम् ॥ काकोल्याम् ॥

शीतपुष्प । पुं॰ अर्कवृक्षे ॥ शिरीषे ॥ न॰ परिपेलि ॥ शैलेये ॥

शीतपुष्पक । पुं॰ अर्कवृक्षे ॥ न॰ शैलेये ॥

शीतपुष्पा । स्त्री॰ अतिबलायाम् ॥

शीतप्रभ । पु॰ कर्पूरे ॥ त्रि॰ शीत लप्रभायुक्ते ॥

शीतप्रिय । पुं॰ पर्पटे ॥ त्रि॰ शी तलप्रीतियुक्ते ।

शीतफल । पुं॰ उदुम्बरे ॥ बहुलवा रे । श्रीलौ ॥ पीलौ ॥ शीतानिफ लानियस्य ॥

शीतबला । स्त्री॰ महासमङ्गायाम् ॥

शीतभानु । पु॰ चन्द्रे ॥ शीताभा नव किरणायस्य ॥

शीतभीत । त्रि॰ शीतार्ते ॥

शीतभीरु । स्त्री॰ मल्लिकायाम् ॥ शीतात् भीरु ॥ त्रि॰ शीतभी ते ॥

शीतभीरुक । त्रि॰ शीतार्त
शीतभीरुका । स्त्री॰ मल्लिकायाम् ॥
शीतमञ्जरी । स्त्री॰ शेफाल्याम् ॥
शीतमयूख । पु॰ चन्द्रे ॥ कर्पूरे ॥
शीतमरीचि । पु॰ इन्दे । कर्पूरे ॥
शीतमूलकम् । न॰ उशीरे ॥
शीतरम्य । पु॰ प्रदीपे । त्रि॰ शीतेरमणीये ॥
शीतरश्मि । पु॰ चन्द्रे ॥ कर्पूरे ॥
शीतरस । पु॰ शीधुप्रभेदे ॥
शीतल । पु॰ असनपर्याम् ॥ अर्हद्विशेषे ॥ सुधांशौ । चन्द्रे । व्रतविशेषे ॥ चम्पके ॥ बहुवारके ॥ धूनके । राले ॥ कर्पूरभेदे ॥ न॰ पुष्पकासीसे ॥ शैलजे ॥ मलयोद्भवे । चन्दने ॥ पद्मके ॥ मौक्तिके ॥ श्वेत्ये । वीरणमूले ॥ त्रि॰ सुशीमे । शिशिरे ॥ शीतगुणोऽस्यास्ति । सिध्मादित्वाल्लच् ॥ शीतलातिवा । लात्वादाने । आतश्चेति कः ॥
शीतलक । पुं॰ मरुवके ॥ न॰ सितोत्पले ॥
शीतलच्छद । पु॰ चम्पके ॥ शीतलपत्रे ॥
शीतलजलम् । न॰ उत्पले ॥ शिशिरोदके । शीताम्बुनि ॥ यथा मूर्च्छापित्तोष्णदाहेषु विषेरक्तेमदात्यये । भ्रमेश्रमेविदग्धेन्नेतमकेव मथौतथा । ऊर्ध्वगेरक्तपित्ते चशीतमम्भः प्रशस्यते ॥ पार्श्वशूले प्रतिश्यायेवातरोगेगलग्रहे । आध्माने स्तिमितेकोष्ठे सद्यःशुद्धौ नवज्वरे ॥ अरुचिग्रहणीगुल्मश्वासकासेषु विद्रधौ । हिक्कायांस्नेहपाने च शीताम्बु परिवर्जयेत् ॥
शीतलत्वम् । न॰ शीतलतायाम् ॥ जडत्वे ॥
शीतलत्वकम् । न॰ शीतलत्वे ॥
शीतलप्रद । पु॰ चन्दने । त्रि॰ हिमदातरि ॥
शीतलमम् । न॰ तीर्थविशेषे ।
शीतलशातक । पु॰ असनपर्याम् ॥
शीतला । स्त्री॰ शीतलीतृणे ॥ यथा । शीतलाशीतलीशीतकुशीघ्राखुरपुष्पकेतिशब्दचन्द्रिका ॥ कुट्टिन्याम् । जलेरुहायाम् ॥ वालुकायाम् ॥ आरामशीतलायाम् ॥ देवताविशेषे । विस्फोटकविशेषाधिष्ठात्र्याम् ॥ यथा । नमामिशीतलादेवीरासभस्थांदिगम्बरीम् । मार्जनीकलशोपेतासूर्यालङ्कृतमस्तकामितिस्कान्दपुराणम् ॥
शीतली । स्त्री॰ जलजतृणविशेषे । शीतकुम्भ्याम् ॥ कालानुसारि

नेनवा । शीलमसाधौ॰ यथान्ता हा॰ घञ॰ घीवा । यद्वा । शीङोधुकसकवलञबालनइति॰ ल क । अर्हद्वांदि ॥

शीलनम् । न॰ पाठनिश्चये । गुण न्याम् । भविन्याम् ॥

शीलवान् । त्रि॰ सुखभाववति । सुशीले । सद्वृत्ते ॥

शीलहीन । त्रि॰ अनियतपुस्कं दाश्याद्दिजने ॥

शीला । स्त्री॰ कौण्डिन्यमुने पत्न्याम् ॥

शीलितम् । न॰ शीर्णे ॥ त्रि॰ अभ्यस्ते ॥ शील्यतेस्म । शील॰ । त ॥

शीली । त्रि॰ शीलवति ॥ शीलमस्यऽस्य । सुखादिभ्यश्चेतीनि ॥

शीवा । पु॰ अजगरे ॥ शेते । शीङ् स्वप्ने । शीङ्कुशिरुहिजिचिद्धिभ्य क्वनिप् ।

शीवलम् । न॰ शैलेये ॥ शैवाले ॥ जले शेते तिष्ठति शीङो वलन् । बाहुलकाद्गुणाभाव ॥

शु । अ॰ पूजायाम् ॥ आश्चर्ये ॥

शुक । पु॰ व्याससुते । बादरायणौ ॥ कीरे । मेधाविनि । फलाशने । तोता॰ इ॰ भा॰ प्र॰ पक्षिणि । अशुभसूचकत्व यथाम सन्तराजे । वामं पठन्राजशुक

प्रयाणे॰ शुभंभवेद्दक्षिणत प्रविशे । वनेचरा काष्ठशुका प्रयातु स्यु सिद्धिदा सम्मुखमापतन्त । इति ॥ रावणस्यमन्त्रिणि । शिरीषवृक्षे ॥ न॰ ग्रन्थिपर्णे ॥ वस्त्र । वस्त्राञ्चले ॥ शिरस्त्रे । शोचति॰ शवतिवा । शुचशोके॰ शुगतौवा । शुकवल्कोल्काइतिसाधु ॥ शोभते । शुभदीप्तौ । पूर्ववत्साधु ॥ यद्वा । शोकति । शुकगतौ ॥ इगुपधेतिक ॥

शुकच्छदम् । न॰ स्थौणेये ॥

शुकजिह्वा । स्त्री॰ शुकनासायाम् । सुवाठोठी॰ इ॰ भा॰ प्र॰ ॥

शुकतरु । पु॰ शिरीषवृक्षे ॥

शुकतुण्ड : । पु॰ हिङ्गुलप्रभेदे ॥ सपीत शुकतुण्डक ॥

शुकद्रुम । पु॰ शुकतरौ ॥

शुकनासा । स्त्री॰ शुकजिह्वायाम् ॥

शुकनाशन । पु॰ दद्रुघ्ने ॥ त्रि॰ शुकनाशके ॥

शुकनास । पु॰ श्योनाकद्रुमे ॥ शुकनासेवपुष्पमस्यास्ति । अर्शआद्यच् ॥ त्रि॰ शुकवन्नासायुक्ते ॥

शुकपिण्डि । स्त्री॰ शूकशिम्ब्याम् ॥

शुकपुच्छ । पु॰ गन्धके ॥ शुकस्य लाङ्गूले ॥

शुकपुच्छकम् । न॰ स्थौणेये ॥

विदार्याम् ॥ शुभवधायाम् ॥ टाप् ॥
शुक्लाङ्गी । स्त्री॰ शेफालिकायाम् ॥
शुक्लापाङ्ग । पु॰ मयूरे ॥ त्रि॰ शुक्लवर्णनेत्रान्ते ॥
शुक्लार्जक । पु॰ सितपर्णासे । वर्बरप्रभेदे ॥
शुक्लार्मन् । न॰ चक्षूरोगविशेषे ॥ शुक्ले तस्मिन्शुक्लार्मशुक्लतरत्रैतीचिरात् ॥
शुक्लिमा । पु॰ शुक्लत्वे ॥
शुक्लोपल । पु॰ श्वेतपाषाणे ॥
शुक्लोपला । स्त्री॰ शर्करायाम् ॥
शुचि । पु॰ वायौ ॥ तैजसि । चित्रे ॥ शुच्यति । शुचशौचार्थे ॥ शुचिकुशिशुचिभ्य किः ॥
शुङ्गः । पु॰ न॰ वटे । आम्रातके ॥ पर्कट्याम् । अङ्कुरे । आर्ये ॥
शुङ्गा । स्त्री॰ अश्वत्थे ॥ नवपल्लवकोश्याम् ॥
शुङ्गाकर्म । न॰ पुंसवनसंस्कारविशेषे ॥
शुङ्गी । पुं॰ अश्वत्थ ॥ वटद्रुमे ॥
शुच् । स्त्री॰ शोके ॥ शोचनम् । शुचशोके । सम्पदादित्वात्क्विप् ॥ वक्षप्राप्तेस्त्वां पितरितनयैवाशुद्विवा॰ शुचासन्तप्यन्ते भ्रममुदरता-डनडधिय. । असारेसंसारेविरसपरिणामेतुविदुषांवियोगोवैराग्यद्रढयतिवितन्वन्शमसुखम् ॥
शुचा । स्त्री॰ शोके ॥
शुचि । पु॰ ग्रीष्मे ॥ अग्नौ ॥ सौराग्नौ ॥ यथा । पावक पवमानश्च शुचिरग्निस्त्रयस्त्वथ । निर्मथ्य' पवमानः स्याद्वैद्युत पावक स्मृत. ॥ यश्चासौतपतेसूर्य. शुचिरग्निस्त्वसौस्मृत । तेषान्तुसन्तताबभ्वुश्चत्वारिंशच्चपञ्च ॥ पावक' पवमानश्चशुचिस्तेपांपिताश्च: । एतेषांस्थानपञ्चाशच्चक्रश्च परिकीर्त्तिता. ॥ कू॰ कौर्मे १२ अध्याय ॥ चित्रके ॥ शृङ्गाररसे ॥ उत्तमयुवप्रकृतिकत्वेन॰ जुगुप्सार्हितत्वात्॰ शुचि शृङ्गाररस ॥ आषाढेमासि ॥ शुचिपवित्र करोति॰ शुचयति । तत्करोतीतिण्यन्तात्च ॥ यद्वा । शोचति । अन्तभावितण्यर्थाच्छुचे रगुपधात्किदितीन् ॥ शोच तिविरहिणोऽस्मिन्निति वा । शोचत्यनेनवा॥विदुषि ॥ शोचतिजनङ्क्लिश्यमानम् ॥ उपदाशुद्धसचिवे । ज्येष्ठमासे ॥ स्त्री॰ कश्यपपत्न्यास्ताम्राया सुतायाम् ॥ त्रि॰ धवले ॥ शुद्धे ॥ यथा । आसनशयनयानंस्वपात्रं कमण्डलुम् । आत्मन . शुचिरेतानिपरेषामशुचीनितु ॥ स्वभावत ' सत्कारतश्चशुद्धे ॥ बाह्याभ्यन्तरशौचसम्पन्न ॥ वी

सिद्धापिगृह्यतेदुग्धपलादिक । चि
त्तायां पलचैकसर्वेषापिपिण्डका
भवेत् ॥ हन्त्यशीतिमातरोगानच
त्वारिंशच्चपित्तजान् । विंशतिश्ले
ष्मसम्भूतानष्टौचापिज्वरोद्भवान् ॥
दशमूत्रभवानरोगानन्यानपिनि
वारयेत् । मध्योषधप्रसादेनपरम
सुन्दरीभवेत् । द्रुतिपाकावली ॥

शुण्ठाम् ।) न॰ शुण्ठाम् ॥
शुण्ठाक ।) पु॰

शुण्ड । पु॰ मदनिर्भरे ॥

शुण्डक । पु॰ मण्डहारके ॥ युद्ध
वेणौ ॥

शुण्डरोह । पु॰ भल्लूके ॥

शुण्डा । स्त्री॰ मद्यपानासक्ते । ज
लहस्तिन्याम् ॥ वेश्यायाम् ॥ ह
स्तिहस्ते ॥ सुरा॰ ॥ नलिन्या
म् ॥ शुन्यके । शुनगती । अम
न्ताङ्ग ॥

शुण्डापानम् । न॰ मदस्थाने ॥

शुण्डार । पु॰ शौण्डिके । स्वल्प
शुण्डायाम् । ह्रस्वाशुण्डा । कु
टीशमीशुण्डाभ्योर ।

शुण्डाल । पु॰ हस्तिनि ॥

शुण्डी । पु॰ शौण्डिके ॥

शुण्डमषिका ।) स्त्री॰ छुच्छुन्द
शुण्डमूषी ।)
र्याम ॥ हू॰ रा॰ नि॰ वट॰ ॥

शुण्डी । स्त्री॰ हस्तिशुण्डावृक्षे ॥

शुतुद्रि । स्त्री॰ शतद्रुसरिति ॥ शु
प्लवितनुदति । तुद॰ । ह्रगुपधा
त्किदितौन् । वाहुलकाद्रुक ॥

शुदि । अ॰ शुक्लपक्षे ॥

शुद्धम् । न॰ मरिचे ॥

शुद्ध । त्रि॰ पूते । पावने ।
अशुद्धिरहिते । निर्मले । नि
र्लेपे ॥ निर्दोषे ॥ शुक्ले ॥ रा
गान्तरामिश्रितरागे ॥ प्रसन्ने ॥
नित्यनिरस्तसमस्तदोषपरसंश्लिष्ट्रूपे
॥ शुद्ध्यतिशुद्ध्यतेऽनेनवा । शु
धशौचे । क्त । प्रशस्ताशुद्धिर
स्यवा । अर्शआद्यच ॥ अहरहित
भवने ॥ रागाद्यशुद्धिरहितेपर
मात्मनि ॥

शुद्धचैतन्यम् । न॰ सर्वधर्मातीते ॥

शुद्धकर्ण । पु॰ शुक्लकर्णे ।
गर्भे ॥

शुद्धदत् । त्रि॰ शुक्लदन्तयुक्ते । शु
द्धदन्ते । शुद्धादन्तायस्यस ॥
अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्चेति
पक्षेदन्तस्यदत्रादेश ॥

शुद्धमति । स्त्री॰ पवित्रमतौ । सु
मतौ त्रि॰ सुमतिविशिष्टे ॥ प
वित्रबुद्धियुक्ते ॥ शुद्धासौमतिश्च
॥ शुद्धामतिर्यस्यस । पु॰ च
तुर्विंशतिभूताहर्दन्तर्गतजिनविशे
षे ॥

शुद्धमांसम । न॰ मांसव्यञ्जन

यथा । स्मरणाच्छिन्नमाहापि पीड्य
तेसद्विपातकात् । तेनशुद्धिं समा
प्याता देवीकद्रुतनौस्थितेति ॥ शुचि
स्त्रियाक्षिन ॥ देवतायैसुराप्रदाने
द्रव्यान्तरसञ्चायाम ॥ यथा । मास
मीनश्चमुद्राश्चफलमूलानियानिच ।
सुधादानेदेवतायैसञ्चैषाशुद्धिरी
रितेति ॥

शुद्धिलाभ । पु॰ प्रायश्चित्ते ॥

शुद्धोदन । पु॰ नृपविशेषे ॥ शुद्धो
दनोऽऽ । शाक्यादि ॥ शुद्धौ
दनीयसौ भुङ्क्ते न्यायवच्छुद्धमोदन
म् ॥

शुद्धोदनसुत । पु॰ शाक्यमुनौ ॥

शुन । पु॰ वायौ ॥ कुक्कुरे ॥ य
थाह वाचस्पतिः । कुक्कुरस्तुशु
नि श्वान कपिलोमण्डल शु
नइति ॥

शुनःशेप । ) पु॰
शुनःशेफ । ) न॰ मुनिविशेषे । अ
चीकमुनिपुत्रे । शाजीगर्त्ते ॥

शुनक । पु॰ कुक्कुरे । शुनति ।
शुनगतौ । कुन्शिल्पिसञ्ज्ञयोरपू
र्वस्यापि ॥

शुनकचञ्चुका । स्त्री॰ क्षुद्रचञ्चुक्षुपे ॥

शुनकचिल्ली । स्त्री॰ शाकविशेषे । श्वा
नचिल्लिकायां ॥

शुनाशीर । पुं॰ इन्द्रे ॥ शुनौवायु
॰ शीर॰ सूर्य ॰॰ तावस्य ।

अर्थश्चायच् । अन्येषामपीतिदी
र्घ ॥ शुनाशीरोऽत्रतालव्य शु
नासीरोऽपिदन्त्यक । तालव्यादि
दन्त्यमध्य शुनासीरश्चदृश्यते ।
इतिभरत ॥

शुनासीर । पु॰ इन्द्रे । पुरुहूते ।
पुरन्दरे ॥ शुइत्यव्ययस्यपूजार्थक
त्वात् शोभननासीरसेनाविशेषो
यस्य ॥ यद्वा । शुनौवायु सी
रश्चादित्य ॰ शुनश्चसीरश्चेति ।
देवताद्वन्द्वेचेत्यानङ् इतिदीर्घत्वका
र । दन्त्यतालीयपाठौबहुसम्मत ॥

शुनासीरीयन । न॰ शुनासीर्य ॥
शुनासीरौदेवताऽस्येत्यर्थे॰ द्यावा
पृथिवीत्यादिनाछ ॥

शुनासीर्यम् । न॰ शुनासीरीये॰ ह
विरादौ । शुनासीरौदेवताऽस्येत्य
र्थे॰ द्यावापृथिवीशुनासीरमरुत्व
दग्नीषोमवास्तोष्पतिगृहमेधाच्छचे
ति॰ चायत् ॥

शुनि । पु॰ कुक्कुरे । सारमेये ॥

शुनी । स्त्री॰ कुक्कुर्याम् ॥ अश्वाख्या
च शुनीत्यमर ॥ कुष्माण्डाम्
॥ गौरादित्वान ङीष् ॥

शुनीर । पु॰ कुक्कुरीसमूहे ॥ इति॰
वि॰ ईप ॥

शुन्ध्यु । पुं॰ अग्नौ ॥ शुन्धति । शु
न्धशुद्धौ । यजिमनिशुन्धिदसिज
निभ्योयुच् ॥

सर्मवनस्तथापरः । एतैशुषिरभे दास्तुकथिता पूर्वसूरिभिरिति ॥ विवरे ॥ त्रि॰ सरन्ध्रे । रन्ध्रान्विते शुषिश्छिद्रमस्यास्मिनवाऽस्ति । अशआद्यजितिरः ॥ यद्वा । शुष्यति । शुष शोषणेदिसुदौतिकिरच ॥ शुष्कपीत्यन्य ॥

शुषिरा । स्त्री॰ नलीनामगन्धद्रव्ये ॥ शुषिराविद्रुमलताकपोतांघ्रिर्नटौनलीत्यमरः ॥ शुषिरमस्त्यस्य अर्शआद्यच् ॥

शुषिल । पु॰ समीरणे । वायौ ।

शुष्क । त्रि॰ नीरसे ॥ शुषिते । शुष क्तः इति॰ निष्ठातकारस्य ककार ॥ यद्वा । शुष्यति । शुष॰ । स्वभृशुषिमुषिभ्य कक ॥

शुष्कतर्क । पु॰ दुस्तर्के । अनुयाग्यकमानहीनतया॰ निरालम्बने॰ ऽहंवैनाशिकादिकल्पिते ऽनुमाने ॥

शुष्कपत्रम् । न॰ नीरसदले ॥ आतपादिशोषितपत्रशाके । मालिता॰ शुक्ता॰ द्रु॰ गौ॰ दे॰ भा॰ प्र॰ ॥ अस्यगुणायथा । शुष्कपत्रपत्रैर्निम्र पित्तश्लेष्मज्वरापहम् । तच्छुष्कपत्र जलदोषनाशनंविशेषत पित्तकफज्वरापहम् । जलस्नतस्यापिचपित्तहारकसुरोचनव्यञ्जनयोगकारकमितिराजवल्लभ ॥

शुष्कमत्स्य । पु॰ आतपादिनानीरसीमीने ॥ शुष्कमत्स्यानवल्या : स्युर्दुर्जराविड्विबन्धना ॥

शुष्कमासम् । न॰ आतपादिना॰ अनार्द्रपिशिते । उत्तप्ते । वल्लूरे ॥ यथा । द्वादानादोषलमास॰ बोलाबलनलघु । त्रिदोषक्रुद्दयालघु इ शुष्कमूलकारगुरु ॥

शुष्करेवती । स्त्री॰ मातृकाविशेषे ॥

शुष्काल । त्रि॰ आसिषे ॥ शुष्कमासस्यापणिके । पिशिताशिनि ॥ शुष्कालीमर्त्त । शेषवृत्त्यण् । सज्ञापूर्वकत्वाद्वृद्भाव ॥

शुष्कली । स्त्री॰ शुष्कमासे ॥ मासमात्रे ॥

शुष्कवृक्ष । पु पाण्डुतरौ । धवे ॥

शुष्कव्रण । पु॰ किणे ॥

शुष्काङ्ग । पु॰ धवद्रुमे ॥ त्रि॰ निर्जलावयवे ॥

शुष्काङ्गी । स्त्री॰ गोधायाम ॥

शुष्कार्द्रम न॰ शुण्ठ्याम् ॥

शुष्म । पु॰ सूर्ये ॥ वह्नौ ॥ शुष्यत्यनेन । शुष॰ । इषियुधिन्धिदसिश्याधूसूभ्यो मक् इति मक् ॥

शुभ्र । पु॰ सूर्ये ॥ अग्नौ ॥ अर्चिषि ॥ न॰ तेजसि ॥ ओजसि । बले ॥ शुष्यतिजलम्॰ शुषिरन्तर्भाविणर्थात्॰ अर्चिर्सि

सिञ्‌चिभ्य किदितिमनप्रत्यय शुष्यत्यनेनवा । शुष॰ ॥

शुष्म । पु॰ अग्नौ । चित्रकवृक्षे ॥ सूर्य्ये । न॰ तेजसि ॥ शुष्यत्यनेन । शुष॰ । अर्त्तिभ्योपीतिमनिन् सत्वापूर्वकत्वगुण ॥ शोषयतिवा । बाहुलकात्‌ मलुक् ।

शुष्मा । त्रि॰ बलिष्ठे । मत्ते ॥ अत्यर्थेऽपिन ॥

शूक । पु॰ शूङ्गे । अग्रभागोत्थाग्रे । किंशारावन्यस्मिन॰ अग्रभागोत्थाग्रे । समग्रादिरन्यवहबिकादिरुपटवी ॥ श्यति । शीतशूकरवा । उल्कादयश्चेतिसाधु ॥ दयायाम् । न॰ शूकतृणे ॥

शूकक । पु॰ प्रावृटे । यवे । रसे

शूककीट । पु॰ वृश्चिके ॥ शूकाण्ड कीट । शूकयुक्त कीट । शाकपार्थिवादि ॥ शर्यादिभक्षक कीटविशेषाह्वयक शूककीटश्च॰ भ्रमरप्रभेदोयम् ॥

शूककीटक । पु॰ शूककीटे ॥

शूकतृणम् । न॰ तृणविशेषे । शूकै । शूकाढ्य । कनिष्ठकी ॥ शू॰ रा॰ राट ॥

शूकधान्यम् । न॰ यवगोधूमादौ ॥ शूकस्यधान्यम् ।

शूकपिण्डिका । ) शूकपिण्डी । ) स्त्री॰ शूकशिम्ब्याम् ॥

शूकर । पु॰ कृमिचरविशेषे । वराहे क्रोडे । शूकोऽस्यस्त॰ स्वरोस्मात् । र ॥ यद्वा । शूकरोति । रा॰ चालहतिक ॥ यद्वा । शू॰ इति ध्वनिकरोति । अच्॰ टावा ॥ मालिविशेषे ॥

शूकरकन्द । पु॰ वाराहीकन्दे ॥

शूकरपादिका । स्त्री॰ कोलशिम्ब्याम् । सुकरासिमहतिभपापमिधायाम ॥

शूकरमुखम् । न॰ नरकविशेषे ॥

शूकराक्रान्ता । स्त्री॰ वराहक्रान्तायाम् ॥

शूकरी । स्त्री॰ शूकरस्त्रियाम् । जातेरितिङीष् । इन्द्रस्यशुचिशूकपस्यपसुखेद खवनास्यन्तरस्वैच्छा कामनयोतयोरपिसुखविद्यावन्त्यास्यामनम् । रम्भोपाशुचिशूकरोवपरमप्रेमास्पदंमत्तुत समासोपि सम । एककर्मगतिमिमान्यान्यभाव सम । वराहक्रान्तायाम् ।

शूकरेष्ट । पु॰ कशेरुणि । त्रि॰ शूकरप्रियवस्तुनि ॥

शूकल । पु॰ दुर्विनीताश्वे ।

शूकवान् त्रि॰ शूकयुक्ते ।

शूकवती । स्त्री॰ कपिकच्छ्वाम् ।

शूकशिम्बा । ) स्त्री॰
शूकशिम्बि । ) पुं॰ कपिकच्छ्वाम् ॥
शूकशिम्बिका । ) स्त्री॰
शूकशिम्बी । )

अविद्यजीवनशून्य दिकशून्याचेद्
बान्धवा । पुत्रहीनगृहशून्यसर्वशू
न्यादरिद्रता ॥ खपुष्पादिवदत्यन्ता
भावरूपे ॥ यथा । मृगतृष्णाम्भ
सिस्नात खपुष्पकृतशेखर । ए
षवन्ध्यासुतोयातिशशशृङ्गधनुर्द्धर
॥ शुनेर्हितम् । शुन सम्प्रसा
रणञ्चावदीर्घत्वमितियत् ॥

शून्यकम् । न० शून्यार्थे ॥ त्रि० तु
च्छे ॥ शून्यरिक्तइतियावादिषुपा
ठात्कन् । स्वार्थेकोवा ॥

शून्यता । स्त्री० चित्तस्यदोषे । राग
द्वेषादितीव्रवासनयाचित्तस्यस्तब्धी
भाविकषाये । चुक्षतायाम् ॥ ध्या
नचिन्ताहितानाम् शून्यताख्या
सतापकृत् ॥ शून्यस्यभाव. तल् ॥

शून्यतिथि । स्त्री० तिथिविशेषे ॥ यथा
। अष्टमीनवमीचैवपक्षयोरुभयोर
पि । माधवेद्वादशीख्यातापक्षयोरु
भयोस्तथा । ज्येष्ठेचयोदशीनि
न्द्यासिते० कृष्णेचतुर्दशी । आ
षाढेकृष्णपक्षस्यषष्ठी० शुक्लेच
सप्तमी । द्वितीयाचतृतीयाचश्राव
णेसितकृष्णयो । प्रथमाचद्विती
याचनभस्येमासिनिन्दिता ॥ इष
स्येकादशीनिन्द्या० मासीषिशुक्ल
कृष्णयो । ऊर्ज्जचतुर्दशीशुक्लाकृ
ष्णपक्षेतुपञ्चमी ॥ सप्तमीचाष्टमी
सौम्येपक्षयोरुभयोरपि । पौषेपक्ष
द्वयेचैवचतुर्थीपञ्चमीतथा ॥ मा
घेतुपञ्चमीषष्ठीकृष्णेशुक्लेयथाक्रम
म् । तृतीयाचचतुर्थीचफाल्गुने
सितकृष्णयो ॥ तिथयोमासशू
न्याख्याबित्तवंशविनाशिका । आ
सुश्राव प्रकुर्वीतनैवमङ्गलमाचरे-
दितिवशिष्ठ ॥

शून्यनक्षत्रम् । न० शून्यभे ॥ यथा
। अश्विनीरोहिणीचैवशून्यभेपरि
कीर्त्तिते । चित्रास्वातीचवैशा
खे० ज्येष्ठेविश्वेज्यतारके ॥ भग
वासवमाषाढे० श्रावणेहरिविश्व
भे । नभस्येवारुणाख्यञ्चमजपा
दश्वयुज्यपि ॥ कार्त्तिकेपितृवह्न्यु
क्षेसौम्येचित्रादिदैवते । पौषेद्रा
क्षश्वरार्द्रौ सार्पेमाघेमूलश्रविष्णु
भम् ॥ तपस्येशक्रभरणीशून्यभा
न्याहुरग्रजा. । एषुयस्तुकृतकर्म
धनैस्सद्वविनश्यति ॥

शून्यभम् । न० शून्यनक्षत्रे ॥

शून्यमध्य । पु० नले । पोट
गले ॥

शून्यराशि । पु० मासविशेषगत
राशिविशेषे ॥ यथा । घटमत्स्य
वृषायुग्म मेष कन्या सवृश्चि
का. । तुलाचापकुलीराख्यामृ
गसंज्ञाश्च राशय ॥ चैत्रा
दौराशिशून्याख्याबित्तवंशविना-
शदा. ॥

शूर्प्प । पु० द्रोणद्वयात्मकपरिमाणे ॥ पुं० न० प्रस्फोटने । सूप० इ० भा० । शूर्पयति । शूर्प्यतेऽनेनवा । शूर्पमाने । पचाद्यच् । पुंसीति घोषा ॥ यद्वा । शृणाति । शॄ० । सुशॄभ्यांनिच्चेतिप । बाहुलकादुत्वम् । रपरत्वम् । हलिचेतिदीर्घ ॥ न० शोणितभाजने ॥

शूर्प्पक । पु० कामदेवारातासुर विशेषे ॥

शूर्प्पकर्ण । पु० गजे । नागे । गणेशे । विघ्नराजे ॥ शूर्पाविवकर्णौ यस्य ॥

शूर्प्पकाराति । ) पुं० कामदेवे ।
शूर्प्पकारि । )

शूर्प्पणखा । स्त्री० रावणभगिन्याम् ॥ शूर्प्पवन्नखानियस्याः । पूर्वपदात्संज्ञायाम् । नखमुखात्संज्ञायामितिनङीष । केवलयौगिकत्वे तु ङीष् ॥

शूर्प्पणखी । स्त्री० रावणस्वसरि ॥ शूर्पं शोणितभाजनम् । नखविदूषणादितिधातुः । शूर्पेण शोणित भाजनेनयज्ञादिक्रियानखयतिदूषयतीतिशूर्पणखी ॥ यद्वा । शूर्पाकाराणिनखानियस्याः । साङीष् ।

शूर्प्पपर्णी । स्त्री० मुद्गपर्ण्याम् ॥

शूर्प्पवात । पं० सूर्पवायौ । कुक्कुफाले ॥

शूर्प्पश्रुति । पु० हस्तिनि ॥ इ० हा० ली ॥

शूर्प्पी । स्त्री० शूर्पणखायाम् ॥ गौरादित्वान ङीष् ॥ क्षुद्रसूर्पे ॥

शूर्म्म । पु० )
शूर्म्मि । स्त्री० )
शूर्म्मिका । स्त्री० ) शूर्मिकायाम्
शूर्म्मी । ) । लौहप्रतिमायाम् ॥

शूल । पुं० न० आयुधविशेषे वर्छी० भाला० इ० भा० प्र० । मृत्यौ ॥ वेतने ॥ विष्कम्भादिषुनवमयोगे० तत्रजातस्यफल यथा । भीतोदरिद्रोदयिताप्रियस्यशूलोङ्कस्य शूलङ्करस्वस्यौ । विद्यामयाभ्यारचितोथशूलोकरोतिले केनहितंकदाचित् ॥ सुतीक्ष्णे ॥ वधहेतावग्र कीलके ॥ व्यथायाम् ॥ विक्रेतव्ये ॥ यथा । अट्टशूलाजनपदा शिवशूलाश्चतुष्पथा । प्रमदा. केशशूलिन्योभविष्यन्तिकलौयुगे ॥ इतिमहाभारते आदिपर्व ॥ रोगविशेषे ॥ अस्यदानादिकं भावप्रकाशे० शूलाधिकारेद्रष्टव्यम् ॥ राजकोरादिमध्यान्ते पुनराग्न्यादिमध्यत । मध्येचान्ते तथा दौषदोषैर्नाल्पातिशूलकम् ॥ भुक्ते जीर्यतिजीर्णेऽन्ने जीर्णे भुक्ते चजीयति । जीर्येजीर्यतिभुक्ते चदोषैर्नाल्प॰

तिरुक्क्रमात् ॥ | दोषैर्वातपित्तकफैः शूलरुक् शूलाख्यो रोगः । रात्रिश्च अहश्च रात्र्यहनी तयो रात्रिमध्यान्तेषु भागेषु वातेन शूलरुक् न भवति शमं प्राप्नोति । अल्पा भवति ईषत् प्रादुर्भवति । अतिभवति च अत्यन्तं भवति ॥ रात्र्यह्नोरन्त्यादिमध्यतः अन्त्यादिमध्येषु पित्तेन शूलरुक् न भवत्यल्पात्यन्ता च भवति ॥ तयोरेवं मध्येऽन्त्ये चादौ च कफेन शूलरोगो नाल्पोऽतिभवतीत्यर्थः ॥ भुक्त इति । अन्ने भुक्ते अभ्यवहृते सति जीर्यति पाकं गच्छति । जीर्णे पाकं गते अन्ने इति सर्वत्र सम्बध्यते । तेनायमर्थः । भुक्ते अन्ने वातशूलरुक् न भवति शान्तो भवतीत्यर्थः । जीर्यति च अल्पा भवति । जीर्णे चातिभवति ॥ पित्तशूलरुक् जीर्णेऽन्ने । भुक्तेऽल्पा । जीर्यति चातिभवतीत्यर्थः ॥ शूलरुक् जीर्णेऽन्ने । जीर्यति त्वल्पा । भुक्तेऽतिभवति ॥ शूलेति । शूलरुजायाम् । कृष्णपर्पटिका ॥

शूलधान्य । स्त्री० मालादूर्वायाम् ॥

शूलघातनम् । न० मण्डूरे ॥

शूलघ्न । पु० तुम्बुरुवृक्षे । तीक्ष्णफले ॥ त्रि० शूलघातके ॥

शूलद्विट् । पु० हिङ्गुनि ॥

शूलधन्वा । पु० शर्वे । शिवे ॥

शूलधर । पु० शिवे ॥ त्रि० शूलधारिणि ॥

शूलधरा । स्त्री० दुर्गायाम् ॥

शूलधारी । पु० शूलिनि ॥

शूलधारिणी स्त्री० दुर्गायाम् ॥

शूलधृक् । पु० शिवे ॥ स्त्री० दुर्गायाम् ॥

शूलनाशनम् । न० सौवर्चललवणे ॥

शूलपर्णी । स्त्री० गौड़देशे शूलीतिख्यातेतृणे ॥

शूलपाणि । पु० ईश्वरे । शिवे ॥ शूलपाणिरुद्रस । प्रवरवाद्यैभ्य परेनिष्ठासमम्योभवत ॥

शूलप्रोत । पु० नरकविशेषे ॥

शूलभृत् । पु० शङ्करे ॥

शूलशत्रु । पु० एरण्डवृक्षे ॥

शूलहन्त्री । स्त्री० यवान्याम् ॥

शूलहृत् । पु० सूपधूपने । हिङ्गुनि ॥

शूला । स्त्री० पण्ययोषिति । दुष्टवाद्यकौतकी ॥

शूलाकृतम् । त्रि० शूलविद्धपक्वमांसादौ । भटित्रे । शूल्ये । शूला० कृ० भा० प्र० ॥ शूलिनकृतम् । शूलात्पाकदूरितिडाच् ॥

शूलिक । पु० शशके ॥ न० शूल्यं अङ्गारपरिपाचितमांसे ॥

शूली । पु० शिवे । महेश्वरे ॥ यथा

। शूलं शूलीचक्रमादाय चक्रीप। श
पाणीबज्रमादायवज्रीधावद्व्ययं पृ
ष्ठत पार्श्वतोवादुर्गादुर्गाभिर्दिनो
रक्षणाय ॥ त्रि० शूलरोगयुक्ते ॥
यथा । वर्जयेद्विदलं शूलीकुष्ठीमांस
ञ्चयोज्वरीमिति ॥ शूलमस्यास्ति ।
इनि ॥

शूलिन । पु० भाण्डीरवृक्षे ॥

शूलिनी । स्त्री० दुर्गायाम् ॥

शूली । स्त्री० तृणप्रभेदे । शूलपल्याम्
। धूम्रमूलिकायाम

शूलोत्खा । स्त्री० सोमराज्याम् ॥

शूल्यम् । त्रि० शूलके । लौहशलाका
यापक्वमांसि । शूलाकृते । शूले संस्कृ
तमांसम् । तत्र संस्कृतमित्यर्थे ० शू
लोखायत् । तत्पाकप्रकारो य
था । कोलखण्डानि मांसानि ग्रथि
तानि शलाकया । घृतसलवणं दत्त्वा
निर्धूमेदहनेपचेत् ॥ तत्तु शूल्यमि
ति प्रोक्तं पाककर्मविचक्षणैः । शू
ल्यं बल्यं सुधातुल्यं रुच्यं वह्निकरं लघु
। कफवातहरं बल्यं किञ्चित्पित्तक
रं हितत् ॥ अन्योपि । अङ्गारकर्प
रभ्राष्ट्रस्थूलयन्त्रपुटेथवा । भर्ज
नं विविधं प्रोक्तं सूपकारविशारदैः
॥ जलेनसहदर्यैतत्पूर्वप्रोक्तशूलान्तरा
न्तरम् । दध्यार्द्रकेङ्गुलवणैर्लि
प्तं स्वङ्गारपाचितम् ॥ तच्छूल्यन्तु
सुधातुल्यं रुच्यं वह्निप्रदं लघु । तद्वै
वाङ्गारतप्तन्तुमपक्ववातशातनम् ॥

शूल्यकम् । त्रि० शूलविद्धपक्वमांसे ।
भट्टिः ॥ शूल्यमेव । कन् ॥

शृगाल । पु० शिवायाम् । भूरिमा
ये । गोमायौ । मृगधूर्त्तके ॥ सि
याल० इ० भा० ॥ स्वजातिमायाम्
। सृज० आद्दलकात्कालन् । न्य
ङ्क्वादि । पृषोदरादि ॥ असृ
गालालिशा । पृषोदरादि । स्वर्ग
भिन्दिपालमनालिवा । पूर्ववत्
॥ तालव्यादि । तालव्यापिदन्त्या
च शस्वशस्वलशूकरा । श्यगालपि च
जिह्वायांशृगालः कलशोपिचेतिशि
ष्टभेदात् ॥ दैत्यभेदे ॥ वासुदेवे ॥
खले ॥ निष्ठुरे ॥ भीरौ ॥

शृगालकण्टक । पु० सियालकाटा इ०
भा० प्र० क्षुपे ॥

शृगालकोलि । पुं० क्षुद्रबदर्याम् ।
गोपघोण्टायाम् । भाडबेरी० इ०
भा० ॥

शृगालघण्टी । स्त्री० कोकिलाक्षे ॥

शृगालजम्बु । स्त्री० गोडुम्बे ॥
घोण्टाफले ॥

शृगालविन्ना । स्त्री० पृश्निपर्ण्याम् ॥

शृगालिका स्त्री० शृगालयोषिति ।
शिवायाम् ॥ लोमालिकायाम ।
दीर्घजिह्वायाम् । लोमडी० इ०
भा० प्र० ॥ त्रासात्पलायने । विद्रु
तौ । भागड० इ० भा० प्र० ॥

शृगाली। स्त्री० विद्रवे। डमरे। भीत्यापलायने॥ कोकिलाक्षे॥ विदारीम्। सियाला० इ० भा०॥

शृङ्खल। त्रि० पुंस्कटीवस्त्रबन्धे। कौपीनी० इ० भा० प्र०। पुंस्कटीभूषणे। तगडी० इ० भा० प्र०। निगडे। पुरुषप्रचारनिरोधके। लोहरज्जौ। बेडी० इ० भा० प्र०॥ बन्धने॥ शृङ्गं खलति। खलसञ्चये। अच्। पृषोदरादिः॥

शृङ्खलकः। पुं० दारुविकारशृङ्खलाप्रायबन्धनयुक्ते० करभे। करभास्तु शृङ्खलकाद्दारवैः पादबन्धनैरित्यमरः। शृङ्खलं बन्धनमस्य। शृङ्खलस्य बन्धनकारकत्वात् कन्। उष्ट्रे॥

शृङ्खला। स्त्री० पुंस्कटीवस्त्रबन्धे॥ निगडे॥ कपाटादिबन्धयोग्यवस्तुनि। सङ्खल० सांकर० इ० भा० प्र०॥ परम्परायाम्। परिपाट्याम्॥ शृङ्गं प्राधान्यं खलति। खल० । सञ्चये। अन्तर्भावितण्यर्थः। अच्। पृषोदरादिः॥ शृङ्गात् प्राधान्यात् खलत्यनेन। पुंसीति घ। भिदाद्यङ् वा। पृषोदरादिः॥ कोकिलाक्षे॥

शृङ्खली। )
शृङ्खलीका। ) स्त्री० कोकिलाक्षे॥

शृङ्ग। पुं० कूर्चशीर्षकवृक्षे। जीवकौषधौ। मुनिविशेषे॥ न० प्रभुत्वे॥ शिखरे। कूटे। पर्वतोपरिभागे॥ चिह्ने। क्रीडाम्बुयन्त्रे॥ विषाणे॥ उत्कर्षे॥ पर्वतसमभागे। सानौ॥ महिषादिशृङ्गनिर्मितवाद्यविशेषे॥ यथा। कश्चित् नारायणमौद्धरूजात प्रान्त समुत्थायययस्ययत्नपान्। प्रबोधयन् शृङ्गरवैर्धवारुवाविनिर्गतोयत्नपुरन्दरोपरि॥ शृणाति। शृ०। शृणातेर्ह्रस्वश्चेति० गन्नुट् च॥ कामोद्रेके॥

शृङ्गकः। पुं० जीवकवृक्षे॥ विषविशेषे॥ परीक्षास्य यथा। यस्मिन् गोशृङ्गकोषके दुग्धं भवति लोहितम्। स शृङ्गक इति प्रोक्तो द्रव्यतत्त्वविशारदैरिति॥

शृङ्गकन्द। पुं० शृङ्गाटके॥

शृङ्गजः। त्रि० शृङ्गजाते॥ न० अगुरौ॥

शृङ्गमूल। पुं० शृङ्गाटके॥

शृङ्गमोही। पुं० चम्पके॥

शृङ्गला। स्त्री० मेषशृङ्ग्याम्॥

शृङ्गवान्। पुं० इलावृतस्योत्तरवर्षस्य सन्धियोजनविस्तीर्णपूर्वतोदीर्घकुरुवर्षकमर्यादागिरौ॥

शृङ्गवेरम्। न० आर्द्रके। शुण्ठ्याम्॥ शृङ्गमिव वेरं शरीरमस्य॥ रामसिक्तनिषादाधिपतेर्गुहस्य पुरे॥

शृङ्गवेरकम् । न० चार्द्रके ॥
शृङ्गवेरपुरम । न० तीर्थविशेषे ॥ अयरामेगङ्गामुत्तीर्य ॥
शृङ्गवेराभमूलक । पु० गुन्द्रायाम् । गोंदपटेरा० इ० भा० प्र० ॥
शृङ्गाट । पु० चम्बुकएटके स्वादुकएटके ॥ कामाख्यादेशस्थपर्वतविशेषे । दीपवत्या पूर्वतस्तुशृङ्गाटीनामपर्वत ॥ न० चतुष्पथे ॥
शृङ्गाटक । पु० वारिकएटके ॥
शृङ्गाटकम् । न० चतुष्पथे ॥ वारिकएटके । सिँघाड़ा० इ० प्र० जलजलताफले ॥ गुणायथा । शृङ्गाटक हिमस्वादुगुरुवृष्य कषायकम् । ग्राहिशुक्रानिलश्लेष्मप्रदं पित्तास्रदाहनुत् ॥ मासशृङ्गाटके ॥ शृङ्गप्राधान्यमटति । अट० । कर्मण्यण् । सञ्ज्ञायाकन ॥
शृङ्गाटी । स्त्री० जीवन्त्याम ॥
शृङ्गार । पु० सुरते ॥ अगभूषणे । राजमण्डने ॥ मण्डने ॥ नाट्यरसे ॥ तल्लक्षण यथा । पुस स्त्रियां स्त्रिया पुसि संयोग प्रतियास्पृहास । शृङ्गारइतिख्यातोरतिक्रीडादिकारणम् ॥ अपिच । शृङ्गहिमन्मथोद्भेदस्तदागमनहेतुक । उत्तमप्रकृतिप्रायोरस शृङ्गारइष्यते ॥ इति ॥ शृङ्गमप्राधान्यमियर्ति । ऋ० । कर्मण्यण । यद्वा । शृङ्गा

रेण्टङ्गाराभिनि० शृङ्गारिरन० सुन० गुरु० इगुप । न० लव ङ्गे ॥ नागसम्भवे ॥ चूर्णे ॥ कालागुरुणि ॥
शृङ्गारक । पु० शृङ्गारे ॥ स्वार्थेक ॥ न० सिन्दूरे ॥ त्रि० शृङ्गवति ॥ शृङ्गमस्त्यस्य । शृङ्गवन्दाभ्यामारकन् ॥
शृङ्गारभूषणम् । न० सिन्दूरे ॥
शृङ्गारयोनि । पु० कामदेवे ॥
शृङ्गारित । त्रि० मण्डिते । अलङ्कृते । सिंगारा० इ० भा० ॥ शृङ्गारोमण्डन सञ्जातमस्य । तारकादित्वादितच ॥
शृङ्गारी । पु० गजे । द्विपे ॥ पूगे । क्रमुके ॥ पद्मरागे । माणिक्ये ॥ त्रि० सशृङ्गारे ॥ सुवेशे ॥ शृङ्गारोऽस्त्यस्मिन्नृषा । अतइनिठनाविति इनि ॥
शृङ्गि । स्त्री० मत्स्यविशेषे । मृङ्गाम् ॥
शृङ्गिक । पु० न० विषप्रभेदे ॥
शृङ्गिका । स्त्री० प्रतिविषायाम् ॥
शृङ्गिण । पु० मेषे ॥ शृङ्गमस्त्यस्य । ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नित्यादिनाशृङ्गादिनच् निपात्यते ॥
शृङ्गिणी । स्त्री० माहेय्याम् । सौरभेय्याम् । गवि ॥ शृङ्गमस्त्यस्या । अतइनि ॥

वृङ्शीङ्भ्यांरूपस्वागमौ फुट चेत्यसुन् ॥

शेपाल । पुं॰ न॰ शैवाले ॥ द्रू॰ श॰ र॰ ली ॥

शेफ । पुं॰ मेढ्रे । शिश्ने ॥ शेते रेत पातानन्तरम् । बाहुलकात् फप्रत्यय ॥

शेफ । पुं॰ मेढ्रे । शिश्ने ॥ शेतेरेत : पाते । शीङ्॰ । वृङ्शीङ्भ्यांरूपस्वांगयो फुट्चेत्यसुन् । अत्रपक्षगंद्वितीयोप्यागमे ॥

शेफसी । स्त्री॰ शिश्ने ॥

शेफालि । स्त्री॰ शेफालिकायाम् ॥

शेफालिका । स्त्री॰ सुवहायाम् । निर्गुण्ड्याम् ॥ नीलिकायाम् । हारशृङ्गार॰ पारिजात॰ द्रू॰ भा॰ प्र॰ पुष्पवृक्षे । शिउली॰ गौ॰ दे॰ भा॰ प्र॰ ॥ चत्वारि शेफालिकामात्रे । शियलीतिख्यातनीलपुष्पायांशेफालिकायामिति केचित् । शेफालिकाद्वयशेफालिकामात्रे॰ निर्गुण्ड्यादिद्वय नीलपुष्पशेफालिकायामितिकेचित् । न्यवारीतिख्यातेपुष्पविशेषे॰ इतिचान्ये ॥ शब्दरत्नावल्युक्ता . पर्यायास्तु । शेफाली॰ मल्लिका॰ रजनीहासा॰ निशिपुष्पिका॰ सा शुक्लाचेत्॰ श्वेतसुरसा॰ भूतवेशीति ॥ राजनिर्घण्टोक्तास्तु । शुक्लाङ्गीशीतमञ्जरी॰ विजया॰ वातारि॰ भूतकेशीति ॥ शेतेद्रुतिशे॰ शीङ्शीविच् । शयफालयति । अफलाविशरणे । अच । स्वार्थेकन्त्कुन्वा ॥ शेफालिकाया पुष्पम् । शेफालिका । पुष्पमूलेषुबहुलमिति॰ अनुदात्तादेरञोऽचस्लुप् । लुपियुक्तवत् ॥ शेरतेशेफाअलयोऽस्याम् । वा । ङीष् । स्वार्थेकन् ॥

शेफाली । स्त्री॰ निर्गुण्ड्याम् । शेफालिकायाम् । न्यवारीतिख्याते पुष्पवृक्षे । हारशृङ्गार॰ द्रू॰ च॰ भा॰ प्र॰ ॥ शेरतेशेफाअलयोऽस्याम् । वाङीष ॥ नीलसिन्दुवारे । सभाल॰ द्रू॰ भा॰ ॥

शेमुषी । स्त्री॰ बुद्धौ । प्रज्ञायाम् । मतौ ॥ शेतेद्रुतिशे॰ । शीङ्विच । शे॰ मोह॰ तम्मुष्णातीति॰ शेमुषी । मुषस्तेये । मूलविभुजादित्वात्क । गौरादित्वात्ङीष ॥

शेयाल । पु॰ जलनील्याम् । शेवले । जलेशेते॰ तिष्ठति । शीङोवालन् ॥ बाहुलकाद्यय . ॥

शेलु । पुं॰ श्लेष्मातके । बहुवारके । लसोडा द्रू॰ भा॰ प्र॰ ॥ शिलति । शिल॰ । बाहुलकादु. ।

शेव : । पुं॰ सर्पे ॥ शिश्ने ॥ चि॰ उन्नतै ॥ शेते । इण्शीभ्यां

वर्त्तते । शीङोवन् ॥ शेतेऽस्मिन्नर्थ म् । शेवधत्तिसाधुर्वा ॥ सु खे ॥

शेवधिः । पु॰ सामान्यनिधौ । शे वल्याणं॰ सौहैवा॰ अवधि । तत्पुरुषश्चालुक् ॥ यथा । शेते ऽस्मिन्शेवसुखम् । द्रूण्यीभ्याशन् । शवधीयतेऽस्मिन् । कर्मण्यधिक रणेचेति कि ॥

शेवलम् । न॰ शैवाले ॥

शैवालम् । न॰ शैवले ॥ अधिशेते ति ष्ठति । शीङोधुक्लक्वलञ्वाल नश्चेति वालन् ॥

शेवालिनी । स्त्री॰ नद्याम् ॥

शेवाली । स्त्री॰ आकाशमांस्याम् ॥

शेष । पु॰ भगवतोद्वितीयायांमू र्त्तौ ॥ यथा । एकाभगवतोमूर्त्ति र्ज्ञानरूपाशिवामला । वासुदेवाभि धानासागुणातीतासुनिष्कला ॥ द्वितीयाकालसंज्ञाऽन्यातामसीशेष संज्ञिता । निहन्तिसकलांश्चा- न्तेवैष्णवीपरमातनुरितिकौर्म्मे ४८ ऽध्याय ॥ सङ्कर्षणे । सौ रपाणौ । बलदेवे ॥ वधे ॥ अनन्ते । नागजातिराजे । फणास हस्रसंयुक्ते ॥ शिष्यते । शिष्लृवि शेषणे॰ शिषअसर्वोपयोगेवा । घ ञ् ॥ परार्थः शेषइतिमीमांस काः ॥ अवयवे ॥ पुं॰ न॰ उपयु क्तेतरे ॥ परमाणिकद्यपञ्चमप्रभेदे ॰ ॥ ६॰ । त्रि॰ अन्ये । सौकृते तरवस्तुनि । अवशिष्टे । यथा । अ स्यादूरपरोविहानीहमानस्थिरां श्रियम् । अग्नेः शेषमृणस्यापि शत्रोः शेषन्नशेषयेत् ॥ अपिच । ऋण शेषमग्निशेषञ्शत्रुशेषं तथैव च । पुन पुनः प्रवर्द्धन्तेतस्माच्छेषंनशेषयेदि तिगरुडपु॰ ११६ अ॰ ॥ शिष्यते परिशिष्यते । शिषिघञ् ॥

शेषत्वम् । न॰ उपकारित्वे ॥ पारा र्थ्ये । परोद्देश्यप्रवृत्तिकत्वे ॥ यथा । शेषत्वमुपकारित्वंद्रव्यादीनांक्रमा दिह । पाराथ्यं शेषतातस्यसंबन्ध न्धोतिज्जैमिनिरित्यधिकरणमाला यांमाधवाचार्य्यः ॥

शेषभृत । त्रि॰ अवभृते ॥

शेषरात्रिः । स्त्री॰ रात्रिशेषे । उत्त मर्द्धे । अपररात्रे ॥

शेषवत् । न॰ अतीतानुमाने ॥ शेष एवविषयतयाऽस्त्यस्यानुमानस्यान स्य॰ तस्यवत् ।

शेषा । स्त्री॰ प्रसादेनदत्तनिर्म्माल्यापर्णे । निर्म्माल्यदाने ॥ अवर्णान्तान्ते ॥ यथा । छन्दोभिर्हि : प्रोक्ताऽष्ट वर्णैरेषा । सर्वत्रविच्छेदोऽपि सा ख्याच्छेषा ॥ यथा । शिवाकुर्या त्कान्ते । दयितेमायात : सोमामै. सम्पूर्णायाता प्राणास्तूर्णम् ॥

शेषावस्था । स्त्री० वार्द्धक्ये ॥

शेषित । त्रि० उर्व्वरिते ॥

शैक्ष । पु० प्रथमारब्धवेदे । प्राथमकल्पिके ॥ शिक्षामधीते । तदधीतद्वेत्त्यण ॥ शिक्षायामयम्० तत्र भवोवा ॥ यद्वा । शिक्षांलभते । शैक्षइत्यण् ॥ यद्वा । शिक्षाशीलमस्य । छत्रादिभ्योण् ॥

शैख । पुं० सङ्कीर्णजातिविशेषे । । भूर्जकण्टके ॥

शैखरिक । पु० अपामार्गे ॥ शिखरेप्रायेणभवति । अध्यात्मादित्वाट्ठञ् ॥

शैखरेय । पुं० अपामार्गे ॥

शैत्यम् । न० शीतत्वे ॥ भावेष्यञ् ॥ शैत्य इयत्संप्रकृतिर्जलस्य ॥

शैथिल्यम् । न० शिथिलतायाम् ॥ अनुद्यमे ॥ भावेष्यञ् ॥

शैनेय । पु० शिनेर्नप्तरि । सात्यकौ । श्रीकृष्णसारथौ ॥ शिनेर्गोत्रापत्यम् । इतश्चानिञइतिढक् ॥

शैर्षच्छेदिक । त्रि० शीर्षच्छेद्ये ॥ शिरश्छेदंनित्यमर्हति । शीर्षच्छेदाद्यच्चेतिठञ्० प्रत्यययोगेनशिरसः शीर्षभावश्च ॥

शैल । पुं० महीध्रे । अचले । शिलोच्चये ॥ प्रचुरा शिला संत्यत्र । ज्योत्स्नादित्वादण् ॥ न० शैलेये ॥ तार्क्ष्यशैले । रसाञ्जने ॥ शिलाजतुनि ॥

शैलकम् । न० शैलजे ॥

शैलगन्धम् । न० शावरचन्दने ।

शैलगर्भा । स्त्री० शिलावल्कायाम् ॥

शैलगर्भाह्वा । स्त्री० शिलावल्कायाम् ॥ इ० रा० नि० वट ॥

शैलजम् । न० शैलेये । सुगन्धिद्रव्यविशेषे ॥ शैलेजातम् । जनी० । सप्तम्याजनेर्डः ॥ त्रि० पर्व्वतोत्पन्नवस्तुनि ॥

शैलजा । स्त्री० गिरिजायाम् । पार्व्वत्याम् ॥ शैलाज्जाता । जनी० । पञ्चम्यामितिडः ॥ गजपिप्पल्याम् ॥ सैंहल्याम् ॥

शैलधन्वा । पु० शम्भौ । शिवे ॥ इ० त्रि० शेष ॥

शैलधर । पु० गिरिधरे । श्रीकृष्णे ॥ इतिधनञ्जयः ॥

शैलधातुजम् । न० शिलाजतुनि ॥

शैलनिर्यास । पु० अश्मजे । शिलाजतुनि ॥ शैलस्यनिर्यासइव ॥

शैलपत्र । पु० विल्ववृक्षे ॥

शैलपीलु । पु० अक्षोटे ॥

शैलभित्ति । स्त्री० टङ्के ॥

शैलराज । पु० मेरुपर्व्वते ॥ हिमालये ॥ शैलानाराजा । टच् ॥

शैलराजतनया । स्त्री० पार्व्वत्याम् ॥

शैलराजसुता । स्त्री० पार्व्वत्याम् ।

शैवोदा । स्त्री० निम्नगान्तरे ॥
शैवालबा । स्त्री० क्षुद्रपाषाणभेदा म् ॥ अम्बिकायाम् ॥
शैव । त्रि० शिवोपासके । शैवेष्व् शैवतसिके ॥ न० शिवप्रोक्तमार्गे ॥ यथा । नपाटुकापरोमन्त्रो न्देव ' श्रीगुरो . पर । नशिव वात्परोमार्गोनपुण्य कुलपूजना त् ॥ आचारविशेषे ॥ यथा । अष्टाङ्गयोगसंयुक्तोयत्रोर्ध्वोविधान त यावद्ध्यानसमाधिस्तावच्छे व ' प्रचक्ष्यते ॥ विवाहविशेषे ॥ यथा । शैवोविवाहोद्विविध कु लचक्रे विधीयते । चक्रस्यनियमे नैकोद्वितीयोजीवनावधि . ॥ अ पिच । परिणीतानरमितावान्य काविधवाभवेत् ॥ साप्युद्वाह्यापु न पिचार्येवधर्मेष्वय विधि ॥ शिवस्यायम् । तन्त्रेदमित्यण् ॥ शिवे । स्वार्थेऽण् ॥ वसुकि । बक द्रुमे ॥ धत्तूरे ॥ देशविशेषे ॥ शिवोनाविषयोदेश । विषयोदे शइत्यण् ॥ न० शिवपुराणे ॥ शैवालि ॥ त्रि० शिवसम्बन्धि नि ॥
शैवल ' पु० शैवालि ॥ न० पद्म काष्ठे ॥ शेशेतेतिष्ठति । शीङो वृकलुक्वलजवालनङ्गलिवलज् ॥
शैवावधूत : । पु० अवधूतविशेषे ॥ सचैक श्रीमहानिर्वाणेसदा शिवेन । पूर्णाभिषेकविधिनासं स्कृतार्थेयमानवः । शैवावधूता संज्ञेया पूजनीया कुलार्चि तैरिति ॥
शैवलिनी । स्त्री० तरङ्गिण्याम् ॥ तटिन्याम् । नद्याम् ॥ शैवलम स्त्यस्याम् । अतइनिठनाविती नि । वर्ष्मण्योङोप् ॥
शैवालम् । न० जलनील्याम् । शैवाले ॥ शैवालतुवरतिक्तमधु रशीतलघु । स्निग्ध दाहव्रणा पित्तरक्तज्वरहरपरम् ॥
शैवालिनी । स्त्री० नद्याम ॥
शैवी । स्त्री० शैवमिवाहेनोढाचि तायाम ॥
शैव्य । पुं० श्रीकृष्णरथस्याश्ववि शेषे ॥ यथा । तुरगा : शैव्यसु ग्रीवमेघपुष्पबलाहका ॥ पाण्ड वानांसेनापतिविशेषे ॥
शैशवम् । न० शिशुत्वे । बाल्ये ॥ शिशोर्भाव कर्मवा । वृगन्ता च्लघुपूर्वादित्यण् ॥
शैशिर । पुं० श्यामचटके ॥ दन्त रोगविशेषे ॥ त्रि० शिशिरसम्ब न्धिनि ॥
शैशुमारम । न० शिशुमाराकारे ज्योतिश्चक्रे ॥
शैाक : । पुं० मन्त्री । शुचि । व्या

अनुकम्प्ये

शाच्यक । त्रि० वृद्धे ॥

शाठः । त्रि० मूर्खे ॥ अलसे धू-
र्त्ते । नीचे ॥ पापरते ॥

शोण । पु० कृशानौ । अग्नौ ॥ श्योना-
के ॥ लोहिताश्वे ॥ नदविशेषे ।
हिरण्यवाहौ ॥ योयममरकण्टक
देशात्पाटलिपुत्रे गङ्गायामिलि
तः ॥ समुद्रविशेषे ॥ रक्तवर्णे
॥ लवणाम्बुधि पारस्थे रक्तजले
ऽगाधेशोणगाभिनिम्नस्थलीपान्तर्व-
र्त्तिनि नदविशेषे ॥ अनुत्कटरक्ते
। कोकनदवर्णे ॥ श्योनाकभे
दे ॥ न० सिन्दूरे ॥ रुधिरे ॥
त्रि० कोकनदच्छाये । कोकनदव
र्णवति ॥ शोणति । शोणवर्णग
त्योः । घञाद्यच ॥ रक्तवर्णे ॥

शोणक । पु० श्योनाकतरौ । सो
नापाठा० इ० भा० प्र० ॥ स्वा
र्थे कः ॥

शोणज्योतीरथीसङ्गम । पुं० तीर्थवि
शेषे ॥

शोणझिण्टिका । स्त्री० रक्तसैरेये ॥

शोणझिण्टी । स्त्री० कुरवके ॥ कण्ट
किन्याम् ॥

शोणपद्म । पु० रक्तपुनर्नवाया
म् ॥

शोणपद्मम् । न० रक्तपद्मे ॥
शोणपद्मकम् । न० रक्तपद्मे ॥

शोणपुष्पः । पु० कुद्दाले ।
शोणपुष्पकः । पु० कुद्दाले ।
कोविदारे ॥ शोणानि० तद्वर्णा-
नि पुष्पाण्यस्य ॥

शोणपुष्पी । स्त्री० सिन्दूरपुष्पयाम् ॥

शोणप्रभव । पु० तीर्थविशेषे ॥

शोणरत्नम् । न० पद्मरागमणौ ॥ मा
णिक्ये ॥ शोणञ्च तद्रत्नञ्च ।

शोणा । स्त्री० शोणवर्णयुक्तायाम् ।
शोण्याम् ॥ शोणात्प्राचामित्यन्ये
षामिति टाप् ॥

शोणाक । पु० श्योनाकवृक्षे । शु
कनासे ॥

शोणितम् । न० रुधिरे । रक्ते ॥ कु
ङ्कुमे ॥ शोणतिस्म । शोणृ० । गत्य
र्थेति क्तः ॥

शोणितचन्दनम् । न० रक्तचन्दने ॥

शोणितपुरम् । न० बाणासुरपुरे
सराह्वय० इ० भा० प्र० । शो
णितसंज्ञकं पुरम् ॥

शोणिताह्वम् । न० कुङ्कुमे ॥

शोणितोत्पलम् । न० रक्तोत्पले ॥

शोणी । स्त्री० रक्तायाम् । रक्तोत्प
लवर्णायामस्त्रियाम् । शोणात्प्रा
चामितिवाङीप् ॥

शोणोपल । पु० माणिक्ये ॥

शोथ । पु० शोफे । श्वयथौ । त्व
ग्विवर्द्धने ॥ श्वयति । अवगतौ ।
बाहुलकात्० थ । कुङ्गारिच्छठ् ।

आन्तर बाह्यम् । मनोमलानारा
गद्वेषादीनांविषयदोषदर्शनरूपप्र
तिपक्षभावनयाऽपनयनमाभ्यन्तर
मितिविवेकः ॥ वैश्यधर्मे तु पथ्य
प्रयोगादीमायाऽनृतादिराहित्य॰
मनुष्यत्वलादिजनितं बाह्यं ॥ स
र्वेषामेवशौचानामर्थशौचं परं स्मृ
तम् । योर्थे शुचिर्हि सशुचिर्न मृ
द्वारिशुचिः शुचिरितिमनुः ॥ आ
ह्निके शौचविधिरुक्तः । गन्धलेप
क्षयकरं शौचं कुर्यादतन्द्रितइति
। एतत्तु सर्व्वसाधारणम् । गृहस्थ
स्य तु । एकालिङ्गे गुदे तिस्रो दश
वामकरे तथा । उभयोः सप्तदातव्या
मृदः शुद्धिमभीप्सता । पादयो
षट् प्रकीर्त्तिता इति च ॥ इतीय
शौचभिक्षुकुर्याद्विचतुर्गुणम्
। यद्दिवाविहितं शौचंतदर्द्धं निशि की
र्त्तितम् ॥ तदर्द्धमातुरेप्रोक्तमातु
रस्यार्द्धमध्वनि । स्त्रीशूद्रबालवृद्धा
नामर्द्धमेनसिसूत्रवत् ॥ शौचवि
हस्विष इस्त . नाथ . शौचेनियो
जयेत् । तथैव वामहस्तेन नाभिरूर्द्धं
नशोधयेदिति ॥ मूत्रकरणे शौचन्तु
एकालिङ्गकरेतिस्र उभयोर्मृद्द्वयं स्मृ
तमिति ॥ अशुद्धतानिरसनेनाशु
द्धिरापादकत्वमस्यस्वरूपम् । य
था । अभक्ष्यपरिहारस्तु संसर्गश्चा
प्यनिन्दितैः । स्वधर्मे च व्यवस्थान

शौचमेतत्प्रकीर्त्तितमिति ॥ स
त्यंशौचं मनः शौचं शौचमिन्द्रिय
निग्रहः । सर्वभूतदयाशौचंजल
शौचन्तुपञ्चमम् ॥ यस्य सत्यञ्च शौच
ञ्चतस्यस्वर्गोनदुर्लभः ॥ शुचिक
र्मभावोयथा । दुर्गन्धाम्बलघुपूर्वादि
त्वम् । गोकुलेकन्दुशालायां तैल
यन्त्रेक्षुयन्त्रयोः । अमीमांस्यानि
शौचानिस्त्रीषुबालातुरेषु च । अत्य
न्तमलिनोदेहोदेहीचात्यन्तनिर्मलः
। असङ्गोह्यमितिज्ञानं शौचमेतत्
प्रचक्षते ॥

शौचपरः । त्रि० बाह्याभ्यन्तरशौचयु
क्तः ॥

शौचिकः । पुं० वर्णसङ्करविशेषः ।
यथा । कैवर्त्तश्वपचकन्यायांशौण्डि
कादेवशौचकइतिपराशरपद्धतिः ॥

शौचेयः । पुं० रजकः ॥ इ० श० र०
ली ॥

शौटीरः । पुं० वीरे ॥ त्यागिनि ॥
शौटतिशौडृगर्वे । कृशीपृकौटीपटि
शौटिभ्यईरन् ॥

शौटीर्य्यम् । न० वीर्य्यं । गर्वं ॥ तदे
तदितिशौटीर्य्यंमौडसीमेनमृष्यती
तिकल्पतरु ॥ शौटीरस्यभाव ।
ब्राह्मणादित्वात्ष्यञ् ॥

शौण्डः । त्रि० मत्ते । मदिरामत्ते ॥
प्रगल्भे ॥ विख्याते । शुण्डायापा
नागारेभव । तत्रभवइत्यण् ॥

शौण्डिक । पु॰ जातिविशेषे । पा सुतोवत्सि । मण्डहारके । शूद्री॰ क लवार॰ इ॰ भा॰ प्र॰ ॥ पश्चोत्प त्तिर्यथा । ततोगान्धिककन्यायाकै वत्तादेवशौण्डिक । कैवर्त्तस्यच कन्यायाशौण्डिकादेवसौचिक ॥ इ॰ प॰ पु॰ ॥ शुण्डासुरा॰ पण्य मस्य । तदस्यपण्यमितिठक् । शु ण्डिकादागतोवा । शुण्डिकादिभ्योऽ ण् ।

शौण्डी । पुं॰ शौण्डिके ॥

शौण्डी । स्त्री॰ पिप्पल्याम् ॥ चव्ये ॥ कटभ्याम् । मधुरेण्वां ॥ शुण्डा यामद्यपानगृहेभवा । तत्रभवइत्य ण । ङीप् ॥

शौण्डीरः । त्रि॰ शूरे । भहङ्कारिणि ॥ शौटति । शौट्,॰ । औणादिक ईरन् । पृषोदरादित्वान्नुम्॰ टस्य डश्च ॥

शौण्डीर्य्यम् । न॰ पौरुषे ॥ शौर्य्ये । भावे॰ ष्यञ् ।

शौद्र, । पु॰ द्वादशविधपुत्रान्तर्गतपु त्रविशेषे । पारशवे । त्रि॰ शूद्रस म्बन्धिनि ॥

शौद्धोदनि : । पुं॰ शाक्यवंशीयमुनि विशेषे । सर्वार्थसिद्धे । गौतमे । मायादेवीसुते । शुद्धोदनस्यनृपति विशेषस्यापत्यम् । अतइञ् ।

शौधिका । स्त्री॰ रत्नकोषः हे॰ चन्द्रः ॥

शौनः । त्रि॰ पशुघातिनि ॥

शौनक । पु॰ ऋषिविशेषे । अतिध न्वनि ॥ शुनकस्यापत्यम् । बिदा द्यञ् । कापेयेमुनिविशेषे ॥

शौभ । पु॰ निलिम्पे । देवे । सुरे ॥ गुवाक । न॰ व्योमपुरे । हरिश्च न्द्रपुरे । हरचंद्रावली॰ इ॰ भा॰प्र॰ ॥ त्रि॰ शुभान्विते ॥

शौभाञ्जन । पु॰ शिग्रौ ॥ शोभाञ्ज नएव । प्रज्ञाद्यण् ॥ अस्यमोचक कारस्तु । शिग्रुमूलफलपुष्पकन्द तैलपत्रमुदकोष्याधन्वितम् । विष सैन्धवरजोयुतपिङ्गाञ्जनसपदिदी पनमग्ने ॥ शिग्रुक कटुतीक्ष्णो ष्णः वायुशोथसमीरजित् । कमि कृत्कासदोषघ्नतयातिशोषशूलकृत्।

शौभाञ्जनफलम् । न॰ शिग्रुफले ॥ सौभाञ्जनफलस्वादुकषायकफपित्त नुत् । शूलकुष्ठक्षयश्वासगुल्मघ्नदी पन परम् ॥

शौभिक । त्रि॰ इन्द्रजालिके । कुह काकारिणि ॥ इ॰ हारावली ॥

शौरि, । पुं॰ वसुदेवे।वासुदेवे ॥ क्रो ष्टरि ॥ शूरस्यापत्यम्॰ अंशजत्वात् । हरिवंशेनकच्छमकाशरीत्यबाभा ष्यम् । तथापिबाह्वादित्वादिञ् । शनैश्चरे ॥

शौर्य्यम् । न॰ आरभट्याम् ॥ बले ।

शक्तौ ॥ शूरस्य कर्म भावो वा । ष्य ञ् ॥ उत्साहे ॥

शौल्क । पु॰ शुल्कसम्बन्धिनि ॥

शौल्कशालिक । पु॰ शुल्कशालाया अध्यक्षे ॥ अध्यक्षयड्राठक् ॥

शौल्किक । त्रि॰ शुल्काध्यक्षे ॥

शौल्किकेय । पु॰ विषप्रभेदे ॥ शुल्किकदेशभव । इतिकुक्षीतिये। गविभागाट्ढञ् ॥

शौल्बिक । पु॰ कांसकारे । ताम्रकुट्टे । कांसेरः॰ इ॰ भा॰ प्र॰ ॥ शुल्बघट्टन शिल्पमस्य । शिल्पमिति ठञ् ॥

शौव पु॰ स्वभिदृष्टे सामविशेषे ॥ दृष्ट सामेत्यण ॥ न॰ शुनासमूहे । खण्डिकादित्वादञ् ॥

शौवस्तिकम् । त्रि॰ आगामिदिनस्थायिनि द्रव्ये । श्वस्तने ॥ श्वोभवम् । श्वसस्तुट्चेति॰ ठञ । ऐजागम ॥

शौवापदम् । त्रि॰ श्वापदे । श्वापदसम्बन्धिनि ॥ श्वापदस्येदम् । अण् । पदान्तस्यान्यतरस्यामितिपक्षे॰ ऐच् ॥

शौषिर । पु॰ दन्तरोगविशेषे ॥ यथा । श्वयथुर्दन्तमूलेषु रुजावान् कफरक्तज । लालास्रावीसविज्ञेय. शौषिरोनाम नामत ॥ ४ ॥

शौष्कल : । पुं॰ शुष्कमांसस्यापणिके त्रि॰ पिशिताशिनि ॥ शुष्कलीशुष्कमांस॰ मांसमात्र वा अस्ति । शेषकृत्यण ॥

श्च्योत । पु॰ प्राघारे । क्षरणे ॥ श्च्योतनम् । श्च्युतिर् क्षरणे । घञ् ॥

श्च्योतन् । त्रि॰ क्षरति ॥

श्म ॥ न॰ नाम ॰ मुखे ॥

श्मशानम् । न॰ प्रेतदाहभूमौ । शवस्थाने । पितृवने ॥ शवा शेरतेऽत्र॰ शवानाशयन वा । पृषोदरादित्वात्साधु ॥ श्मशब्देनशव प्रोक्त शानशयनमुच्यते । निर्वचन्ति श्मशानार्थं मुनेशब्दार्थकोविदा ॥

श्मशानकाली । स्त्री॰ कालीविशेषे ॥

श्मशानवासी । पु॰ शिवे ॥ त्रि॰ श्मशानवासकर्त्तरि । श्मशानेवस्तु शीलयस्य । वस॰ । सुप्यजातौणिनि ॥

श्मशानवासिनी । स्त्री॰ कालिकायाम् ॥

श्मशानवेश्मा । पु॰ गिरिशे । शम्भौ ।

श्मशानालयवासिनी । स्त्री॰ कालिकायाम् ॥ श्मशानालयेवस्तु शीलमस्या । णिनि । ङीप् ॥

श्मश्रु । न॰ पुमुखलोमदृढोढी॰ भा॰ केशश्मश्रुधारयतामग्र्याभवतिसन्ततिरितिदानधर्म भारतम् ॥ श्म॰ मुखश्रयति । श्रिञ्॰ । श्मनिश्रयतेडुन् । यद्वा । श्मनिमुखे श्रूयते॰ उपलभ्यते । श्रु॰ । मित

द्वादित्वात् ङ । क्लिब् वा । आग
मशास्त्रस्यानित्यत्वान्नतुक् ॥

श्मश्रुमुखी । स्त्री० श्मश्रुयोषिति । पो
टायाम ॥

श्मश्रुल । त्रि० प्रवृद्धश्मश्रुरोमवति ।
सिध्मादित्वाल्लच् ।

श्माशानिक । पु० पितृवनेपाठादि
कर्त्तरि । नसाधिजा० ह० भा०
प्र० । श्मशानेऽधीते । अध्यायिन्य
देशकालादितिठक् ।

श्यान त्रि० शीतात्सङ्कुचिते । स
ङ्कुचितमार्गे ॥ श्यायतेस्म । श्यै
ङ् गतौ । क्त । संयोगादेरातोधा
तोर्यण्वतइतिनिष्ठानत्वम ॥

श्याम । पुं० प्रयागस्थवटे । वारिदे ॥
वृद्धदारके । पिके । कोकिले ॥
कृष्णवर्णे ॥ हरिद्वर्णे ॥ श्यामाके
॥ नीलवर्णे ॥ धत्तूरे ॥ दमनकवृ
क्षे ॥ गन्धतृणे ॥ न० मरिचे ॥
सिन्धुलवणे ॥ त्रि० कृष्णवर्णवि
शिष्टे ॥ हरिद्वर्णवति ॥ श्यायतेम
नोयस्मात् । श्यैङ् । इषियुधीन्धि
दसिश्याधूसूभ्योमगितिमक् ॥ पु
० ऋषभाद्रिजाते० तमालदलनि
भे० चन्दनविशेषे ॥ श्रीकृष्णे ॥

श्यामक । पुं० श्यामाके । सांवक
इतिभाषाप्रसिद्धेन्ने । न० रोहिष
तृणे ॥ श्याम वर्णं म्लायति । म्लै
क० । कर्मण्यण् । मलाम्नादिः ॥

श्यामकण्ठ । पुं० मयूरे ॥ शिवे ॥
पक्षिविशेषे ॥

श्यामकन्दा । स्त्री० अतिविषायाम् ॥

श्यामकाण्डा । ) स्त्री० गण्डदूर्वाया
श्यामग्रन्थि । )
म् ॥ गण्डाल्याम् । नीलनेत्राया
म् ॥

श्यामपत्र । ) पु० तमालपादपे ।
श्यामपत्रक । )

श्यामल । पु० पिप्पले । कृष्णे ।
श्यामे ॥ नीलमार्कवे । त्रि० कृष्ण
वर्णविशिष्टे । सिध्मादित्वाल्लच् ॥

श्यामलचूडा । स्त्री० गुञ्जायाम् ॥

श्यामलता । स्त्री० शारिवायामोषधौ
॥ श्यामलिङ्ग ॥

श्यामला । स्त्री० पार्वत्याम् । कस्तू
र्याम् ॥ अश्वगन्धायाम ॥ जम्बा
म् ॥ कटभ्याम् ॥

श्यामलिका । स्त्री० नील्याम् ॥

श्यामविन्दु । पु० कृष्णवर्णे ॥

श्यामवल्क । पु० शिरीषे ।

श्यामसुन्दर । पु० श्रीकृष्णे ॥

श्यामशालि । पु० कृष्णशालौ ॥

श्यामा । स्त्री० कालिकायाम् । दुर्गा
याम । पार्वत्याम् ॥ श्यामायाउ
त्पत्तिर्यथा । ततः साक्षात्कालिकादि
वीयोगनिद्राजगन्मयी । पूर्वंस्व
सासतीरूपाजन्मार्थंमेनकाययौ ॥
समयश्यामरूपेणमेनकाजठरेशिवा

। सम्भूयचसमुत्पन्नासालक्ष्मीरिव
सागरात् ॥ वसन्तसमयेदेवीनवम्यां
मृगयोगत । अहोरात्रौसमुत्पन्नाग
ङ्गेयश्शिमण्डलात् ॥ ततस्तस्यान्तु
जातायाप्रसन्नाश्चाभवन्दिश । सा
नुकूलोववौवायुर्गन्धीरोगन्धिल
शुभ ॥ बभूवपुष्पवृष्टिश्चतीयवृष्टि
परातथा । जज्वलुश्चाग्नय शा
न्ताजगर्जुश्चघनाघनम् ॥ तस्यान्तु
जायमानायासर्वंलाश्यामपदात ।
तान्तुदृष्ट्वायथाजातांनीलोत्पलदला
नुगाम ॥ श्यामांसामेनकादेवीमु
दमायातिहर्षिता । देवाश्चहर्षम
तुल प्रापुस्तचमुहुर्मुहु ॥ तुष्टुवु
स्तामन्तरीक्षेगन्धर्वाश्चाप्सरोगणा ।
। तान्तुनीलोत्पलदलश्यामांहिमव
त सुताम् ॥ कालीतिनाम्नाहिमवा
नाजुहावक्रतेदिने । बान्धवास्तुस
न्तानांनाम्नतांपार्वतीतिच ॥ का
लीतिचतथानाम्नाकीर्तितागिरिन
न्दिनीतिकालिकापुराणे ४० अ
ध्याय ॥ शारिवौषधौ ॥ कृष्णश्वे
ताशारिवायासाश्यामेतिनिगद्यते
॥ अप्रसूताङ्गनायाम् ॥ नारीविशे
षे । यौवनमध्यस्थायाम् । तल्लक्ष
ण यथा । स्निग्धनखनयनदशना
निरनुशयामानिनोस्थिरस्नेहा । सु
स्पर्शशिशिरमांसलवराङ्गनासाम
ताश्यामेति ॥ छायायाम् । भावा



नुरूपायाम् ॥ प्रियङ्गौ ॥ वाकुची
। सोमलतायाम् ॥ यमुनायाम् ॥
त्रियामायाम् ॥ कृष्णत्रिवृत्तिकौष
धौ । यथा । श्यामात्रिवृत्ततोहीं
नगुणातीव्रविरेचिका । मूर्च्छादा
हमदभ्रान्तिकण्ठोत्कर्षणकारिणी
॥ नीलिकायाम् ॥ गुग्गुलौ ॥ गु
न्द्रायाम् । गुडूच्याम् ॥ कस्तूर्या
म् ॥ वटपत्र्याम् ॥ वन्ध्यायाम् ।
रचनायाम ॥ नीलपुनर्नवायाम्
॥ पिप्पल्याम् । कृष्णायाम् ॥ ह
रिद्रायाम् ॥ नीलगव्याम ॥ नील
दूर्वायाम् ॥ स्त्रियाम ॥ पद्मबीजे ॥
शिंशपायाम् ॥ पक्षिविशेषे । वा
राह्याम् । पाण्डविकायाम् । श
कुन्याम । पीतकायाम । कालिका
याम । शितिसिम्बिन्याम् ॥ श्या
मोवर्णोऽस्त्यस्या । अर्शआद्यच्
॥ मगन्ताद्वाटाप् ।

श्यामाक । पु० तृणधान्यभेदे । श्या
मके । श्यामेचिनौजी । ऋषिप्रिये
। राजधान्ये । सावां० सांवक०
हू० भा० प्र० ॥ श्यामाक शोष
णोरूक्षोवातल कफपित्तहृत् ॥
श्यायते । श्यैङ्० । पिनाकादय
इतिसाधु ॥ यथा । श्यामकर्णा
म० अश्नाति । अम० । कर्मण्य
ण् ॥

श्यामाङ्गः । पुं० बुधग्रहे ॥ त्रि० श्या

श्येन । पु० पक्षिविशेषे । शशाद
ने । पक्षिणि । वाज० इ० प्र०
॥ महाकायोमन्दवेग श्येनइत
व्याख्यातार ॥ श्यायते । श्यैङ०
। आस्याहृञविभ्यइनच् । पाण्डु
रे । शुक्ले ॥ त्रि० तद्वति ॥

श्येनघण्टा । स्त्री० दन्तीवृक्षे । एरण्ड
फलायाम् ॥

श्येनचित् । पु० आहवनीयधारणा
र्थे० इष्टकाभिर्निर्मितस्थलविशेषे ॥
श्येनइवचित । चिञ०। कर्मण्य
ग्न्याख्यायामितिक्विप ॥

श्येनजीवी । पु० क्रयविक्रयादिना
श्येनइवजीवति० तस्मिन् ॥

श्येनी । स्त्री० शुक्लवर्णायाम् । व
र्णादनुदात्तात्तोपधात्तोनइति० ङी
प्० तकारस्यनकारादेशश्च ॥
त्रिष्टुपछन्द ११ प्रभेदे ॥ यथा
। श्येन्युदीरितारजौरलौगुरु ॥
यत्कीर्तिरिन्दुकुन्दचन्दनश्येन
शोभिताप्यावनीसदा । लाङ्गलीव
विश्ववन्द्यविक्रमातभजामिभावग
म्यमच्युतम् ॥ श्येनयोषिति ॥

श्येनीपुत्र । पु० जटायुषि । स
म्पातेरनुजे । दशरथराजसखे ॥

श्येनम्पाता । स्त्री० मृगयायाम् ॥ प
तनम्पातः । श्येनस्यपातः ।
कर्तृषष्ठ्यासमास । श्येनपातो
ऽस्यांवर्तते । घञ साऽस्यांक्रिये
तिञ । श्येनतिलस्यपातेञ०
इतिमुमागम ॥

श्योनाक । पु० श्योनाकद्रुमे ।
सोनागाछ इ० गौ० भा० प्र० ॥
अस्यपर्यायायथा । मण्डूकपर्णप
त्रोर्णनटकट्वङ्गटुण्टुका । श्यो
नाकशुकनासर्क्षदीर्घवृन्तकुटन्नटा
॥ शोणकश्चारलाविति । सोनापा
टा० इ० भा० प्र० । अस्यगुणा
यथा । श्योनाकोदीपन पाक
कटुकस्तुवरोहिम । ग्राहीतिक्तो
निलश्लेष्मपित्तकासामनाशन ॥
टुण्टुकस्यफलवालरूक्ष वातकफा
पहम् । हृद्यकषायमधुररोचनल
घुदीपनम् । गुल्मार्श क्रिमिहृत्
प्रौढ गुरुवातप्रकोपणम् ॥ श्यायते
। श्यैङ्गतौ । पिनाकादौ निपा
तित ॥

श्रत् । अ० श्रद्धायाम् ॥

श्रथनम् । न० वधे ॥ यत्ने ॥ पुन
पुनर्हर्षणे ॥ बन्धने ॥ मोक्षणे ॥
शिथिलीकरणे ॥

श्रद्दधान । त्रि० श्रद्धायुक्ते । श्रद्धा
वति । यथा । श्रद्दधान शुभाविद्या
माददीतावरादपि । अन्त्याद
पिपरधर्मं स्त्रीरत्नंदुष्कुलादपीति ।
श्रत्० श्रद्दधनोर्विभाषा ॥

श्रद्धा । स्त्री० सम्प्रत्यये । आदरे ।
आस्तिक्यबुद्धौ । शास्त्रार्थप्रत्यये ॥

मे । आयासे । व्यायामे ॥ तपसि ॥ खेदे । गमनादिप्रयुक्तखेदादौ । श्रम ' खेदोऽध्वरत्यादेरितिलक्षणम् ॥ श्राम्यत्यनेन । श्रमुतपसिखेदे । घञ् । नोदात्तोपदेशस्येतिवृद्ध्यभावः ॥

श्रमण ' । पु॰ तपस्विनि । श्रमणा परिव्राडितिपूज्यपादाः ॥ बुद्धभिक्षुके । निर्ग्रन्थे । यतौ । जति॰ । हु॰ भा॰ प्र॰ । न॰ श्रमे । लि॰ निन्द्यजीविनि ॥ तपस्विनि ॥ श्राम्यति । श्रमु॰ । ल्यु ॥

श्रमणा । स्त्री॰ सुदर्शनायाम् । मांसाम् । मुण्डीर्याम् । शबरीभेदे ॥

श्रमणी । स्त्री॰ चतुर्थाश्रमप्राप्तायाम् । तपस्विन्याम् ॥

श्रमवारि । न॰ आयासेनखेदविन्दौ ॥

श्रमी त्रि॰ श्रमयुक्ते ॥

श्रय । पु॰ श्रयणे । आश्रये ॥ श्रयणम् । श्रिञ् सेवायाम् । एरच् ॥

श्रयणम् । न॰ आश्रये । आश्रये ॥ श्रिञो ल्युट् ॥

श्रव ' । पु॰ कर्णे । श्रवणे । श्रूयतेऽनेनश्रवणं वा । श्रुश्रवणे । ऋदोरप् ॥

श्रवण । पु॰ नक्षत्रविशेषे । श्रवणमासाम् । न॰ श्रुतौ । श्रोत्रकर्मणि । श्रूयतेऽनेनेतिहासपुराणैःश्रुतिशब्दतात्पर्यावधारणे । तदर्थनिर्धारणात् कूलन्यायविचारे ॥ षड्विधलिङ्गैः अशेषवेदान्तानामद्वितीयेवस्तुनितात्पर्यावधारणे ॥ वेदान्तानामशेषाणामादिमध्यावसानतः । ब्रह्मात्मन्येव तात्पर्यमितिधीः श्रवणं भवेदित्युक्तं ॥ आचार्यस्यमुखादेवश्रवणं सफलंभवेत् ॥ कर्णेन्द्रियेणसगुणस्य निर्गुणस्यवाशब्देनज्ञाने । मुननाम॰ हु॰ भा॰ प्र॰ । पु॰ न॰ कर्णे । कान॰ हु॰ भा॰ प्र॰ ॥ कर्णे पुन पुंसकयोः । श्रवणावनिलश्चेति दर्शनात् । नस्त्रियाम् श्रवणं कर्णं इतिहेमचन्द्राभिधानाच्च ॥ श्रूयतेऽनेन । करणे ल्युट् ॥

श्रवणद्वादशी । स्त्री॰ श्रवणानक्षत्रयुक्ताया भाद्रशुक्लद्वादश्याम् ॥

श्रवणशीर्षिका । स्त्री॰ श्रावणीवृक्षे । मुण्डीर्याम् ॥

श्रवणा । स्त्री॰ द्वाविंशतितमेनक्षत्रे ॥ तत्रजातस्यफलंयथा । शास्त्रानुरक्तो बहुपुत्रमित्रः सत्पुत्रभक्तिर्विजितारिवर्गः । यस्यप्रसूतौश्रवणाह्वयस्यप्रसूतौ पुराणश्रवणे प्रवीणः ॥ श्रावणपूर्णिमायाम् । श्रावण्याम् ॥ श्रवणेनयुक्तापौर्णमासी । नक्षत्रेणयुक्तः । तस्य॰ लुबविशेषइति लुप् । टाप् । मुण्डीरीवृक्षे ॥

श्रवणाह्वा । स्त्री॰ मुण्डीरिकायाम् ॥

श्रव । । न॰ यशसि ॥ कर्णे ॥ श्रूयते

तम्। क्रियते वा पर्वणि यत् तत् पार्वणमिति स्थितिः॥ गोष्ठ्यां यत् क्रियते श्राद्धं गोष्ठीश्राद्धं तदुच्यते। बहूनां विदुषां सम्यक् सुखार्थं पितृतृप्तये॥ क्रियते शुद्धये यत्तु ब्राह्मणानां तु भोजनम्। शुद्ध्यर्थमिति तत्प्रोक्तं वैनतेय मनीषिभिः॥ निषेककाले सोमे च सीमन्तोन्नयने तथा। ज्ञेयं पुंसवने चैव श्राद्धं कर्माङ्गमेव च॥ देवानुद्दिश्य यच्छ्राद्धं तद्दैविकमिहोच्यते। हविष्येण विशिष्टेन सप्तम्यादिषु यत्नतः॥ गच्छन् देशान्तरं यस्तु श्राद्धं कुर्यात्तु सर्पिषा। यात्रार्थमिति तत्प्रोक्तं प्रवेशे च न संशयः॥ शरीरोपचये श्राद्धमर्थोपचय एव च। पुष्ट्यर्थमेतद्विज्ञेयमौपचयिकमुच्यते॰ इति॥ पञ्चविधमपि ब्रह्मपुराणवचनात् तद्यथा। नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं तथैव च। पार्वणञ्चेति मनुना श्राद्धं पञ्चविधं स्मृतमिति॥ श्रद्धा अस्ति। प्रज्ञाश्रद्धार्चाभ्यो ण इति ण॥ यद्वा। श्रद्धा प्रयोजनमस्य। चूडादिभ्य उपसंख्यानमित्यण्॥ कालावश्यानुष्ठानमागमोक्तविधिनैव कार्यम्। यथाह भगवान् सदाशिवः। आगमोक्तविधिं हित्वा श्राद्धं कुरुते नरः। श्राद्धतत्फलतोऽपि पितृभिर्नरकं व्रजेत्। तत्तीर्थं शा

पितृसमं पिण्डो मलमयो भवेत्। तस्मान्मत्यं प्रयत्नेन शाङ्करमतमाश्रयेदिति॥ त्रि॰ श्रद्धान्विते॥

श्राद्धदेव। पु॰ अन्तके। धर्मराजे। यमे। श्राद्धस्य देव॰ अग्रभाक्त्वात्॰ पितृपतित्वाद्वा॥

श्राद्धप्रदेश। पु॰ गयादितीर्थादिषु॥

श्राद्धशाकम्। न॰ कालशाके॥

श्राद्धिक। त्रि॰ श्राद्धिनि। अथ तत एव श्राद्धान्नभोजिनि। श्राद्धशब्दः कर्मनामधेयं तस्माद्धर्मे द्रव्ये लाभाय वर्त्तते। श्राद्धभुक्तमनेन। श्राद्धमनेन भुक्तमिति ठनाविति ठन्॥ श्राद्धभाज्यद्रव्ये?॥

श्राद्धी। त्रि॰ श्राद्धिके॥ श्राद्धमनेन भुक्तमितीनि॥

श्रान्त। पु॰ यतौ। शान्ते॥ त्रि॰ क्लान्ते। श्रमयुक्ते॥ श्राम्यति स्म क्त॥

श्रान्तकाय। त्रि॰ निवृत्तसन्तापे॥

श्रान्तसंवाहनम्। न॰ श्रमान्वितस्याऽसनादिप्रदानद्वारा श्रमोपशमने॥

श्राम। पु॰ मासे॥ मण्डपे॥ काले॥

श्रामणेर। पु॰ जिनभिक्षौ शिष्ये। चेलुके। महाभासके?॥

श्राय। पु॰ आश्रये। अयने॥ श्रयणम्। श्रिञ् सेवायाम्। श्रिणीभुवोऽनुपसर्गे इति घञ्॥ त्रि॰ श्रीदेवताके हविरादौ॥ श्रीर्देवताऽस्य

ती ॥ विस्वद्रुमे ॥ ग्रङ्गुली ॥ ग्र धिकारे ॥ प्रभायाम् ॥ कीर्त्तौ ॥ वृद्धौ ॥ सिद्धौ ॥ ब्रह्माद्य न्मातरि । तारायाम्, । बुद्ध देव्याम् ॥ श्रयतिहरिम् • श्रय न्त्येतामितिवा । श्रिञ • । क्वि व्वचीति• क्विब्दीर्घौ । कर्त्तरि विहितस्यक्विप कर्मण्यसम्भव क्रदिकारादितिङीष तुन• क्तप्रत्य योयदृकारइतिव्याख्यानात् । क्त दन्त यदिकारान्तमितिपक्षेपि कार ग्रहणे तत्सामर्थ्यादेवक्तिवलग्रहणा त् । दुर्घटस्तु•ङीवि•श्रीमिताव रचितद्रूक्ततोनाह ॥ विद्यायान्तौ ॥ श्रयतिपारतन्त्र्याच्चिदात्मानमिति श्री ॥ राजलक्ष्म्याम् ॥ शरीर शोभायाम् ॥ सर्वैतत्कष्टत्वेना न्तःस्थाश्रयणयासौक्रियतेप्रलयसुषुप् तादौसर्वभूतैरितामुत्त्या• जीव स्योपाधिभूयामामविद्यायाम् ॥ देवादिनाम्न पूर्वंश्रीशब्दप्रयोग कर्त्तव्यइत्याह । देवगुरुगुरुस्था नचैत्यचैत्याधिदेवताम् । सिद्धसि द्धाधिकारांश्चश्रीपूर्वंसमुदीरयेदि तिप्रयोगसार . ॥ स्वर्गगामित्वा दिनासिद्धोऽधिकारीयेषांनराणा मितानेन• जीवतांश्रीशब्दादित्व भावोनतुमृतानांतथैता धुनिकाशि ष्टानामाचार ॥ पत्रेश्रीशब्दद्

नप्रमाणयथा । षड्गुरो स्वामि न पञ्चैभृत्यैचतुरोरिपौ । श्री शब्दानांवयमिवएकंकपुत्रभार्य- योरिति ॥ उक्तथाया १ ब्रत्तौ ॥ ग श्री । यथा । श्रीस्ते । सास्ता म ॥

श्रीकण्ठ । पु • नीलकण्ठे । शि वे ॥ कालकूटविषधारणात्• श्री शोभाकण्ठेयस्य । धृतकण्ठे विषघोरतत . श्रीकण्ठतामगमेति नीलकण्ठस्तव ॥ कुरुजाङ्गल देशे ॥

श्रीकण्ठपदलाञ्छन । पुं• माल तीमाधवनाटककर्त्तरि• भवभू तिकवौ ।

श्रीकण्ठसख । पुं• कुवेरे ॥ ब• स• युध ॥

श्रीकन्दा । स्त्री• वन्ध्याकर्कोटक्या म् ॥

श्रीकर । पु• विष्णौ ॥ स्मरतांस्तु वतांस्तुवतांकीर्त्तयतामर्च्चयताम्भ क्तानांश्रियमीप्सस्याव्य लक्ष्मीक रोति । क्रञोहेतुताच्छील्यानुलो म्येष्विति ॥ न• रक्तो त्पले ॥ वि• श्रीकारके ॥ करो ति । डुकञ• । अच् ॥ श्रिय कर ॥

श्रीकरण । न• लेखन्याम् ॥

श्रीकरी । स्त्री• श्रतिविशेषे ॥

गन्धार्याम् ॥ स्वार्थे कन् । इत्थ' ॥
श्रीपर्णी । स्त्री॰ काश्मर्याम् । गणकारिकायाम् ॥ इठे । कुम्भयाम् । वारिपर्ण्याम् ॥ श्रीयुक्तानिपर्णान्यस्या ॰ श्रीपर्णे पुष्पस्याधा । पाक्कर्णपर्णेत्यादिभाङीष् ॥ कट्फले ॥ शाल्मली ॥
श्रीपर्वत । प॰ श्रीशैले ॥ तीर्थविशेषे ॥
श्रीपिष्ट । पु॰ सरलद्रुमरसे । सरलद्रवे ॥ श्रिय सरलद्रुमस्यपिष्ट ॰ तच्चूर्णेनजनितत्वात् ॥
श्रीपुत्र । पु॰ अश्वे ॥ कामदेवे ॥
श्रीपुष्पम् । न॰ लवङ्गे ॥ पद्मकाष्ठे ॥
श्रीप्रसूनम् । न॰ लवङ्गे ॥
श्रीफल । पु॰ बिल्वे । मालूरे ॥ श्रीप्रद ॰ श्रीप्रियवाफलमस्य । श्रापार्थिवादि . । श्रीफलस्तुवरस्तिक्तोग्राहीरूक्षोग्निपित्तकृत् । वातश्लेष्महरोबल्योलघुरुष्णश्चपाचन । राजादनवृक्षे ॥
श्रीफला । स्त्री॰ आमलक्याम् ॥ नील्याम् ॥ क्षुद्रकारवेल्लयाम् ॥
श्रीफलिका । स्त्री॰ आमलक्याम् ॥ क्षुद्रकारवेल्ल्याम् ॥ महानीलीवृक्षे ॥
श्रीफली । स्त्री॰ धात्र्याम् । आमलक्याम् ॥ नीलिकायाम् ॥
श्रीवल्ली । स्त्री॰ कट्फलायाम् ॥

श्रीभद्र । पु॰ चित्रगुप्तसुतेकायस्थजातिविशेषे ॥
श्रीभद्रा । स्त्री॰ भद्रमुस्तके ॥
श्रीभागवतम् । न॰ पुराणार्थे । महापुराणान्तर्गतपुराणविशेषे ॥
श्रीभ्राता । पु॰ घोटके ॥ विधौ । चन्द्रे ॥ समुद्रोत्पन्नत्वात् ॥
श्रीमान् । पु॰ तिलकवृक्षे । क्षुरके ॥ अश्वत्थवृक्षे ॥ शिवे ॥ विष्णौ ॥ कुवेरे ॥ इन्द्रे ॥ त्रि॰ मनोज्ञे ॥ धनिके । श्रीले ॥ सर्वातिशयितश्रिया अखण्डितैश्वर्यसम्पन्ने ॰ महाराजचक्रवर्त्तिनि ॥ श्री लक्ष्मी सम्पत् ॰ शोभा॰ कान्तिर्वा॰ साऽस्यास्मिन्वास्ति । तदस्यास्त्यस्मिन्निति मतुप् । श्चीयत्रूपिसामानिसारिश्रीरमतासताम् । तथा युक्तामहात्मान . श्रीमन्त . सार्वसम्मता ॥
श्रीमति . । स्त्री॰ राधायाम् ॥
श्रीमती । स्त्री॰ श्रीयुक्तायाम् ॥ शैशितामभिधानस्यपूर्वमेतत्प्रयोजयेत् ॥
श्रीमद . । पु॰ धनमदे । सर्वमदाधमे ॥ यथा । मन्नन्योनुमतोजीव्यान दुर्बिभ सोरसोगुण । श्रीमदाद्भिजात्यादिर्यत्रस्त्रीशूत्रमासव ॥ इन्द्र्यन्तेपशवोयत्रनिर्दयै रजितात्मभि । मन्यमानै रिमंदेहमजरामृ

स्य॰ मङ्गलम् ॥

श्रीमलापहा । स्त्री॰ धूम्रपत्रायाम् ॥ गन्धपत्रायां ॥

श्रीमस्तक । पु॰ रसोने ॥ हू॰ वि॰ शेष . ॥

श्रीमुख । पुं॰ सप्तमेवत्सरे ॥ तत फलयथा । सुभिक्षं क्षेमआरोग्य वर्षाकाल सुशोभनम । सस्यवृद्धि विजानीयात् ॰श्रीमुखेसुरवन्दिते ॥ ७ ॥ न॰ शोभितानने ॥

श्रीमूर्त्ति . । स्त्री॰ देवताविग्रहे ॥ विष्णुप्रतिमायाम् ।

श्रीयुक्त : । श्रीयुत . । वि॰ लक्ष्मीविशिष्टे । श्रीमति ॥

श्रीरङ्ग . । पुं॰ पुण्यक्षेत्रविशेषे । श्रीरङ्गाख्य महापुण्य यत्रसन्निहितोहरिरितितन्त्रम् ॥

श्रीरस : । पु॰ सरलरसे । श्रीवेष्टे ॥

श्रीराग . । पुं॰ षड्रागान्तर्गततृतीयरागे ॥

श्रीराम ' । पुं॰ दशरथात्मजे ॥

श्रील . । वि॰ श्रीमति । लक्ष्मीवति । लक्ष्मणे । श्रियायुक्ते ॥ श्रीरस्यास्ति । सिध्मादित्वाल्लच् ॥ प्रियलाति बाला॰ आद्गानि । पातीमुपसर्ग का : ॥

श्रीलता । स्त्री॰ महाज्योतिष्मत्याम् ॥

श्रीवत्स : । पुं॰ विष्णोश्चिह्नविशेषे । भृगुपदुर्वासस पदाघातरूपेरेखा विशेषे ॥ महापुरुषलक्षणभूते॰ वक्षस्थस्य दक्षिणावर्त्तरोमावर्त्त विशेषे ॥ प्रदक्षिणावर्त्तविचित्ररो मश्रीवत्ससहितस्तविभूषिताङ्गमिति गरुडपुराणात् ॥ वदतिमङ्गलम् । वदव्यन्तोर्यावाचि । वृतृवदिहनिकमिकषिभ्य सः इति स . । श्रीयुक्तो वत्स ' ॥ विष्णौ । कृष्णे । गृहविशेषे ॥ सुदर्शनाप्रभेदे । षड्वीथ्यां ॥

श्रीवत्सकी । पु॰ वक्षस्थलावर्त्तहये ॥

श्रीवत्सभृत् । पुं॰ हरौ । विष्णौ ॥

श्रीवत्सलाञ्छन : । पु॰ विष्णौ । श्रीवत्सोमहापुरुषलक्षणभूतश्चक्षुतरोमावर्त्तविशेषोलाञ्छनं चिह्नमस्येतिविग्रह ' ॥

श्रीवत्साङ्क ' । पु॰ विष्णौ ॥

श्रीवराह : । पुं॰ आदिवराहे । विष्णौ ॥

श्रीवल्लभ . । पुं॰ परमात्मनि ॥ श्रिया विद्यायास्त्रिवल्लभसदाकारे ।

श्रीवाटी । स्त्री॰ नागवल्लीभेदे ॥

श्रीवारक ' । पु॰ शाकविशेषे । सितावरे । सूच्याग्रे । सूचीपत्रके । सिराला॰ सिरयारा॰ सिरियारी॰ हू॰ भा॰ प्र॰ ॥ तच्छाकप्रकारोयथा । श्रीवारकदलंशाककमारनालेसुसाधितम् । पौंड्रतालोलितं तैले वासमर्द्दसमन्वितम् । वार्त्तापसद

रावत्स्याविबन्धाध्माननाशिनी । कफकृन्मूत्रकृच्छ्रघ्नीभेदिनीसारसायनी । सा• श्रीवालीत्यर्थः ॥

श्रीवाली । स्त्री• श्रीवारकी• शाकविशेषे ॥

श्रीवास । पु• विष्णौ । नारायणे ॥ श्रियोवास । अस्यवक्षसि• श्रीरनपायिनी• वसतीत्यर्थः ॥ शिवे । हरे ॥ पङ्कजे । वृकधूपे । सरलद्रवे । श्रीवेष्टे ॥ अस्यगुणाः । श्रीवासोमधुरस्तिक्तः स्निग्धोष्णस्तुवरः सरः । पित्तलोवातमूर्द्धाक्षिस्वररोगकफापहः । रक्षोघ्नः स्वेददौर्गन्ध्ययूकाकण्डूव्रणप्रणुत् ॥

श्रीवास्तव । पु• चित्रगुप्तात्मजकायस्थजातिविशेषे ॥

श्रीविद्या । स्त्री• महाविद्याविशेषे । परदेवतायाम् । त्रिपुरसुन्दर्याम् ॥

श्रीवृक्ष । पु• बिल्ववृक्षे ॥ अश्वत्थवृक्षे ॥ श्रीप्रद • श्रीप्रियोवावृक्षोस्य । शाकपार्थिवादि ॥

श्रीवृक्षकः । पुं• अश्ववक्षस्यावर्त्ते ॥

श्रीवृक्षकी । पु• श्रीवृक्षकावर्त्तविशिष्टेऽश्वे ॥ तल्लक्षणं यथा । वक्षोभवावर्त्तचतुष्टयञ्चकण्ठेभवेद्यस्यवरोचमानः । श्रीवृक्षकीनामहय . सभर्त्तुः . श्रीपुत्रपौत्रादिविवर्द्धयेच्चादिति ॥ श्रीवृक्षकीवक्षसिचेद्रोमावर्त्तौ शुखिदिचेतितुर्जयन्तौ ॥

श्रीवेष्ट । पुं• सरलवृक्षद्रवे । वृक्षधूपे । श्रीवासे । तद्गुणायथा । श्रीवेष्ट कटुकस्तिक्तकषाय श्लेष्मपित्तजित् । योनिदोषकृज्जीर्णव्रणशाध्मानदोषनुत् ॥ श्रीसज्ज्ञक • श्रियोवावेष्टोनियास ॥

श्रीश । पुं• विष्णौ ॥ श्रीरामे ॥ श्रियईश ॥

श्रीशैल । पुं• भारतवर्षस्थपर्वतविशेषे ॥ सितितथाविधमनोभिलषासमर्थाश्रीशैलश्रृङ्गकुहरेषुकदोपलभ्ये । गात्रयथामरलता परिवेष्टयन्तिकार्यं यथाविरचयन्तिखगाश्चनीडम् ॥ इतियोगतारावली ॥

श्रीसज्ञम् । न• लवङ्गे ॥ श्रिय सज्ञासज्ञायस्य ॥

श्रीहरि । पु• परमात्मनि ॥ श्रिय जीवत्वोपाधिभूतामविद्यांहरति• आत्मज्ञानप्रदानेननाशयति• इति श्रीहरि ॥ श्रिय दधाने । विष्णौ ॥

श्रीहस्तिनी । स्त्री• भूरुण्ड्याम् हातीसुण्डा• इ• गौ• दे• भा• प्र• ॥ श्रियाहस्त . • श्रीहस्त । सविद्यतेयस्याः । अतइनि . ॥ यद्वा । हस्तंगृह्णातिहस्तयति । अवश्यंश्रियहस्तयति । आवश्यकेतिणिनि ॥

श्रुघ्नका । स्त्री• सर्जिकाक्षारे ॥
श्रुघ्नी । स्त्री• सर्जिकाक्षारे ॥

श्रुतम् । न• शास्त्रे ॥ शास्त्रविचारे ।

वेदे । श्रवणे । सुपना॰ इ॰ भा॰ ॥ वि॰ विश्रुते । ख्याति । श्रुवणगोचरे ॥ श्रुयते॰ श्रूयत वा । श्रुश्रूवणे । क्त ॥ अघ्राविवा । श्रु॰ । क्त ॥

श्रुतकीर्त्तिः । पु॰ देवर्षो ॥ स्त्री॰ श्र मणभ्रातुः कुशध्वजकन्यायाम् ॥ वि॰ कीर्त्तियुक्ते ॥

श्रुतदेवी । स्त्री॰ सरस्वत्यां ॥

श्रुतर्षि । पु॰ सुश्रुतादृषिषु ॥ सुश्रु ताद्या, श्रुतर्षयइतिविक्रमशी ष: ॥

श्रुतश्रवाः । वि॰ आकर्णितयशसि ॥

श्रुतश्रवा । स्त्री॰ श्रीकृष्णपितृष्वस रि । शिशुपालमातरि ॥

श्रुतश्रवोनुज । पुं॰ शनैश्चरग्रहे ॥

श्रुतश्रेणी । स्त्री॰ द्रवन्त्यां ॥

श्रुतादानम् । न॰ ब्रह्मवादे ॥ इ॰भा॰ वो॰ ॥

श्रुताध्ययनसम्पन्न । वि॰ धर्मशास्त्रज्ञे ॥ यथा । श्रुताध्ययनसम्पन्ना । कुलीना सत्यवादिन । राज्ञःसभास दःकार्या शत्रौमित्रे चयेसमा ॥

श्रुतान्वित । वि॰ शास्त्रज्ञे ॥

श्रुतार्थ । पुं॰ शब्दबोधविषयीभू तार्थे । श्रवणमात्रबोध्यार्थे ॥ यथा । श्रुतार्थापत्तिमानादश्रुतार्थस्य कल्पनात् । प्रामश्वबाधादिव्येव परिसङ्ख्यावदित्यविकीति ॥

श्रुतायु । पु॰ सूर्यवंशीयनृपतिविशे षे ॥

श्रुति । स्त्री॰ वेदे । आम्नाये । वेदा ख्यपरदेवतायाम् ॥ विनियोगवि धे सङ्कारिभूतेप्रमाणविशेषे ॥ तत्रनिरपेक्षोरवः श्रुति । साच त्रिविधा । विधात्री॰ अभिधात्री॰ विनियोक्त्रीच । तत्राद्यालिङ्गाद्या त्मिका॰ द्वितीयाव्रीह्यादिश्रुति ॰ यस्यशब्दस्यश्रवणादेवसम्बन्धः प्रतीयतेसाविनियोक्त्री । साऽपि त्रिविधा । विभक्तिरूपा॰ एकाभि धानरूपा॰ एकपदरूपाचेति । तत्रवि भक्तिश्रुत्याङ्गत्वम् ॰ यथाव्रीहिभि र्यजेतेति॰ तृतीयाश्रुत्या॰ व्रीही णांयागाङ्गत्वम्॰ तदपिपुरोडाश प्रकृतितया॰ अन्यथाऽनन्वयादन्या गवासेस्मव्रीहीणांविधानात् अ दृष्टस्यापितदौवांश्रुत्यागाङ्गत्व म ॰ तदपिगोरूपद्रव्यपरिच्छेदद्वा रा॰ मतुसावादस्तत्वात् । व्री हीन्प्रोक्षतीतिप्रोक्षणस्यव्रीह्यङ्गत्व द्वितीयाश्रुत्या॰ तत्रप्रोक्षण॰ नव्री हिस्वरूपार्थंतस्यतैनविनाप्युपपत्ते ! किन्त्वपूर्वसाधनत्वप्रयुक्तम्॰ व्री हीन्प्रोक्ष्ययागानुष्ठानेऽपूर्वानुपप त्तेः । एवं सर्वत्रलेषु॰ अपूर्वप्रयु क्तमङ्गत्व बोध्यम् । एवमिमामश्वाभि धान् रशनामादत्तइत्यश्वाभिधानीमा

श्रुति.

दत्त• इत्यत्र• द्वितीयाश्रुत्या• म
न्त्रस्याग्न्यभिधानाङ्गत्वम्। यदाहव
नीये जुहोतीत्याहवनीयस्य होमाङ्ग
त्वं सप्तमीश्रुत्या। एवमन्योपि विभ
क्तिश्रुत्या विनियोगो ज्ञेयः। पशुना
यजेतेत्यत्रैकत्वपुंस्त्वयोः सामाना
धिकरण्यश्रुत्या कारकाङ्गत्वम्। य
जेतेत्याख्यातोऽभिहितसंख्याया
भावनाङ्गत्वं समानाभिधानश्रुतेरे
वपदश्रुत्या च यागाङ्गत्वं• न चामू
र्त्तायाः संख्यायाः कथं भावनाङ्गत्वं•
कर्तृपरिच्छेदद्वारा तदुपपत्तेः। क
र्त्ता चात्रोपलभ्यः• आख्यातेन हि
भावनोच्यते• सा च कर्त्तारं विनाऽनु
पपन्नेति तमाक्षिपति। सेयं श्रुति
र्लिङ्गादिभ्यः प्रबला• लिङ्गादिषु
न प्रत्यक्षो विनियोजकः शब्दोऽस्ति•
किन्तु कल्प्यः। यावच्च तैर्विनियो
जकः शब्दः कल्प्यते• तावत्प्र
त्यक्षया श्रुत्या विनियोगस्य कृतत्वेन
तेषां कल्पकत्वशक्तेर्व्याहतत्वात्। अ
त एवैन्द्र्या लिङ्गेनेन्द्रोपस्थानार्थत्व
म्• किन्त्वैन्द्र्या गार्हपत्यमुपतिष्ठत
इत्यत्र• गार्हपत्यमिति द्वितीया
श्रुत्या• गार्हपत्योपस्थानार्थत्वम्॥
अथ देवीगीतायां देवीवाक्यं यथा।
सर्वज्ञायाः सर्वशक्तेर्मे यो वेद
समुत्थितः। अज्ञानस्य ममाभावा
दप्रमाणा न च श्रुतिरिति सर्वज्ञात्

श्रुतिः

सर्वशक्तेश्च मत्तश्रुतिपाठे तु मत्तो मत्
स्वरूपादित्यर्थः॥ प्रयोगविध्युप
योगि प्रमाणविशेषः॥ तच्च क्रमप
रं वचनं श्रुतिः। तच्च द्विविधम्।
केवलक्रमपरं• तद्विशिष्टपदार्थ
क्रमपरञ्च। तत्र वेदं कृत्वा वेदिं क
रोतीति केवलक्रमपरम्• वेदि
करणादेर्वचनान्तरप्राप्तत्वात्। वष
ट्कर्तुः प्रथमभक्ष इति तु क्रमवि
शिष्टपदार्थपरम्• एकप्रसरताभ
ङ्गभयेन भक्षानुवादेन क्रममात्रस्य वि
धातुमशक्यत्वात्। सेयं श्रुतिरित
रप्रमाणापेक्षया बलवती• तेषां व
चनकल्पनद्वारा क्रमप्रमाणत्वात्।
अत एवाश्विनग्रहस्य पाठक्रमात्तृ
तीयस्यापि ग्रहणप्रसक्तावाश्विनो द
शमो गृह्यत इति वचनाद्दशमस्यैव ग्र
हणमित्युक्तम्॥ कर्णः। अस्य प
र्यायाः। कर्णः शब्दग्रहः श्रोत्रं श्रुति
स्त्री श्रवणं श्रवः॥ अस्य शुभाशुभ
लक्षणं यथा। रक्ताल्पपरुषश्मश्रुक
र्णाः स्युः पापमृत्यवः। निर्मां
सैश्चिपिटैर्भोगाः कृपणाः ह्रस्वकर्ण
काः॥ शङ्कुकर्णाश्च राजानो रोम
कर्णाः शतायुषः। बृहत्कर्णाश्च
राजानो धनिनः परिकीर्तिताः
॥ श्रवणं। वाक्यजनितवाक्या
र्थविज्ञाने॥ मनननिदिध्यासन
सहकृते श्रवणज्ञाने॥ श्रीवत्समंचि॥

ति । व्याघ्रीवास्ते जराचायुर्याति भिन्नघटाम्बुवत् । निघ्नन्ति रिपुवद्रोगास्तस्माच्छ्रेय समाचरेत् ॥ यावन्नाश्रयतीदुःखं यावन्नायान्ति चापदः । यावन्नेन्द्रियवैकल्य तावच्छ्रेय समाचरेत् ॥ कालोनज्ञायते नानाकार्यैः संसारसम्भवैः । सुखदुःखैर्जनोऽहन्तनवेत्ति हितमात्मनः इतिकुलार्णवे प्रथमोल्लासः ॥ कल्याणे । मङ्गले । शुभे ॥ धर्मे । । वेदविहितप्राणिनामभ्युदयनिःश्रेयससाधने । प्रवृत्तिनिवृत्तिलक्षणे ॥ पुण्ये ॥ त्रि० अतिप्रशस्ते । शस्ते ॥ इदमनयोरतिशयेनप्रशस्तम् । द्विवचनेतीयसुन् । प्रशस्यस्यश्र । विद्यावाधिके ॥ धर्मार्थावुच्यतेश्रेयः कामार्थौ धर्म एव च । अर्थ एवेहवाश्रेयस्त्रिवर्ग इतितुस्थितिः ॥ अयमुपदेशोऽभूत्सूनुप्रतिबोध्य ॥

श्रेयसी । स्त्री० करिपिप्पल्याम् ॥ अभयायाम् ॥ पाठायाम् । शठाम्बायाम् ॥ श्रेष्ठायाम् ॥ उगित्वान्ङीप् ॥

श्रेयाम । पुं० व्रताईद्विशेषे ॥

श्रेष्ठ । पुं० कुवेरे । धनदे ॥ विप्रे ॥ नृपे ॥ मुख्यप्राणे । न० गोदुग्धे । गव्ये ॥ त्रि० मुख्ये । वरे । पुष्कले । सत्तमे । अतिशोभने ॥ अयमेषामतिशयेनप्रशस्यः । अतिशायनेतमबिष्ठनाविति इष्ठन् । प्रशस्यस्य श्रः प्रधानभूते ॥ ज्येष्ठे ॥ वृद्धे ॥

श्रेष्ठकाष्ठ । पुं० शाकवृक्षे ॥

श्रेष्ठता । स्त्री० श्रेष्ठत्वे ॥

श्रेष्ठा । स्त्री० स्थलपद्मिन्याम् ॥ उत्तमार्थानार्थाम् ॥ ज्येष्ठानक्षत्रे ॥

श्रेष्ठाम्लम् । न० वृक्षाम्ले ॥

श्रेष्ठी । पु० कुलोत्तमशिल्पिनि ॥

श्रोण । त्रि० अङ्घ्रावेगपङ्गौ ॥ श्रोणति । श्रोणृ सङ्घाते । पचाद्यच् ॥ यद्वा । शृणोति । शृ० । बाहुलकान्न ॥

श्रोणि । स्त्री० कट्याम् ॥ श्रोणति । श्रोणृ० । इन् ॥ यद्वा । श्रूयतेपुंभिः । शृ० । वह्निश्रिश्रुयुद्रुग्लाहात्वरिभ्योनिरितिनिः ॥ पथि ॥

श्रोणीफलम् । न० कटौ ॥

श्रोणीफलकम । न० कटिपार्श्वे । कटे ॥ श्रोणि फलकमिव चर्माकारत्वात् ॥

श्रोणिबिम्बम् । न० कटिसूत्रे ॥

श्रोणिसूत्रम् । न० खड्गबन्धनसूत्रे । परतला० इ० भा० प्र० ॥

श्रोणी । स्त्री० कट्याम् ॥ पथि ॥ कृदिकारादिति पक्षे ङीष् ॥

श्रोतव्य । त्रि० श्रवणीये । श्रोतुं योग्ये । श्रोतव्य श्रुतिवाक्ये भ्योम

श्रौत । स्मार्त्तौ वर्णाश्रमात्मक इति
मात्स्ये १२० अध्याय ॥

श्रौतयज्ञ । पु० अग्निहोत्रदर्शपौ
र्णमासादौ ॥ श्रुत्याप्रोक्तः श्रौतः
। अण् । स चासौ यज्ञश्च ॥

श्रौतसत्कृति । स्त्री० वेदोक्तसत्क्रि
यायाम् । यथा । गृहस्थस्य क्रिया
सर्व्वा आगमोक्ता कलौ शिवे । नान्य
मार्गैः क्रियासिद्धिः कदापि गृहमेधि
नाम ॥ भैक्षुकेप्याश्रमे देवि वेदो
क्त दण्डधारणम् । कलौ नास्त्येव त
त्त्वज्ञ यतस्तच्छ्रौतसत्कृतिरिति
म० नि० तन्त्रम् ।

श्रौत्रम् । न० श्रोत्रियतायाम् । श्रो
त्रियस्य कर्म भावो वा । युवादित्वा
दण् । श्रोत्रियस्य यलोपश्च ॥ श्रोत्रा
णां समूहे ॥ भिक्षादण् ॥

श्रौषट् । अ० देवहविर्दाने ॥ श्रूयते
ऽनेन । श्रु० । बाहुलकात् डौष
ट् ॥

श्लक्ष्ण । त्रि० स्तोके । अल्पपर्यायाय
था । स्तोकाल्पक्षुल्लकाः सूक्ष्मं श्ल
क्ष्णं दभ्रं कृशं तनु । स्त्रियां मात्रा त्रुटि
: पुंसि लवलेशकणाणवः ॥ इति
॥ मनोहरे ॥ सुखस्पर्शे । अपरुषे
। स्निग्धे ॥ श्लिष्यते० श्लिष्यति वा ।
श्लिष आलिङ्गने । श्लिषेरच्चोपधायाः
इति क्स ॥

श्लक्ष्णकम् । न० पूगफले ॥

श्लक्ष्णतीक्ष्णायम् । न० शुक्रे । शूके ॥
श्लक्ष्णश्चासौ तीक्ष्णश्च० तच्चतद
यश्च ॥

श्लक्ष्णत्वक् । पु० अश्मन्तकवृक्षे ॥ सु
न्दरवल्कले ॥

श्लक्ष्णभूमि । स्त्री० कृष्णमृदि ॥

श्लथ । त्रि० शैथिल्ये । शिथिले ॥

श्लाघनम् । न० अभिनन्दने ॥

श्लाघा । स्त्री० अभिलाषे । इच्छाया
म् ॥ उपास्तौ । परिचर्यायाम् ॥
प्रशंसायाम् । अविद्यमानगुणसम्ब
न्धज्ञापने ॥

श्लाघिष्ठ । त्रि० श्लाघ्यतमे ॥

श्लाघ्य । त्रि० प्रशस्ते । श्लाघनीये ।
स्तुत्ये ॥ आशास्ये ॥

श्लिकु । पु० सेवके । भृत्ये ॥ श्लिष्य
ति० यावत्कार्यं लगति व्याप्रियते ।
श्लिष आलिङ्गने । श्लिषि कषेति
कु कस्यान्तादेश ॥ सिद्धे ॥ न०
ज्योति शास्त्रे ॥

श्लिषा । स्त्री० आलिङ्गने ॥

श्लिष्ट । त्रि० सम्पृक्ते । गत्यर्थाऽक
र्मकेति० श्लिष क्त । श्लेषयुक्त
शब्दादौ । भिन्नार्थैकरूपान्वितवा
क्ये ॥ तच्च यथा । श्लिष्टमिष्टम
विस्पष्टमेकरूपान्वितं वचइति ॥

श्लीपदम् । न० पादरुग्भिदि । पाद
वल्मीके ॥ अस्य निदानन्तु । य
सज्वरो वङ्क्षणयोर्भृशार्त्तिः शो

साम्मुख्यमायासितनुवर्त्तनम् ॥ भेदाभावात्प्रकृत्यादेर्भेदोऽपिनव मोभवेत् । नवमोऽपीत्यपिभिन्न क्रम ॥ उदाहरणम् । योऽसकृ त्परगोत्राणांपक्षच्छेदक्षणक्षम । शतकोटिदतांबिभ्रद्विबुधेन्द्र सरा जते ॥ अत्रप्रकरणादिनियमाभा वात् • द्वावप्यर्थौवाच्यौ ॥ अर्थाल ङ्कारविशेष ॥ तल्लक्षणादयोयथा । श्लेष सवाक्यएकस्मिन्यत्राने कार्थताभवेत् ॥ एकार्थप्रतिपा दकानामेवशब्दानायत्रानेकोर्थ सश्लेष । उदाहरणम् । उदय मयतेदिङ्मालिन्यं निराकुरुतेत- राम् • नयतिनिधनं निद्रामुद्राम्प्र वर्त्तयतिक्रिया । रचयतितरांस्वै राचारप्रवर्त्तनकर्त्तनम • बतबतल सत्तेज पुञ्जोविभातिविभाकर ॥ अ त्राभिधायाअनियन्त्रणात् • द्वावप्य र्थौवाच्यौ ॥ श्लेषणम । श्लिष • । घञ् ॥ ऐक्ये ॥ श्लिष्य ति । श्याद्यपरिलिष ॥

श्लेषणम् । न • एकीभवने ॥

श्लेष्मक । पु • कफे ॥

श्लेष्मकर । त्रि • कफवर्द्धकद्रव्येषु ॥ तानियथा । भोजनानन्तरस्ना नजलपान तृषाविना । तिलतैल स्निग्धतैलस्निग्धामामलकीद्रवम् ॥ पर्युषितान्नंतक्रसुपक्वरम्भाफल द धि । मायास्वु मज्जरालीयसुस्नि ग्धस्थलनिवसनम ॥ नारिकेलोदक स्वच्छानपर्युषितजलम् । तरुसु स्नापक्वफलसुपक्वकर्कटीफलम् ॥ वातस्नानस्त्रवर्षासु मूलकाष्ठ रोपण कारणम् । तत्कालवस्त्रसम्बन्धजश्च शौर्यविनाशनाशिनि • ब्र • वै • १६ अध्याय ॥

श्लेष्मघना । स्त्री • मल्ल्याम् ॥ के तक्याम् ॥

श्लेष्मघ्न । त्रि • श्लेष्मनाशके ॥ न • मधुनि ॥ श्लेष्माणाहन्ति । हन • । अमनुष्येतिटक ॥

श्लेष्मघ्ना । स्त्री • मल्लिकायाम् ॥ कम्पिल्लके ॥ दू • हे • न्द्र ॥

श्लेष्मघ्नी । स्त्री • मल्लिकायाम् ॥ ज्यो तिष्मत्याम् ॥ टित्वान्ङीप ॥ शि कटुनि । व्योषे ॥ दू • मे • कर ॥

श्लेष्मण । पु • श्लेष्मले । बहु वारके ॥ सन्धिस्थकफे ॥ त्रि • श्लेष्मवति । श्लेष्मास्त्यस्य । पा मादित्वान्न ॥

श्लेष्मणा । स्त्री • वृक्षभेदे । तर्पग्या म् । गुरुस्कन्धे ॥

श्लेष्मा । पुं • कफे ॥ तत्प्रकोपहे तुर्यथा । गुरुमधुररसातिस्निग्ध दुग्धेक्षुभक्ष्यद्रवदधिदिननिद्रापू- पसर्पि: प्रपूरै: । तुहिनपतनका लेश्लेष्मण • सम्प्रकोप प्रभवति

ति ॥ श्लोकसङ्घाते । घञ् ॥

श्लोककार । पु॰ वाल्मीकिमुनौ ॥ श्लो कक्कति ॥ श्लोक करोतिकर्मण्यण् ॥

श्लोक्य । त्रि॰ पुण्यकीर्त्तौ ॥

श्वःकार्य्यम् । न॰ आगामिन्यहनि कर्त्तव्ये ॥ यथा । श्वः कार्य्यमद्य कुर्वीतपूर्वाह्णे चापराह्णिकम् ॥ नहिमृत्युः प्रतीक्षेत कृतवाप्यथवा कृतम् ॥ इतिकुलार्णवतन्त्रम् ॥

श्वःश्रेयसम् । न॰ शिवे । भद्रे । कल्याणे । मङ्गले । शुभे । शस्ते अर्थे परपदस्याचश्व शब्द कालवाच्यपि । अभिधत्तेस्वभावेन॰ तैनैमीमङ्गलार्थकाविति पाणिनीयमतदर्पण ॥ परमात्मनि । परानन्दे । धर्मे णि । शांते । सुखे ॥ श्वः आगामीश्रेयोऽत्र । श्वसीवसीयः श्रेयसञ्चलच् समासान्तः ॥ श्वःश्रेयस्मिविग्रहे॰ मयूरव्यसकादित्वात् समासः ॥

श्वगण । पु॰ कुक्कुरसमूहे ॥

श्वगणी । त्रि॰ शुनांपोषके ॥ श्वगणी । स्वयञ्चर्मिन ॥

श्वगणी । त्रि॰ शुनांपोषके ॥ शुनागणी ॥

श्वचक्रम् । न॰ कुक्कुरचेष्टायाम् ॥ पश्यवारज्ञाम् ॥

श्वदंष्ट्रक । पु॰ गोक्षुरे ॥

श्वदंष्ट्रा । स्त्री॰ गोकण्टकौ । गोक्षुरके शुनोदंष्ट्रेव ॥

श्वधूर्त्त । पु॰ शृगाले ॥

श्वा । पु॰ ग्रामम्रुगे । अस्य पर्य्याया यथा । कौलेयक सारमेय कुक्कुरोमृगदंशक । शुनकोभषक श्वा श्वादिति ॥ शुनोलक्षणं यथा । पदा पञ्चनखास्तस्य ऽग्रचरणे षण्नखं दक्षिण स्तामौष्ठाग्रनखो मृगेष्वरगतिर्जिघ्रन भुव यातिच । लाङ्गूलससट॰ हस्वसदृशी कर्णौच लम्बौ मृदू यस्य स्यात् सकरोतिपोष्टुर्यचिरात्पुष्टां श्रिय वैगृहे ॥ इति वाराही ॥ अस्यपरीक्षातुमृगयार्थं शाकुनार्थं कौतुकार्थं मप्रीक्षिता । श्वानं पोष्यास्ततस्तेषं मवक्षा मिलक्षणम् ॥ गुणजातिप्रभेदेनश्रुगो भेदाश्चानेकशः । सात्त्विकाराजसाश्चैवतामसाश्चत्रिधामाता ॥ अश्नान्ताश्चपरिक्षीणा पवित्रा॰ स्वल्पभोजिनः ।श्वानस्ते सात्त्विका प्रोक्ता दृश्यन्तेचक्कचित्क्कचित् ॥ १ ॥ कृशाबहुभुजोदीर्घाशुरुवक्षसनूद्रा । जाङ्गलेस्थाजाङ्गिकाश्वश्वानस्तेराजसामता ॥ २ ॥ अल्पश्रमीयेश्रान्तालज्जिह्वागुरूदरा । श्वानस्तेतामसाज्ञेया सन्यावनसमाश्रया ॥ ३ ॥ ब्रह्मादिजातिभेदेनचतुर्द्धासवएवहि । शुभ्रादी घांसल्वकर्णालघुपुच्छानूदरा

पालया। वध्यवासांसिदद्य्रीयु मृत्याद्याभरणानिचेतिमनुः॥ चण्डाल, श्वपच, चत्तासूतावैदेहकास्तथा। मागधायोगवौचैवसप्तैतेऽत्यावसायिनः॥ कृत्यचिन्ता॥
श्वपच' डीम॰ डुमड़ा॰ ह॰ भा॰ प्र॰ ॥ श्वानंपचति। डुपचष्॰। पचाद्यच्॥
श्वपदम्। न॰ कुक्कुरपादे॥
श्वपाक। पुं॰ निषादे। चण्डाले॥ तच्चोत्पत्तिर्यथा। चत्तुर्जातस्तथोग्रायांश्वपाकइतिकीर्त्यते॰ इतिमनुः। शूद्रेणवैश्यायांजातः चत्ता॰ चत्रियेणशूद्रायांजातोउग्रा॰ ताभ्यांजातः, श्वपाकइत्युच्यतइति कुल्लूकभट्टः॥
श्वफल। पुं॰ बीजपूरे॥
श्वफल्क। पुं॰ वृष्णिपुत्रे। अक्रूरपितरि॥
श्फल्कपुत्र। पुं॰ अक्रूराख्ययादवे॥
श्वभीरु'। पुं॰ फेरौ। शृगाले॥
श्वभ्रम्। न॰ भूछिद्रे। तत्पर्य्यायायथा। कुहरशुषिरविवरबिलम्। छिद्रनिर्व्यथनरोकरन्ध्रश्वभ्रवपाशुषिरिति॥ श्वभ्रवर्त्तते। श्वभ्रगतौ। अच्। पचाद्यच्॥ शुशीभ्रममभ्रव्योमावा॥ विदीर्णभूभागे॥
श्वयथु। पुं॰ शोथे। खग्विवर्द्धने श्वयति॰ श्वयनमनेनवा। टुश्वि गतिवृद्ध्योः। ट्वितोऽथुच्॥
श्वयीचि। पु॰ चन्द्रे॥ व्याधौ॥ श्वयति। टुश्वोश्वि॰। श्वयतिच्छिदितिईचि। गुणायादेशौ॥
श्ववृत्ति। स्त्री॰ सेवायाम्। चाकरी॰ ह॰ भा॰ प्र॰॥ सेवातुदीनदृष्टिसदर्शनखामितर्जननीचक्रियादिधर्मयोगात्॰ शुनोवृत्तिरिव। शुनइववृत्तिर्वा। सेवाश्ववृत्तिराख्यातातस्मात्तांपरिवर्ज्जयेदिति मनुः॥
श्वव्याघ्र। पु॰ श्वापदे। व्याघ्रादिहिंस्रपशौ॥
श्वशुर। पु॰ पूज्ये॥ पतिपत्न्योःपितरि॥ पत्युः पितापत्न्याः श्वशुर॰ पत्न्या पितापत्युः श्वशुर॥ शुद्धस्त्याश्चर्ये॰ पूजायांवा। शुचश्रुति॰ अश्नुतेवा। अशूव्याप्तौ॰ सङ्घाते च। आशमेरामावित्युरन्॥
श्वशुरा। स्त्री॰ आ। इत्याम्॥
श्वशुरौ। पु॰ २ स॰ श्वश्रू॰ श्वश्रूश्वशुरयो ॥ श्वश्रूश्चश्वशुरश्चतौ। श्वशुरः श्वश्रेतिपाक्षिकएकशेषः॥
श्वशुर्य्य'। पुं॰ देवरे॥ श्याले॥ श्वशुरस्यापत्यम्। राजश्वशुराद्यत्॥

श्वाश्व । पु॰ भैरवे ॥

श्वास । पु॰ श्वसिते । प्राणेनवायोरन्तःप्रवेशने । समाख्यङ्गे रेचकविरोधिनि । प्राणवायौ । श्वसिति । श्वस॰ । घञ् घेतिच ॥ रोगविशेषे ॥ पिशुनो नरकं याति जायते श्वासकासवान् । घृततैलप्रदातव्यस्तस्य सर्वमितमिश्रितातपीयकर्मविपाकः ॥ षडौषध यथा विभीतकस्य चूर्णं मधु श्वासनाशनम् ॥ पिप्पलीत्रिफलाचूर्णं मधुसैन्धवसंयुतम् । सर्वरोगज्वरश्वासशोषपीनसहृद्रोगविहिति गारुडे १८९ अध्याय ॥ प्राणे ॥ हारीद्र्याटने ॥

श्वासकास । पु॰ श्वासयुक्तकासरोगे । श्वासजनककासे ॥ यथा । कासवृद्ध्याभवेच्छ्वास पूर्वैर्वादोषकोपनैरितिगरुडपुराणम् ॥

श्वासकुठार । पु॰ । श्वासरोगस्यौषधविशेषे ॥ यथा । रसोगन्धोविषञ्चापिटङ्कणञ्चमनःशिला । एतानिकर्षमात्राणिमरिचञ्चाष्टकर्षकम् ॥ कटुत्रयकर्षयुग्मं पृथगत्रविनिक्षिपेत् । रस । श्वासकुठारोयं सर्वश्वासनिवारणः इतिभावप्रकाशः ॥

श्वासप्रश्वासधारणम् । न॰ प्राणायामे । श्वासप्रश्वासयोर्धारणं यत्र तत्

श्वासहेति । पुं॰ निद्रायाम् । स्वापे ॥

श्वासारि । पु॰ पुष्करमूले ॥

श्वासी । पु॰ वायौ । त्रि॰ श्वासरोगिणि ॥

श्वित्रम् । न॰ श्वेतकुष्ठे । कुष्ठे ॥ श्वेतते । श्वितावर्णे । स्फायितञ्चीतिरक् ॥ षडौषधन्तु । धात्रीखदिरयोः क्वाथ पीत्वावल्गुजसंयुतम् । शङ्खेन्दुधवलं श्वित्रं हन्तितूर्णंनसंशयः ॥

श्वित्रघ्नी । स्त्री॰ पीतपर्णाम् । त्रिकुटी॰ कृति॰ गौ॰ भा॰ प॰ ॥

श्वित्री । त्रि॰ श्वेतकुष्ठवति । श्वित्रमस्यास्मिन्वास्ति । अतइनिठनाविति इनि ॥

श्वेत । पुं॰ शुभ्रवर्णे । सपेद॰ कृ॰ भा॰ ॥ द्वीपविशेषे । श्वेतद्वीपे ॥ पर्वतविशेषे । कुलाचलश्चोत्तरे हि सश्वयोर्जनविस्तीर्णः प्रागायतो हिरण्मयवर्षस्य मर्यादागिरौ ॥ वानरविशेषे ॥ यथा रामायणे । श्वेतो रजतसङ्काशश्चपलो भीमविक्रमः । बुद्धिमान्वानरश्रेष्ठो विश्रुत इति ॥ कपर्दके ॥ शुक्रग्रहे । शङ्खे ॥ केतावे ॥ विद्याधरविशेषे ॥ न॰ रूप्ये । त्रि॰ शुक्लवर्णविशिष्टे । श्वेतते । श्विता॰ । पचाद्यच ॥

श्वेतक पुं॰ वराटके ॥ न॰ रूप्ये ॥

श्वेतद्वीप । पुं॰ विष्णोर्धामविशेषे ॥ यत्रानिरुद्धमूर्त्तिर्भगवानास्ते ॥

श्वेतधातु । पुं॰ खटिकायाम ॥ शुक्लवर्णधातुमात्रे ॥

श्वेतधामा । पुं॰ इन्दौ । घनसारे अब्धिफेने ॥

श्वेतनील । पुं॰ अम्बुदे । मेघे ॥ शुक्लनीलवर्णे ॥

श्वेतपक्ष । पुं॰ हंसे ॥ न॰ शुभ्रपर्णे ॥

श्वेतपत्ररथ पुं॰ स्रष्टरि ब्रह्मणि । विधातरि ॥ श्वेतपत्रो हंसो रथो वाहनं यस्य ॥

श्वेतपद्मम् । न॰ पुण्डरीके । सिताम्भोजे । अम्बुजभे ॥

श्वेतपर्णा । स्त्री॰ कुम्भिकायाम् । वारिपर्ण्याम् ॥

श्वेतपर्णास पुं॰ श्वेततुलस्याम् अर्जके । गन्धपर्णे ॥

श्वेतपाटला । स्त्री॰ शुक्लपाटलायाम् ॥

श्वेतपिङ्ग । पुं॰ सिंहे ॥ इ॰ ह॰ न्द्र ॥

श्वेतपिङ्गल । पुं॰ सिंहे ॥ त्रि॰ शुक्लपिङ्गलवर्णयुक्ते ॥

श्वेतपिण्डीतक : । पुं॰ महापिण्डीतके ॥

श्वेतपुष्प : । पुं॰ सिन्धुवारवृक्षे ॥ श्वेतार्के । श्वेतकरवीरे ॥ वरुणद्रुमे । न॰ शुक्लवर्णकुसुमे ॥

श्वेतपुष्पक । पुं॰ करवीरवृक्षे ॥

श्वेतपुष्पा । स्त्री॰ मृद्व्याम । श्वेतघोषा॰ इ॰ गो॰ भा॰ प्र॰ ॥ नागदन्त्याम । मृगेर्वारौ ॥ श्वेतानि पुष्पाणि यस्याः ॥

श्वेतपुष्पिका । स्त्री॰ महाशणपुष्पिकायाम् ॥ पुत्रदात्र्याम् ॥ इ॰ रा॰ नि॰ ॥

श्वेतप्रसूनक । पुं॰ वृक्षविशेषे । वरुणद्रुमे ॥

श्वेतभण्डा । स्त्री॰ श्वेतापराजितायाम ॥

श्वेतमन्दारक । पुं॰ पृथ्वीकुरबके । दीर्घायुष्ये । श्वेतवाक इ॰ भा॰ प्र॰ ॥

श्वेतमरिचम् । न॰ शिग्रुबीजे ॥ श्वेतं मरिचमिव ॥ शुक्लमरिचे ॥

श्वेतरक्त । पुं॰ पाटलवर्णे ॥ श्वेतयुक्तोरक्तः ॥

श्वेतरञ्जनम् । न॰ सीसके ॥

श्वेतरथ । पुं॰ दैत्यगुरौ । शुक्रे ॥ श्वेतोरथोऽस्य ॥ शुक्लवर्णस्यन्दने ॥

श्वेतराजी । स्त्री॰ पिचिण्डे । सुदीर्घफले ॥

श्वेतरोचि : । पुं॰ चन्द्रे ॥

श्वेतरोहित । पुं॰ सितपुष्पे । सि

श्वेतकण्टकार्याम् ॥ पाषाणभेदाम् ॥ श्वेतदूर्व्वायाम् ॥ शिलावल्कलायाम् ॥ वशरोचनायाम् ॥ शर्करायाम् ॥ लताविशेषे । क्षुरिकापत्रिकायाम् । पर्व्वमूलायाम् ॥ अतिप्रियायाम् ॥ गुणास्तु श्वेतातिमधुराशीतास्त न्यदाहर्त्तिकारिका

श्वेतावल्लन् । स्त्री॰ शुक्लचित्रतायाम् । चित्रभाण्डायाम् ॥

श्वेताम्लि । स्त्री॰ क्षुपविशेषे । अम्लिकायाम् पिष्टोडयाम् ॥

श्वेतार्क । पु॰ शुक्लार्कवृक्षे । तपने । शर्करापुष्पे । हस्तमल्लिकायाम् ॥ अस्यगुणा । श्वेतार्क कटुकस्तिक्त उष्णो मलविशोधन । मूत्रकृच्छ्रास्रशोफार्शोव्रणदोषविनाशनकृत् ॥

श्वेताम्बर । पु॰ सिताम्बरधारिणि ।

श्वेताश्व । पु॰ अर्जुने ॥ सहदेवपाण्डवे ॥

श्वेताह्वा । स्त्री॰ सितपाटलायाम् ॥

श्वेतेक्षु । पु॰ सितेक्षौ । वंशपत्रके । पाण्डुरेक्षौ ॥ अस्यगुणा । श्वेतेक्षु काठिनोरुष्योगुरुश्वकफ मूत्रकृत् । दीपन पित्तदाहघ्नो विपाकेकोष्णलक्षति ॥

श्वेतोदर । पु॰ कुबेरे ॥ त्रि॰ चि

काण्डशेष ॥

श्वोवसीयसम् । न॰ कल्याणे । मङ्गले ॥ वसुशब्द प्रशंसावाची॰ ईयसुन्नन्त । श्वस शब्दउत्तरपदार्थ प्रशंसामाशोर्व्विषयमाह । श्वोवसीयइति विग्रहे॰ मयूरव्यंसकादित्वात्समास । श्वोवसीय श्रेयस इत्यच् समासान्त अर्थं परपदस्थ श्व शब्द कालवाच्यपि । अभिधानस्वभावेन तेनमोमङ्गलार्थं काविति पाणिनीयमतदर्पण । श्वोवसीयसन्ते भूयात ॥

षकारस्य प्रारम्भ

ष । पं॰ षकारे ॥ कचे ॥ त्रि॰ विज्ञे । निपुणे ॥ श्रेष्ठे ॥

षट्क । पु॰ षसासङ्घे । सङ्ख्याया सङ्घासङ्घसूत्राध्ययने प्रतिकन् ॥ षष्ठेनरूपेणगृह्णातीत्यर्थे तु॰ तावतिथेनगृह्णातीतिकान्वक्तव्य पूरणप्रत्ययस्यचनित्यंलुक् । षष्ठेनरूपेणगृह्णाति॰ षट्को देवदत्त ॥

षट्कट् । न॰ षडूषणे ॥

षट्कर्ण । पु॰ कर्णवेधयोनयोरप्पत्ययोर्विद्यमानयोस्तृतीयस्यापत्यस्यसम्भावनायाम ॥

षट्कर्म्मा । पु॰ यागादिभिर्युते ब्राह्मणे ॥ षट्कर्माण्यध्ययनादीन्यस्य । तानियथा । इज्याध्ययन

वृत्तान्तरे । यथा । षट्कलमादौ त दनु चतुष्कुरग परिमन्तनु ॥ इयेदि कल कलय चतुष्पदमेत्र स सुतनु॰ । छन्द षट्पदनामभवतिफणिना यकगीत॰ रुद्रे विरतिमुपैतिन्दव तिसुखकरमुपनीतम्। उल्लालयुगलमन्ते भवेदृष्टाबि शतिकलमिदम्॰ पृशुपञ्चदशेविरतिमितपठनेप ण्डितजनहितम् ॥ तथा । बाम्रक रोदरकलितकमलसोदरसचिवदना॰ गुरुपुरतोपितवेवनामनल्पतिगुरुमदना॰ भवदभिलषणविशेषरभसपारशेषितदिवसा॰ सुख्तिचन्द्र भयेनरजनिमभिजोवितमपिसा। निजहृदि विनिहितभवदभिसरणारचितरङ गमनङ गमति॰ भवदीयविलोकनमन्तरानमनोरथमुखमनुभवति ।

षट्पदप्रिय । पु॰ नागकेशरवृक्षे ॥ न॰ रक्तोत्पले ॥

षट्पदा । स्त्री॰ यूकायाम् ॥

षट्पदातिथि । पु॰ आम्रवृक्षे ॥

षट्पदानन्द । पु॰ पुष्पवृक्षविशेषे । किङ्किराते । पीतभद्रे ॥

षट्पदानन्दवर्द्धन । पु॰ किङ्किराते । अशोकपादपे ।

षट्पदी । स्त्री॰ यूकायाम् । वृ॰ हे॰ म्द्र॰ ॥

षट्पदेष्ट । पुं॰ नीपे । कदम्बे ॥

षट्प्रज्ञ । पु॰ कामिनीनो। कामुकेषिङ्गे ॥ धर्मादिचार्थमर्मज्ञे । यथा । धर्मार्थकाममोक्षेषु लोकतत्त्वार्थयोरपि । षट्सुप्रज्ञास्तियस्योच्चै॰ सषट्प्रज्ञइतिस्मृत ॥ इ॰ चि॰ शेष ॥

षड । पु॰ पेयान्तरे । भेदे ॥

षडश । त्रि॰ षष्ठांशे ॥ सज्ञा शब्दस्वरूपलिखिषयेपूरणार्थत्वम ॥

षडङ्ग । पु॰ वेदे ॥ षट्शिक्षादीन्यङ्गान्यस्य । चतुर्गोत्रुरकी । न॰ शिक्षादिषे दाङ्गेषु ॥ यथा । शिक्षाकल्पोव्याकरण निरुक्त ज्योतिष तथा । छन्दश्चेतिषडङ्गानिवेदानां वैदिकाविदु ॥ छन्द पादौतु वेदस्यहस्तौकल्पस्तुकाथ्यते । ज्योतिषामयननेत्र निरुक्त श्रोत्रमुच्यते ॥ शिक्षाघ्राणन्तुवेदस्यमुखव्याकरणस्मृतम् । तस्मात्साङ्गमधीत्यैव ब्रह्मलोकेमहीयते ॥ इ॰ स्मृति ॥ शरीरस्यषडवयवे । यथा । जङ्घे बाहूशिरोमध्य षडङ्गमिदमुच्यते॰ इति ॥ हृदादिषु ॥ हृच्छिरश्शिखाकवचनेत्रमयमन्त्रम् । करतलकरपृष्ठेषषडङ्गन्यासकर्माणि ॥ गव्यविशेषे ॥ यथा ॥ गोमूत्र गोमय क्षीरं सर्पिर्दधिचरोचनाष डङ्गमेतन्माङ्गल्यपवित्र सर्वदागवामितिस्मृति ॥

प्रकाश ॥

षड्गया। स्त्री॰ षड्विधगयायाम ॥ यथा। गयागजोगयादित्योगायत्रीचगदाधर। गयागयासुरश्चैव षड्गयामुक्तिदायिकेतिवायुपुराणे गयापद्धति ॥

षड्गवम्। न॰ गोषट्कयुक्तहलादौ ॥ यथा। अष्टागवधर्म्यहलषड्गवजीविकार्थिनाम्। चतुर्गवनृशंसानांद्विगवब्रह्मघातिनाम ॥ षण्णांगवांसमाहार। गोरतद्धितलुकीतिसमासान्तष्टच ॥

षड्गुणरहित। पु॰ मधुरादिषड्गुणरहितेपरमात्मनि ॥

षड्गुणेश। पु॰ षडिन्द्रियनियन्तरि ॥

षड्ग्रन्थ। पु॰ महाकरञ्जपादपे। षट्ग्रन्थयोयस्य। अच्प्रत्यन्ववपूर्वात्सामलोम्न इति योगविभागादच्॥ षट्ग्रन्थायस्यवा ॥

षड्ग्रन्था। स्त्री॰ वचायाम्॥ षट्ग्रन्था ग्रन्थयोयस्या सा ॥ शठ्याम्॥ शुक्लवचायाम्॥

षड्ग्रन्थि। पु॰ षटपर्व्वणि ॥ स्त्री॰ वचायाम ॥ न॰ पिप्पलीमूले॥

षड्ग्रन्थिका। स्त्री॰ शठ्याम। गन्धमूल्याम ॥ षट्बह्वीग्रन्थयोयस्या। स्वार्थेकन् ॥

षड्ज। पु॰ तन्त्रीसमुत्थिते॰ कण्ठोत्थितेचस्वरविशेषे॥ षड्भ्यस्थानेभ्योजात। पञ्चम्यामितिड ॥ यथा। नासाकण्ठमुरस्तालुजिह्वादन्तांश्चसंस्पृशन्। षड्भ्यसञ्जायतेयस्मात्तस्मात्षड्जइतिस्मृत ॥ मयूरस्वरतुल्यस्वरोऽयम। यथा। षड्जंरौतिमयूरोहिगावोनर्दन्तिचर्षभम्। अजाविरौतिगान्धारंक्रौञ्चोनदतिमध्यमम ॥ तानसेनमतेसप्तस्वराणामध्येप्रथमस्वरोऽयम्॥

षड्धा। अ॰ षट्प्रकारे॥ संख्यायाविधार्थेधा॥

षड्विध। त्रि॰ षट्प्रकारे॥ षट्विधा प्रकारायस्य॥

षड्भावविरहित। त्रि॰ अस्तीत्यादिषड्विकारधर्मरहितेपरमात्मनि अस्तीत्यादयोयथा। अस्तिजायतेवर्द्धतेविपरिणमतेअपक्षीयतेविनश्यतीति॥

षड्भुज। त्रि॰ षड्हस्तयुक्ते॥

षड्भुजा। स्त्री॰ चण्डिकायाम्॥ रुद्रचण्डायाम्॥ चण्डवत्याम्॥ न॰ षड्रेखाभिर्येफललताविशेषे। मधुफलायाम्। हस्तकर्ण्याम्। तिक्तफलायाम्। खरबूजा॰ इ॰ भा॰ प्र॰ ॥ अस्या फलगुणाय था। तिक्तबाल्येतदनुमधुरकिञ्चि

षण्डाली । स्त्री॰ सरस्याम् । कामुक स्त्रियाम् । तैलमाने । कटाक॰ इ॰ भा॰ प्र॰ । दूर्तस्तेमचन्द्रोमेदिनिकरस्य ॥

षण्ढ । पु॰ षण्ढशब्दार्थे । शक्यलिङ्गिस्त्राभावात् । शमउपशमे । शमेढं । बाहुलकात्षः । यद्दा । सनति । षमष्टमवैकल्ये । अनिटैत्वादिनाषमेर्ढं । बाहुलकात्सत्वाभाव ॥ अस्यदर्शनेसूर्यदर्शनम्॰ स्पर्शनम्॰ स्पर्शेतुस्नान सूर्यावलोकनञ्चप्रायश्चित्तम् ॥

षण्मुख । पु॰ कार्त्तिकेये । स्कन्दे । षट मुखान्यस्य ॥

षण्मुखा । स्त्री॰ षट मुजायाम् । खरबूजा॰ इ॰ भा॰ ॥

षट् । त्रि॰ सङ्ख्यान्तरे । छ है॰ इ॰ भा॰ । सङ्ख्येये ॥

षष्ठि । स्त्री॰ सङ्ख्यान्तरेसाठ॰ इ॰ भा॰ । सङ्ख्येये । षट दशत परिमाणमस्य । प्रकृते षष्भावश्च प्रत्ययोऽपद्दत्वञ्च॰ पङ्क्तिविंशतित्रिंशत्चत्वारिंशत्पञ्चाशत्षष्टीतिनिपातनात् ॥

षष्टिक । पु॰ न॰ ब्रीह्मौ॰ धान्यविशेषे । साठी॰ इ॰ भा॰ प्र॰ । षष्टिकाह्विधान्यविशेषा षष्टिका षष्टिरात्रेणपच्यन्तइतिष्टतीयान्तात्कन्॰ रात्रशब्दलोपश्चनिपात्यते । धान्यविशेषपञ्जाय सानुनासिकं पु॰ तिपिषष्टिरात्रेणपच्यन्ते ॥ अस्यलक्षणगुणाश्चयथा । गर्भस्थाएवयेपाकयान्तितेषष्टिकामता ॥ षष्टिक शतपुष्पश्चप्रमोदकमुकुन्दकौ । महाषष्टिकइत्याद्या षष्टिका समुदाहृता ॥ एतेपित्रीहयः प्रोक्तात्रीहिलक्षणदर्शनात् ॥ षष्टिकामधुराशीतालघवीबद्धवर्चस । वातपित्तप्रशमना शालीनासदृशागुणै । तत्र॰ साठागुणा । षष्टिकायाम ॥ अपिच । गौरानील षष्टिकोऽयद्विधास्या इ॰ द्योरुच्य शीतलोदोषहारी । बल्य पथ्योग्नीपनोबीर्यकृत्त्वि इत्तेतस्मात्किञ्चिदूनोद्वितीय ॥

षष्टिका । स्त्री॰ साठोतिप्रसिद्धधान्ये । अस्या गुणा । षष्टिका प्रवरातेषालघ्वीस्निग्धात्रिदोषजित् । स्वाद्वीमृद्वीग्राहिणीचबलदाज्वरहारिणीति ॥ रक्तशालिगुणैस्तुल्यास्तत स्वल्पगुणा परे ॥ तेशाषष्टिकशतपुष्पाद्यैमाम् । परे॰ षष्टिकशतपुष्पाद्य ॥ शरदिषष्टिकाभिः पावयन्निन्त्यमितिवाचस्पतिमिश्रा ॥

षष्टिक्यम । न॰ षष्टिकधान्योत्पत्त्युचितभूमौ ॥ षष्टिकानाभवनङ्क्षेत्रम् । यवयवकषष्टिकाद्यादितियत् ॥

ग · सान्द्रश्चेतृषाडव स्मृत · ॥ इति ॥ अपिच । षाडवामधुराम्ला दिरससंयोगपाचितादिति ॥ गुडा ख्युप्रभृतय षाडवादयत्यर्थ ॥

षाडुर्गिक । पुं॰ इन्द्रियषड्वर्गविषये ॥

षाड्गुण्यम् । न॰ राज्ञांरञ्चकारणोपा येषुषट्सु ॥ यथा सन्धानासनम् • सन्धि कृत्वाऽवस्थानम् १ यात्रा सन्धानम् २ । विगृह्यासनम् • वैरं कृत्वावस्थानम् । ३ । यात्रां सम्परिगृह्यासनम् • शत्रोभयप्रद र्शनार्थं यान प्रदर्श्यस्वस्थानेऽवस्था नम् ४ द्वैधीभाव • उभयचस्त्रीकरणम् ५ । अन्योन्यास श्रय • दुर्गादिभिर्ह्वाराजस्यावाश्रय ६ इतिमहाभारतेराजधर्म . ॥ सन्धि नाविग्रहीयानमासन द्वैधमाश्रयस्त्वमर ॥ षड्गुणाएव । चतुर्वर्णा दित्वात्स्वार्थेष्यञ् ॥

षाण्मातुर । पु॰ शक्तिधरे । कार्त्ति केये ॥ षण्णामातृणामपत्यम् । मा तुरुत्सङ्ख्यासम्भद्रपूर्वायाइत्यधि • उत्व रपरत्वञ्च ॥

षाष्ठ । त्रि॰ षष्ठे ॥

षिङ्ग : । पु॰ कामकेलौ । कामुके । नागरे । विटे । लुच्चा॰ इ॰ भा॰ ॥ सेटति॰ षिच्यतेवा । षिटचनादरे । वाहुकात्कन्॰ सत्वाभावश्च ॥

षु । पु॰ गर्भविमोचने ॥

षोडन् । त्रि॰ षड्दन्तयुक्ते ॥ षट्द न्ताअस्य । वयसिदन्तस्यदतृदादे श । तत · षषउत्व दत्वदशधासूत्त रपदादिष्टुत्वञ्च॰ धासुवेतिवाच्यम ॥

षोडश । त्रि॰ षोडशानाम्पूरणे । तस्यपूरणेडट ॥

षोडश । पु॰ नित्यबहुवचनान्त । ए काधिकपञ्चदशसङ्ख्यायाम् ॥ ग र्भाधानादिसंस्कारेषु ॥ तेयथा । गर्भाधान पुंसवन सीमन्तोन्नयनतथा । जातकर्माभिधानञ्चनिष्क्रम प्रा शनन्तत ॥ चूडोपनयन वेदव्रता नाञ्चचतुष्टयम् ॥ गोदान मेखला मोक्षोविवाह षोडशक्रमात् ॥ ष ट्चदशचषडधिकादशवा । षषउ त्व दत्वदशधासूत्तरपदादेष्टुत्वञ्च॰ धासुवेतिवाच्यम् ॥ त्रि॰ सङ्ख्येये ॥

षोडशक · । पु॰ षोडशसङ्ख्यापरि मितेगणविशेषे ॥ यथा । षोडशक स्तुविकारइति । पञ्चभूतानि॰ ए कादशेन्द्रियाणिचेत्येतानिविकारप दवाच्यानि ॥

षोडशकला । स्त्री॰ चन्द्रमण्डलस्य षोडशधाविभक्तभागेषु ॥ यथा । अमृ तामानदापूषातुष्टि . पुष्टीरतिर्धृ ति । शशिनीचन्द्रिकाकान्तिर्ज्यो त्स्नाश्री प्रीतिरङ्गदा ॥ पूर्णापू र्णामृताकामदायिन्य शशिन

मकपाश्वविशेषे ॥ समयाध्युषिते सूर्ये षोडशिन स्तोत्रमुपाकरोति ॥

षोडशी । स्त्री॰ दशमहाविद्यान्तर्गत महाविद्याविशेषे ॥ यथा । काली तारामहाविद्याषोडशीभुवनेश्वरी । भैरवीछिन्नमस्ताचविद्याधूमावती तथा ॥ बगलासिद्धविद्याचमातङ्गी कमलात्मिका । एता दशमहाविद्या सिद्धविद्या प्रकीर्त्तिता ॥ जनविंशतिपिण्डदानक्रियायाम ॥ षोडशानापूरणी । डट् । ङीप् ॥

षोढा । अ॰ षड्धा । षट्प्रकारे ॥ षोढाषट्धाव.कुरु । सङ्ख्यायाविधार्थेधा । षषउत्व दढदशधासूत्तरपदादेष्टुत्वञ्च॰धासुवेतिवाच्यम् ।

ष्ठीवनम् । ) ष्ठेवनम् । ) न॰ मुत्कृत्यश्लेष्माप्रक्षेपे ॥ ष्ठिवुनिरसने । ल्युट् । ष्ठिवुसिव्योर्ल्युटिटेर्दीर्घोवेतिवामी ।

ष्ठ्यूतम् । त्रि॰ ष्ठीवने ॥ ष्ठिवु॰ । का मणि क्त । च्छ्वोरित्यूठ् ॥

सकारादिशब्दप्रारम्भः

स । पु॰ उकारे ईश्वरे । सर्पे ॥ पक्षिणि । विष्णौ ॥ सगणे॰ । ऽपु॰ ।

सय । पु॰ कङ्काले ॥ ह्॰ श॰ च॰ का ॥

संयत् । पु॰ स्त्री॰युद्धे । आयोधने । समितौ ॥ संयतनम्॰ संयमनवा । यतीप्रयत्ने॰ यमउपरमेवा । सम्पदादित्वात्क्विप् । गमादीनामितिमलोप । तुक् ॥

संयत । त्रि॰ बद्धे । संयम्यतेस्म । यम॰ । क्त ॥ कृतसंयमे ॥

संयतेन्द्रिय । त्रि॰ वशीकृतेन्द्रिये ॥ संयतानिविषयेभ्योनिवर्त्तितानि॰ इन्द्रियाणियेनस ॥

संयत्त । त्रि॰ उद्युक्ते ॥

संयद्वर । पु॰ नृपे । संयच्छति । यम॰ । छत्वरच्छत्वरेतिष्वरच् । निपातनान्मस्यद ॥

संयन्ता । त्रि॰ संयमनकर्त्तरि । नियन्तरि ॥ संयच्छति । यम॰ । सम्पूर्व तृच् ॥

संयम । पु॰ व्रताद्यङ्गपूर्वदिनकर्त्तव्याचारे । नियमे । विरमे । यामे । यमे । संयामे । संयमने । धारणाध्यानसमाधिरितित्रयमेवाविषय॰ संयमशब्देनोच्यते । त्रयमेकत्र संयमइतितन्त्रज्ञाः ॥ सर्वथानुष्ठेय सकलपुरुषार्थोपयुक्तोयसंयम । तथाचमनु । इन्द्रियाणां विचरतांविषयेष्वपहारिषु । संयमेयत्नमातिष्ठेद्विद्वान्यन्तेववाजिनामिति ॥ विद्वान्॰ विषयेषुवर्त्तमानानामिन्द्रियाणामर्थित्वादिदोषान्जानन्नित्यर्थ ॥ धर्माधर्मात्मदानेनानुग्रहनिग्रहेच ॥ संयमनम् । यम । समुपनिविप्रुच्वेतिपक्षेऽप

॥ स यती ॥

स यमक । वि० नियन्तरि ॥ संय मिनि ॥

स यमन । पुं० यमलोके ॥ न० ब न्धने ॥ व्रते ॥

स यमनी । स्त्री० यमस्य पुर्य्याम् ॥ यथो क्तश्रीमृगेन्द्रसंहितायाम् ॥ मृत्यो स यमनी तुङ्ग लोहप्राकारमण्डला । कालपाशविनिर्व्याधि प्रेतमारीनिषे विता ॥ कालपाशादिजुष्टा० ऽत्यु न्नतायसप्राकारसमूहा० स यमनी नामदक्षिणस्याम्यपुरीत्यर्थः ॥

स यमित । वि० आत्तस यमे ॥ ता रकादित्वादितच् ॥ यमिते ॥

स यमी । पु० मुनौ ॥ लि० स यमव ति ॥ स्थितप्रज्ञे ॥ यानिशासर्वभू तानातस्यांजागर्त्तिस यमी ॥ स य मोऽस्यास्ति । इनिः ॥

स यात्रा । स्त्री० सम्यग्यात्रायाम् । पोतैःसमुद्रपारगमने ॥ समुद्रता नौगमने ॥

स याम । पु० स यमे ॥ स यमनम् । यम. समुपनिविसुचेतिपक्षे घञ् ॥ स यते ॥

सयाव । पुं० घृतक्षीरगुडगोधूमचूर्णसिद्धे भोज्यविशेषे ॥ यथा । संया वस्तु घृतक्षीरगुडगोधूमपाकाकृति ॥ पिष्टकविशेषे । पेराक० पिराको ० इ० भा० प्र० ॥ यथा । पर्प्य माज्यसमितानिर्मिताघृतभर्ज्जि- ता । कुट्टितायोजिता: शुभ्रा शर्कराभिर्विमर्द्दिता ॥ ततश्च र्णेन्यपिदेलालवङ्गमरिचानिच । ना लिकेरसकर्पूरं चारवीजान्यनेकश ॥ घृताक्तसमितापुष्टेरोटिकारचिता तत । तस्यातत् पूरणं न्यस्य कुर्या न्मुद्रांदृढासुधी ॥ सर्पिषिप्रचुरे तान्तुसुपचेन्निपुणोजन । प्रकारशे प्रकारोयसयावइतिकीर्त्तित ॥ म ठकेनसमोज्ञेय . संयावोपिगुणै र्जनै. ॥ सोमे० गंभा०इतिप्रसिद्धो यम् ॥ संयूयतेमिश्रीक्रियतेगुडादि भि । यु० । समियुद्रुदुवइतिघञ् ॥

सयुक्त । वि० संलग्ने । संयोगाश्रये ॥ सम्यक्युक्त ॥

सयुक्तसमवाय । पुं० सन्निकर्षे ॥ यथा० घटरूपप्रत्यक्षे सयुक्तसमवा य. सन्निकर्ष: । चक्षु: संयुक्तेघ टेरूपस्यसमवायात् ॥

सयुक्तसमवेतसमवाय । पुं० सन्निक र्षविशेषे ॥ यथा० रूपत्वसामान्य प्रत्यक्षे० सयुक्तसमवेतसमवाय: सन्निकर्ष । चक्षु: सयुक्तेघटेरू पंसमवेतम्० तत्ररूपत्वस्यसमवा यात् ॥

संयुग: । पुं० युद्धे । आयोधने । अ न्येरथे ॥ सयोजनम् । युजिर्० । घञ् । रथयुगेतिनिर्द्देशाद्गत्वा

त्रम • पृथक्त्वमेद ' । एकस्यास्त्रा दिरस्यक्रत्वर्थत्वपुरुषार्थत्वरूपोभयार्थत्वकल्पेवाक्यद्वयेनचक्रतुशेषत्वफल शेषत्वलक्षणस योगभेदादवगमान्नि त्यानित्यस योगविरोध । तथा श्रयणानार्थं नित्यवाक्य • सन्निधा नादेवाश्रयलाभात् । अतउभयार्था खादिरतेति । एव दध्नाजुहोति• द ध्नेन्द्रियकामस्येत्यादावुभयार्थ तेव । दधित्वस्यद्वे धाश्रवणादितिप्राय चित्ततत्वम् ।

सयोगित । त्रि• आतस योगे ॥ तार

सयोगी । त्रि• सयोगविशिष्टे ॥ कादिस्वादितत्र् ॥

सयोजनम् । न• सयोगे॥ रतिलक्षे । नि धुवने । मैथुने ।। इ• हारावली ।।

संयोजित । त्रि• पदार्थान्तरेणसयु क्तौक्रतेपदार्थे । उपाहिते । मेलि ते ॥ सयोज्यतेस्म युजिर् • । क्त । क्त ॥

संरब्ध ' । त्रि• संरब्धे । कुपिते ।।

सरम्भ ' । पु • आटोपे ॥ उत्साहे ॥ यथा। कार्यारम्भेषुसरम्भ'स्थे यउत्साहउच्यते ॥ कोपे । क्रोधे ॥ यथा । प्रणिपातप्रतीकार स रम्भोहिमहात्मनाम् ॥ सरम्भणम् । रभराभस्ये । घञ् । रभेरशब्लुटो रितिनुम् ॥

संरम्भी । त्रि• कुपिते • संरम्भयुक्ते •

सराधि । स्त्री• निष्पत्तौ ॥

सराधनम् । न• समाध्यादौ । भ क्तिध्यानप्रणिधानाद्यनुष्ठाने ॥ स राध्यतेऽनेन । राध • । भावक रणादौल्युट् ॥

संराव । पु • आरवे । आरावे । शब्दमा त्रे ॥ सरवणम । रुशब्दे । उप सर्गेरुवइतिभावेघञ् ॥

सरावी । त्रि• प्रशस्तशब्दविशिष्टे ॥

सरुद्ध । त्रि• प्रतिबद्धे ॥ विरा याञ्जतिख्याते ॥

सरूढ । त्रि• प्रौढे ॥ अङ्कुरिते ॥ सम्यग्वाद्विगत्यर्थेतिक्त । ढत्वधत्व ष्टुत्वढलोपदीर्घा ' ॥

सरोध पु• क्षेपे । रोधे । स रोधनम् । रुधिर् । घञ् ॥

सलग्न ' । त्रि• संयुक्ते ॥ सम्य क्लग्न : ॥

सलय । पु• निद्रायाम् । शयने ॥ सम्यक्लीयतेऽत्र । लीङ्श्लेषणे । एरच् ॥ प्रलये ॥

संलाप । पु • प्रीत्यामिथोभाषणे । अन्योन्यप्रीतिभाषणे ॥ स ल पनम् । लप • । घञ् ॥ आ लापएवनापिक्रियते• संलापस्तुपर स्परभाषणमेवेतिभेद ' ॥ उक्तिप्र त्युक्तिमद्वाक्यंसलापइतिकीर्त्यते ॥ कृत्यकल्पलतोक्तमिथ : ॥

संव : । पु • शम्बे । वज्रे । कुलि

शि । संवयति । वय० । अच् ॥

संवत् । अ० वर्षे । वत्सरे ॥ संवयति । वयगतौ । क्विप । यलोपः । तुक ॥

संवत्सरः । पुं० वत्सरे । अब्दे । सम्यग्वसन्त्यवर्त्तवो मासादयश्च । वसनिवासे । सपूर्वाच्चिदिसरप्रत्यय । सत्वार्द्धधातुकइतिसः ॥ त संवत्सरपरिवत्सरेडावत्सरानुवत्सरोद्वावत्सरेषुप्रथमवत्सरे ॥ ततयदाशुक्लप्रतिपदिसङ्क्रान्तिर्भवति० तदासौरचान्द्रयोर्मासयोर्युगपदुपक्रमोभवति० ससंवत्सरः । तत सौरमानेन० वर्षेषड्दिनानिवर्द्धन्ते० चान्द्रमानेन० क्रसन्तोयिद्वादशदिनव्यवधानादुभयोरपपञ्चान्तावेभवति । एवपञ्चवर्षाणिगच्छन्ति । तन्मध्येद्वौमलमासौभवतः षष्ठः संवत्सरोभवति । तदेवचान्तरभेदेन० संवत्सरादिपञ्चकसमामनन्ति ॥ एवामुद्धारस्तु । मलाब्दात्पञ्चभिः शेषात्सम्वादिषुवत्सराः । सम्परीदानुपूर्वास्तथोद्वापूर्वकामता० इति ॥ कालात्मवास्थितिविषौ ॥

संवत्सरमुखी । स्त्री० ज्येष्ठशुक्लदशम्याम् । दशहरायाम् ॥ यथा । ज्येष्ठस्यशुक्लदशमीसंवत्सरमुखीस्मृता । तस्यांस्नानप्रकुर्वीतदानमेवविशेषतः । इतिब्रह्मपुराणम् ॥

संवत्सरा । स्त्री० दुर्गायाम् ॥

संवद् । अ० वर्षे ॥ संवदतिभाषान् । वद० विच ॥

संवदनम् । न० संवादे ॥ समालोचे ॥ वशीकृतौ ॥

संवननम् । न० वशक्रियायाम् । वशीकरणे ॥ सम्पूर्वोवनुयाचने वशीकरणार्थे । ल्युट ॥

संवरः । पु० अनेकात्मवादिनांसमपदार्थान्तर्गतपदार्थविशेषे ॥ यथा । इन्द्रियसंयमलब्धप्रतिष्ठध्यानम्० आस्रवनिरोधात्मकत्वात्०सह्यणोत्यास्रवमितिसंवरस्तुर्थे० । वृङ्वृञ्भ्यां० ग्रहवृ० दित्यादिना कर्मण्यप ॥

संवरणम् । न० गोपने ॥ सम्यकवरणवेष्टनम् ॥ आवरणे ॥

संवर्गः । पु० प्राणे ॥ वायौ ॥ संवर्जनादर्थात्सङ्ग्रहणात्० सङ्ग्रसनाद्वाऽग्न्यादीनां० वायुः । संवर्गः । संवृङ्क्ते । वृजि० । घञ् । कुत्वम् ॥

संवर्गविद्या । स्त्री० वायूपासनविद्यायाम् ॥ संवर्गस्यविद्या ॥

संवर्त्तः । पुं० प्रलये ॥ संवर्त्ततेजगत् । वृतु० । हलश्चेतिघञ् ॥ मुनिविशेषे ॥ स्मृत्यादिप्रसिद्धेपर

प्रापणे । स्वार्थेऽवयवात्ल्युट् । वाहनमाहितादितिनिपातनाद्दीर्घं वृत्तेर्वे ॥
संवाहित । त्रि॰ सञ्चारिते ॥
संविग्न । त्रि॰ उद्विग्ने । सम्भ्रान्ते ॥ ओविजीभयचलनयोः स पूर्व. । क्त । ओदितश्चेतिन । श्वीदितइतिनेट् ॥
संवित्ति । स्त्री॰ प्रतिपत्तौ ॥ ज्ञानवादे ॥ विद्ज्ञाने । स्त्रियांक्तिन् ॥
संवित्॰ द्॰ स्त्री॰ ज्ञाने ॥ सम्भाषायाम् ॥ क्रियाकारे । आजौ । सङ्ग्रामे । नाम्नि ॥ अङ्गीकारे ॥ प्रतिज्ञायाम् ॥ आचारे । तोषणे ॥ संज्ञे ॥ सत्कृते ॥ यथा । प्रहृतौचनिहन्तौचसंविद्स्थापयेद्बृणेदृति । कृतव्यवस्थायाम ॥ यथा । संविद्व्यतिक्रमदृति ॥ मनीषायाम् ॥ संवेदनम्॰ संविद्यतेऽनयावा । विद्ज्ञाने॰ विद्चेतनादौवा । सम्पदादित्वात्क्विप् ॥
संविदित । त्रि॰ अङ्गीकृते । अवोकृते । संविद्यतेस्म । विद्ज्ञाने । क्त ॥
संविधा । स्त्री॰ भोग्यवस्तुनि । सामग्र्याम ॥ संविधीयतेऽनया । संविपूर्वात्धाञ्धातवोपसर्गेकृ-

तिक ॥
संविधानम् । न॰ उत्पादने ॥
संविभाग. । पु॰ विभज्यप्रतिपादने ॥
संविद्यतीर्थम । न॰ तीर्थविशेषे ॥
संविषा । स्त्री॰ अतिविषायां ॥
संवीक्षणम । न॰ अन्वेषणे । अपहृतवस्तुनस्तात्पर्येणान्वेषणे । सम्यक्तात्पर्येणविविधप्रकारैरीक्षणम् ॥
संवित । त्रि॰ रुद्धे । आवृते । नद्यादिनावेष्टिते । संवीयतेस्म । व्येञ्संवरणे । क्त ॥
संवीताङ्ग. । त्रि॰ आच्छादितदेहे ॥
संवृत. । त्रि॰ सङ्कुचिते ॥ यथा । नासंवृतमुखः कुर्याद्धास्यजृम्भातथाच्युतमिति ॥ निगूढे । गुप्ते । संवेष्टिते । सम्पूर्वाद्वृञ. क्त . ॥
संवृत्ति । स्त्री॰ वागिन्द्रियप्रयुक्ते व्यवहारे ॥ गोपने ॥ संवरणम् । वृञ॰ क्तिन् ॥
संवृत्त. । त्रि॰ सञ्जाते । सम्यक्प्रवृत्ते ॥ सम्पूर्वाद्वृतंते । क्त. ॥ पु॰ वरुणे ॥
संवृत्ति । स्त्री॰ संवरणे ॥ अविद्याविषयेलौकिकेव्यवहारे । लौकिकार्यबुद्धौ ॥ अविद्यायाम् ॥ संव्रियते॰ आच्छाद्यतेतत्त्वंयया । विभ्रमे ॥ संवर्तनम् । वृतु॰

ह॰समानेत्यादि । उपपत्तिज्ञान म । तथाच॰ समानस्यविरुद्धध कोटिद्वयसाधारणधर्मस्यज्ञानादित्यर्थः । तथाचसाधारणधर्मवद्धर्मिज्ञानजन्योऽसाधारणधर्मवद्धर्मिज्ञानजन्यश्चेत्यर्थः । विप्रतिपत्तिविरुद्धकोटिद्वयोपस्थापकशब्दस्तस्मादित्यर्थः । यद्यपिशब्दस्य नसंशायकत्वम्॰ तथापिशब्दात् कोटिद्वयोपस्थितौमानस संशय इतिवदन्ति उपलब्ध्यनुपलब्धेश्चज्ञानस्य॰अनुपलब्धेर्व्यतिरेकज्ञानस्ययाऽव्यवस्था सद्विषयकत्वानिर्धारणं प्रामाण्यसंशयइतिफलितार्थः ॥ अन्येतु उपलब्ध्यव्यवस्थाप्रामाण्यसंशय । अनुपलब्धिरुपलब्ध्यभावत्वम्॰ तदव्यवस्थ ततसंशयइत्याहु । वस्तुतस्तुप्रामाण्यसंशयस्यसंशयहेतुत्वम्॰किन्तुगृहीताप्रामाण्यकज्ञानस्य विरोधितयासतिप्रामाण्यसंशयेतज्ज्ञानगृहाविरोधितयासाधारणधर्मदर्शनादितएवसंशयोत्पत्तिरिति । उपलब्ध्येत्यादिकताद्दृशस्थलेसंशयो भवतीत्येतावन्मात्रपरम् । चकारोव्याप्यसंशयस्यव्यापकसंशयहेतुत्वसमुच्चिनोतीतिवदन्ति । विशेषापेक्ष कोटिस्मरणसापेक्ष । वस्तुतस्तुसंशयधारावाहिकत्वख्यादतआह । विशेषेति । विशेषविशेषस्यकम॰

अपेक्षतेनिवर्तकत्वेन॰ तथाच॰ विशेषदर्शननिवर्त्यत्वकथनमुखेनविशेषादर्शनजन्यसंशयइत्युक्तम् ॥ १।२३ ॥ संशयनम् । शीङ् एरच् ॥

संशयात्मा । त्रि॰ इदमेवमभवतिनवेति सर्वत्रसंशयाक्रान्तचित्ते ॥ संशये॰ आत्मामनोयस्य ॥ संशयात्माविनश्यति ।

संशयान । त्रि॰ संशयापन्ने । संशययुक्ते ॥

संशयापन्न । त्रि॰ संशयिनि ॥

संशयापन्नमानस । त्रि॰ सन्देहके । संशयिते । सांशयिके ॥ संशयमापन्नं मानसंयस्य॰ यस्मिनविषये वा ॥

संशयालु । त्रि॰ संशयितरि ॥

संशयित । त्रि॰ सन्देहविषये । विचिकित्सिते ॥

संशयिता । त्रि॰ सन्देशाश्रये । संशयकर्त्तरि ॥ यथाहु । अस्तिनयमित्यस्मिन्नर्थेकश्चास्तिसंशयः पुंस । अत्रापिसंशयश्चेत्संशयिता य, सएवभवसिलम् ॥ ४ ॥

संशित । त्रि॰ सम्यकसम्पादिते ॥ संशितव्रतम् । सम्यक्सम्पादितमित्यर्थः ॥ व्रतविषयकयत्नवति ॥ संशितोव्रात्यः । व्रतविषयकयत्नवानित्यर्थः ॥ सम्यक्शायतेस्म

द्विगुसंसर्गोमुच्यतेनकदाचन ॥
स सक्ति । स्त्री॰ सश्लेषे ॥
स सत्॰द् । स्त्री॰ परिषदि । सभाया
म् ॥ स सीदन्त्यस्याम् । षद्लृविश
रणादौ । सम्पदादित्वात्क्विप ॥
स सरणम । न॰ असम्बाधचमूगतौ
। रथादीनामसम्बाधगमने ॥ घण्टा
पथे । नगरस्योपनिर्गमे ॥ स सारे
॥ रणारम्भे ॥ समारम्भे ॥ प्राणिज
न्मनि ॥ पुन पुनर्योनिसम्बन्धे ॥
गतौ ॥ सम्यक् सरन्त्यनेन॰ सम्भू
यसरन्त्यनेनाचवा । सृगतौ । कार
णादौल्युट् । बाहुलकाद्वाल्युट ।
युवतयुक्त । घञ्लुङपवादत्वात ॥
स सर्ग । पु॰ सङ्गे । सङ्गमे ॥ सम
बायादिसम्बन्धे ॥ स सर्जनम्॰
सस्त्ज्यतेवा । सृज॰ । घञ् ॥
स सर्गाभाव । पु॰ सम्बधरच्छितत्वे
॥ न्यायमतेचभावपदार्थविशेष ।
सतुभेदभिन्नाभाव । सचत्रिविध
। प्रागभाव १ ध्वंस २ अत्यन्ता
भाव ३ इतिभेदात् । यथा । अ
भावस्तुद्विधासंसर्गान्योन्याभावभेद
त : । प्रागभावस्तथाध्वंसोप्यत्यन्ता
भावएवच ॥ एवं त्रैविध्यमापन्न
स सर्गाभावइष्यते । इ॰ भा॰ प॰
॥ भेदत्वतादात्म्यसम्बन्धावच्छिन्न
प्रतियोगिताकाभावत्वम् । विनाश्य
भावत्वं प्रागभावत्वम् १ जन्याभाव
त्वम्ध्वंसत्वम् २ नित्यसंसर्गाभाव
त्वमध्वंसत्वम् २ नित्यससर्गाभाव
त्वमत्यन्ताभावत्वम् ३ । इतिसि
द्धान्तमुक्तावली ॥
स सर्गी । त्रि॰ स सर्गविशिष्टे ॥ म
त्वर्थीयइनि ॥ सङ्गिन ॥ सम्पूर्वा
त्सृजे॰सम्पृचानुरुधेतिघिनुण् ॥
स सर्प । पु॰ मासविशेषे ॥ यथा
। यदाक्षयमासोभवति॰ तदाक्षय
मासस्यपूर्वोत्तराबधिमासौभवत :
। तत्रपूर्वस्मिन्नधिमासे ॥ सचनम
लमास : किन्तुशुद्धतुल्य । उत्त
रएवासक्रान्तोमलमास । तथाच
काचालि । एकस्मिन्नपिवर्षेचेद्द्वौ
मासावधिमासकौ । पूर्वोमास ·
प्रशस्त.स्यादपरस्तुमलिम्लुचइति ॥
ससर्पणे ॥
ससर्पणम । न॰ सम्यक् प्रकारेणग
मने ॥
स सर्पी । त्रि॰ स सर्पविशिष्टे । स
म्यग्गमनशीले ।
स सार । पुं॰ कृषाज्ञानसम्भूतवा
सनायाम् ॥ यथा । स सारश्चमिथ्या
धीप्रभवावासनेति ॥ भवे । स्वाह
ष्टोपनिबद्धशरीरपरिग्रहे । जन्मम
रणलक्षणे । प्रमत्ततापमुखेकार्त
त्वादनर्थे ॥ अविद्यायाम् ॥ यथो
क्त शङ्कराचार्यै । स सार स्वप्नतु
ल्योहिरागद्वेषादिसङ्कुल । स्व

कान्तिसत्यवक्रातिप्रबोधेऽसत्यवक्रवेदि
ति ॥ अपि च । अयमविचारितया
हतयासंसारोभातिरमणीय । अ
थपुनः परमार्थदृशानकिमपिसा
रेणरमणीयकृतिचिन्त्यमिमं ॥
दुःखे ॥ कृच्छ्रेणासेव्यमध्ये निय
मिततनुभिः स्त्रीयतेगर्भवासे ।
कान्ताविश्लेषदुःखव्यतिकरविषमे
यौवनेचोपभोगः । वामाक्षीणाम
वज्ञाविहसितवसतिर्वृद्धभावोऽप्यसा
धुः संसारेरेमनुष्या वदतयदिसु
खस्वल्पमप्यस्तिकिञ्चित् ॥ संसरति
कालान्तरम् । सृ । घञ् ॥
संसरणम् वा ॥ दुःखमूलमिदंस
संसारः सयस्यास्तिसदुःखितः ।
त्यागः कृतोयेनससुखीनापरः प्रि
ये ॥ प्रभवंसर्वदुःखानामालयं
सकलापदाम् । आश्रयंसर्वपापा
नांसंसारंवर्जयेत्प्रिये ॥ अध्रुव
मनर्थौरमलीकतमप्यविषम् । अ
नन्तखण्डनदेविसंसारं सन्त्यजेत्सा
म् ॥ आदिमध्यावसानेषुदुःखस
र्वमिदंयतः । तस्मात्सन्त्यज्यसं
सारंतत्त्वनिष्ठःसुखीभवेत् ॥ इ
तिकुलार्णवे १ उल्लासः ॥

संसारगुरु । पुं । प्रद्युम्ने । काम
देवे । मनोजन्मनि । रूपास्त्रे । सं
सारगुरु ॥

संसारबन्धनिर्मुक्ति । स्त्री । नाना
योनिसम्बन्धनिवृत्तौ ॥ संसार एव
बन्धः । तस्मान्निर्मुक्तिः ॥

संसारमार्ग । पुं । मिथ्याज्ञाने ॥
भगे । योनौ ॥

संसारबीजम् । न । कामकर्मप्रवृत्ति
कारणे अज्ञाने ॥

संसारवृक्ष । पुं । अव्यक्तादिस्थावरा
न्तेद्रुमसदृशे ॥ यथा । कदलीसम
वज्रसारोऽनेकशतपात्रसङ्कुलविवि
क्तस्त्वक्सारविविक्तसुभिर्निर्भे
दितेदृतत्त्वो । वेदान्तनिर्धारितपर
ब्रह्ममूलसारो । ऽविद्याकामकर्मा
व्यक्तबीजप्रभवो । ऽपरब्रह्मविज्ञान
क्रियाशक्तिद्वयात्मकहिरण्यगर्भाङ्कु
रः । सर्वप्राणिलिङ्गभेदस्कन्धः ।
तत्तृष्णाजलावसेकोद्भूतदर्पो । बु
द्धीन्द्रियविषयप्रवालाङ्कुरः । श्रु
तिस्मृतिन्यायविद्योपदेशपलाशो ।
यज्ञदानतपआद्यनेकक्रियासुपुष्पः
सुखदुःखवेदनानेकरसः । प्रा
ण्युपजीव्यानन्तफलस्तत्तृष्णासलि
लावसेकप्ररूढजटीकृतदृढबद्धमूल
सत्यनामादिसप्तलोकब्रह्मादि
भूतपक्षिकृतनीडः । प्राणिसुख
दुःखोद्भूतहर्षशोकजातनृत्यगीत
वादित्रक्ष्वेलितास्फोटितहसिताकृष्ट
रुदितहामुञ्चमुञ्चेत्याद्यनेकशब्द
कृततुमुलीभूतमहारवो । वेदान्त
विहितब्रह्मात्मदर्शनासङ्गशस्त्रकृतो

च्छेदएष संसारवृक्षो निरूपितो वेदान्तेष्वाचार्यैः ॥ तथोक्तं श्रीकृष्णमिश्रैः । अमुष्य संसारतरोरविद्यामूलस्य चोन्मूलविनाशनाय । विश्वेश्वराराधनवीजजाततत्त्वप्रबोधान्न परोऽभ्युपायः ॥ इति ॥

संसारहृत् । पुं॰ आत्मबोधे ॥

संसारहेतु । पुं॰ आत्मनोऽविद्यायाम् ॥

संसारी । पुं॰ संसारविशिष्टप्राणिनि । भोक्तरि । संसारोऽस्यास्ति । इनि ॥ कर्तृत्वादिधर्मवति ॥

संसिद्धि । स्त्री॰ सम्यक्सिद्धौ ॥ प्रकृतौ ॥ स्वभावे ॥ मदोद्धतायां स्त्रियाम् ॥ मुक्तौ । मोक्षे ॥ देहेन्द्रियसङ्घातस्याऽशुद्धिक्षयेण सम्यग्ज्ञानोत्पत्तियोग्यतायाम् । श्रवणादिसाध्यायां ज्ञाननिष्ठायाम् ॥ फले ॥ साङ्ख्ययोगमनुष्ठायपरिसमाप्तेन संसिद्धिरिति योगिनः ॥ संसेधनम् । षिधु संराद्धौ । क्तिन् ॥

संसृति । स्त्री॰ संसारे ॥ प्रवाहे ॥ संसरणं । सृ॰ । क्तिन् ॥

संसृष्टः । त्रि॰ संसर्गे ॥ वमनादिना संशुद्धे ॥ विभागानन्तरं प्रीत्या पुनः संमिलितधने ॥ यथा । विभक्तो यः पुनः पित्रा भ्रात्रा चैकत्र संस्थितः । पितृव्येणाथवा प्रीत्या स तु संसृष्ट उच्यते॰ इति बृहस्पतिः । संसर्जनम् । सृज॰ । क्त ॥

संसृष्टि । स्त्री॰ काव्यालङ्कारविशेषे ॥ यथा । सैषा संसृष्टिरेतेषां भेदेन यदिह स्थितिः । एतेषां शब्दार्थालङ्काराणां यथासम्भवमन्योन्यनिरपेक्षतया॰ यदिह॰ शब्दभागएव॰ अर्थविषयएव॰ उभयत्रापि वाऽवस्थानं॰ सैकार्थसमवायस्वभावसंसृष्टिः । तत्र शब्दालङ्कारसंसृष्टिर्यथा । वदनसौरभलोभपरिभ्रमद्भ्रमरसम्भ्रमसम्भृतशोभया । चलितया विदधे कलमेखलाकलकलोऽलकलोलदृशान्यया । अर्थालङ्कारसंसृष्टिर्यथा । लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः । असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥ पूर्वत्र परस्परनिरपेक्षौ यमकानुप्रासौ संसृष्टिं प्रयोजयतः । उत्तरत्र तु तथाविधे॰ उपमोत्प्रेक्षे । शब्दार्थालङ्कारयोः संसृष्टिर्यथा । सो णत्थि एत्थ गामे जो एअं महमहन्तलावण्णम् । तरुणाण हिअअलुण्ठिं परिसक्कन्तीं णिवारेइ ॥ स नास्ति अत्र ग्रामे य एतां स्फुरल्लावण्याम् । तरुणानां हृदयलुण्ठनं परिसर्पन्तीं निवारयतीति संस्कृतम् ॥ हृदयलुण्ठनमिति रूपकम्॰ आयुष्टमिति वत् । पूर्वार्द्धे तु अनुप्रासः । एवं शब्दार्थालङ्कारयोः संसृष्टिरियम् ॥ अत्रानुप्रा

अथ पृथिवीगुण ० केषाञ्चिन्मते पृथिव्यादिचतुष्पदार्थानांगुण : ० अयमतीन्द्रिय स्पन्दनकारणञ्च । भावनाख्यसंस्कार २ अयमात्मनोऽतीन्द्रियगुण ० उपेक्षानात्मनिश्चयजन्य · ० अथ स्मरणप्रत्यभिज्ञयो : कारणञ्च ॥ यथाहुर्विश्वनाथतर्कालङ्कार । संस्कारभेदो वेगोऽथ स्थितिस्थापकभावने । मूर्त्तमात्रे तुवेग स्यात्कर्मजोवेगज क्वचित् ॥ स्थितिस्थापकसंस्कार · क्षितौकेचिच्चतुर्ष्वपि । ० अतीन्द्रिय सविज्ञेय क्वचित्स्पन्देपिकारणम ॥ भावनाख्यस्तुसंस्कारोजीववृत्तिरतीन्द्रिय । उपेक्षाऽनात्मकस्तस्यनिश्चय · कारण भवेत् ॥ स्मरणे प्रत्यभिज्ञायामप्यसौकारण भवेदिति ॥ अथ जातकर्मादिक्रियाकलाप समय उक्तकालक्रमेणशरीरसंस्कारार्थं स्त्रीणामपिभवति । तथाचाहमनु : । अमन्त्रिकातुकार्य्येय स्त्रीणामावृदशेषत : । संस्काराथं शरीरस्ययथाकालं यथाक्रमम् ॥ वैवाहिकोविधि · स्त्रीणांसंस्कारो वैदिक : स्मृत । पतिसेवागुरौवासोगृहार्थोऽग्निपरिक्रियेति ॥ आद्यत् ० जातकर्मादिक्रियाकलाप : । यथ्रुक्त्वमेवसाय प्रात : समिद्धोमादिरूपोऽग्निपरिचर्य्यारूप . ॥

संस्कारज . । त्रि० संस्कारात्जाते ॥

संस्कारवर्ज्जित । पु० व्रात्ये ॥ त्रि० गर्भाधानादिसंस्कारविधुरे ।

संस्कारस्कन्ध · । पु० वासनाप्रपञ्चे । रूपविज्ञानवेदनासंज्ञास्कन्धानांवासनायाम् ॥ रागद्वेषाभिनिवेशेषु । रागादय . क्लेशा ० उपक्लेशा मदमानादयो० धर्माधर्मौचेतिवा अस्यतिमिश्रा ॥

संस्कारहीन . पु० व्रात्ये ॥ त्रि० गर्भाधानादिसंस्कारवर्ज्जिते ॥ संस्कारैरुपनयनादिभिर्गर्भाधानादिभिर्वा० हीन ॥

संस्कार्य्य । पु० कर्मभेदे० प्रोक्षादौ ॥ त्रि० संस्कारार्हे ॥

संस्कृतम् । न० लक्षणोपेते । पाणिन्यादिव्याकरणबोधिते । गीर्वाणवाण्याम् ॥ संस्कृत नामदैवीवागन्वाख्यातामहर्षिभि . ॥ त्रि० कृतिमे ॥ शस्ते ॥ भूषिते ॥ संस्क्रियते स्म । क्त ॥ व्युत्पन्ने ॥ अपनीतमले । शोधिते ॥ कृतसंस्कारे ॥ पक्वे ॥

संस्कृतात्मा । पु० दीक्षयादीक्षिते ॥

संस्कृति . । स्त्री० संस्क्रियायाम् ॥

संस्करणम् । ड्कृञ् ० । क्तिन् ।

संस्क्रिया । स्त्री० संस्कृतौ ॥ शवदाहादिक्रियायाम् ॥ मलापनयने ॥

संस्कारायकरणम् । डुकृञ् । कृञ भवेतिश । रिङ् इयङ् ॥ आष्

र्णो विप्रभिन्नयश्च सवर्णोत्तम स्त्रियाम् । शैवेनवत्म नाकुर्याद्देवधर्म कलौयुगे ।

संस्तर । पुं॰ प्रस्तरे । पल्लवादिरचितशय्यायाम । साथरा॰ इ॰ भा॰ प्र॰ ॥ अध्वरे । यज्ञे ॥ संस्तीर्यते । स्तृञ् आच्छादने । ऋदोरप् ॥

संस्तव । पुं॰ परिचये । सङ्गतिस्तवने ॥ संस्तवनम् । ष्टुञ् स्तुतौ । ऋदोरप् ॥ सम्यक् स्तुतौ ॥

संस्तवान । त्रि॰ वाग्मिनि ॥ संस्तौति । ष्टुञ्॰ । सम्यानच् स्तुवश्छन्दस्यानच् ॥

संस्ताव । पु॰ क्रतुषु द्विजन्मनांस्तुतिभूमौ । यज्ञे छन्दोगैः क्रियमाणायां स्तुतेर्भूमौ । यज्ञे स्तावकद्विजानांस्थानभूमौ ॥ समेत्यस्तुवन्त्यत्र । ष्टुञ्॰ । यज्ञे समिस्तुवइत्यधिकरणे ल्युटोपवादो घञ् ॥ संस्तवनं वा ॥

संस्तुत । त्रि॰ सम्यक् स्तुतिविषयीभूते ॥ संस्तूयतेस्म । ष्टुञ्॰ । क्त ॥ सहभावेन निरूपिते ॥ परिचिते ॥

संस्त्यानम् । न॰ संहतौ । उपचये ॥

संस्त्याय । पु॰ सन्निवेशे ॥ संस्थाने ॥ विस्तृतौ ॥ सङ्घाते ॥ संस्त्यानम् । स्त्यै ष्ट्यै शब्दसङ्घातयोः । घञ् । आतोयुक् ॥ गृहे ॥ यथा । संस्त्यायान् प्रविशेयुरिति ॥

संस्थ । पु॰ चरे ॥ निजराष्ट्रवासिचरे ॥ क्रतुभेदे ॥ सन्तिष्ठतेऽनेन । ष्ठा॰ । अङ् ॥ त्रि॰ अवस्थिते ॥

संस्था । स्त्री॰ स्थितौ ॥ सादृश्ये ॥ नाशे ॥ न्याय्यपथस्थितौ । मर्यादायाम् ॥ सन्तिष्ठतेऽनया । सम्यगवस्थानं वा । ष्ठा॰ आतश्चोपसर्गे इत्यङ् ॥ अवस्थायाम् । समाप्तौ ॥ व्यक्तौ ॥ प्रलयचतुष्टये । यथा । नैमित्तिकः प्राकृतिको नित्यआत्यन्तिको लयः । संस्थेति कविभिः प्रोक्तश्चतुर्धास्य स्वभावतः इति पुराणम् ॥

संस्थानम् । न॰ आकृतौ ॥ मृतौ ॥ सन्निवेशे ॥ चतुष्पथे ॥ संस्थीयतेऽनेनवा॰ संस्थितिर्वा । ष्ठा॰ । भावाधिकरणादौ ल्युट् । चिह्ने ॥ त्रि॰ चिवादौ ॥ समीचीनं स्थानमस्य ॥

संस्थापनम् । न॰ स्थिरीकरणे ॥

संस्थित । त्रि॰ मृते ॥ व्यवस्थिते । सम्यक् स्थिते । उत्थिते । सन्तिष्ठतेस्म । ष्ठा॰ गत्यर्थाकर्मकेतिक्तः ॥

संस्थिति । स्त्री॰ तत्त्वे । संस्थाने ॥ मृत्यौ ॥

संस्पर्श । पुं॰ स्पर्शे । त्वगिन्द्रियग्राह्यगुणविशेषे । यथा । चापाङ्गानसंस्पर्शात्॰ नि: श्वा

सात्संस्वेदजनात् । सङ्घमध्यासमा
ध्यायात्पापसङ्क्रमतेनृणामिति-
च्छागलेय ॥ सम्प्रयोगे । सम्ब
न्धे । संस्पर्शनम् । स्पृशस्प
र्शने । अकर्तरि च कारके संज्ञा
यामिति घञ् ॥

संस्पर्शजः । त्रि॰ विषयेन्द्रियसं
बन्धाज्जातेभोगे । येहि संस्पर्शजा
भोगा दुःखयोनय एव ते । आद्यन्तवन्त
कौन्तेय न तेषु रमते बुधः ॥

संस्पर्शा । स्त्री॰ जलूकायाम् । जनी
नामगन्धद्रव्ये । स्पृशति । संस्पृ
श्यते वा । स्पृश॰ । पदरुजेति
घञ् । पचाद्यच् । कर्मणि घञ्
वा ॥

संस्फाल । पुं॰ मेषे ॥

संस्फुट । त्रि॰ फुल्ले । विकसिते
॥ स्फुटति । स्फुट विकसने । इगु
पधेति कः ॥

संस्फेट । पुं॰ युद्धे । रणे ॥
संस्फेटनम् । स्फिट अनादरे ।
घञ् ॥

संस्फोट । पुं॰ युद्धे । संस्फोट
नम् । स्फुटिर् । घञ् ॥

संस्मरणम् । न॰ संस्कारजन्यज्ञाने ।
संस्मृतौ

संस्मृतिः । स्त्री॰ संस्मरणे ॥ स्त्रि
यांक्तिन् ॥

संस्वेदजम् । न॰ स्वेदजशाकविशे
षे ॥ तथाहि । उक्तं संस्वेदज
शाकं भूमिच्छत्रं शिलीन्ध्रकम् । क्षि
तिगोमयकाष्ठपुष्पादिषु तदुद्भवे
सर्वे संस्वेदजाः शीतदोषलाः पि
च्छिलाश्चैव गुरवश्छर्द्यतीसारज्व
रश्लेष्मामयप्रदाः ॥ श्वेताः शुचि
स्थलोकाष्ठवंशगोव्रजसम्भवाः ना
तिदोषकरास्तेषु शेषास्तेभ्यो
विगर्हिताः ॥ त्रि॰ भुवः शरी
रस्य च संस्वेदात् उष्मणो जाते दंशमश-
कादिरूपेभूतग्रामे ॥

संहत । त्रि॰ संहते । मिलिते
दृढे ॥ दृढसन्धौ ॥ संहन्यतेस्म
। क्तः ॥

संहतजानु । त्रि॰ सक्थी । संह
तजानुके ॥

संहतजानुक । त्रि॰ सञ्ज्ञौ ॥
संहते मिलिते जानुनी यस्य सः ॥

संहतल । पुं॰ मिलितपाणिद्वये
। प्रतले । संहतले । विस्तृता
ङ्गुल्योर्मिलितयोर्मिदक्षिणयोः पा
ण्योः ॥ संहतसङ्घट्टलाति ।
ला॰ । आतोनुपसर्गे क इति कः ॥

संहतिः । स्त्री॰ समूहे । वृन्दे ।
निकुरम्बे । कदम्बके ॥ अल्पानाम
पि वस्तूनां संहतिः कार्यसाधिका ।
तृणैर्गुणत्वमापन्नैर्बध्यन्ते मत्तद-
न्तिनः ॥ संहतिः श्रेयसी पुंसां
स्वकुलैरल्पकैरपि । तुषेणापि प

कण्टकी ॥ वि॰ कण्टकयुक्ते ॥

सकर । त्रि॰ सहस्ते ॥ राजस्व विशिष्टे ॥ शुण्डयुक्ते ॥ सकिर णे ॥ करैश्वसहवर्त्तते य स ॥

सकरुण । त्रि॰ सदये । करुणा विशिष्टे ॥

सकर्ण । त्रि॰ श्रवणशीले । श्रुति तत्परे ॥ सावधाने ॥

सकर्म्मक । पु॰ कर्मयुक्तपचत्यादि धातुषु ॥

सकल । पुं॰ सगुणशिवे ॥ यथा शारदातिलके । निर्गुण स गुणश्चेतिशिवोज्ञेय सनातन । निर्गुण प्रकृतेरन्य सगुण सकल स्मृतद्रुति ॥ कलाप्र कृतिस्तयासहवर्त्तते ॥ त्रि॰ सम्पू र्णे । सर्वस्मिन् ॥ कलान्विते । कलाभि परिपूर्णे ॥

सकलप्रिय । पु॰ पगासे ॥ त्रि॰ सर्वेषांप्रीतिविषये

सकलाज्ञानम् । न॰ समष्ट्यज्ञाने ॥

सकषाय । त्रि॰ सरागे ॥ कषाये चकामक्रोधादिमलेनसहवर्त्तमाने ॥ कषायविशिष्टे । कसैला॰ हि॰ भा॰ प्र॰ ॥

सकाम । त्रि॰ कामनाविशिष्टे । कामिनि ॥ पुसीयाविषयापिवास कामवृत्तिभण्यते । तैनयुक्तोदीन मना सकाम प्रोच्यतेबुधै ॥ सकामाश्चैवनिष्कामाद्विविधाभुवि मानवा । कामिनांफलमित्युक्तं चयित्युभवप्राप्यवत् । निष्कामा वान्तुनिर्वाणपुनराद्यशिवविभ्रितम्॥ सहकामेनवर्त्तते । सहस्यस ॥

सकाश । पु॰ समीपे ॥ त्रि॰ का शयुक्ते ॥

सकुरुण्ड । पु॰ साकुरुण्डवृक्षे ॥

सकुल । त्रि॰ कुलान्विते ॥

सकुल्य । त्रि॰ सगोत्रे । सप्तम पुरुषानन्तरद्वयमपुरुषपर्य्यन्तस न्तती ॥ दशाहेनसपिण्डास्तुशुध्य न्तिप्रेतसूतकी ॥ त्रिरात्रेणसकुल्या स्तु॰ स्नात्वाशुद्ध्यन्तिगोत्रजा ॥ दायाधिकारिसकुल्यास्तु॰ पञ्चमपुरु षावधय । यथाहबोधायन । प्रपितामह॰ पितामह॰ पिता॰ स्वय॰ सोदर्य्यभ्रातर॰ सवर्णाया पुत्र॰ पौत्र॰ प्रपौत्रोवाएतानवि भक्तदायादान्सपिण्डानाचक्षते । विभक्तदायादान्सकुल्यानाचक्षते सत्स्वङ्गजेषुतद्गामीह्यर्थोभवतीति ॥

सकृत् । अ॰ सहार्थे ॥ एकवारे॥ एकवारम् । एकस्मिन्सक्रदितिसु च् । सयोगान्तलोपेतिसुचोलोप ॥ सकृदशोनिपततिसकृत्कन्या प्रदीयते । सकृदाहददानीतित्री ण्येतानिसतांसकृत् ॥

सकृत्प्रज । पुं॰ काके । वायसे ॥

सक्रियम् । न॰ व्यक्ते । परिस्पन्दवति । तथाहि । बुद्ध्यादयउपात्तमूर्त्त देहत्वजन्ति॰ देहान्तरस्थोपादद तद्वर्त्तितेषांपरिस्पन्द । शरीरपृथिव्यादीनाञ्चपरिस्पन्द . प्रसिद्धएव ॥ त्रि॰ क्रियासहिते ॥

सक्षण । त्रि॰ कृतावसरे ॥

सचक्रम् । अ॰ चक्रियायाश्चायोगपद्ये चक्रत्वे ॥ चक्रियायासम्पत्ति अव्ययविभक्तीतिसम्पत्तावव्ययीभाव । सम्पत्तिश्चसमस्यमानोत्तरपदस्थयोग्यप्रवृत्तिनिमित्तम् ॥

सक्षम । त्रि॰ क्षमतायुक्ते ॥ क्षमाविशिष्टे ॥

सक्षार । त्रि॰ लवणयुक्ते ॥

सखा । पुं॰ मित्रे । सुहृदि । वयस्ये । सवयसि । स्निग्धे । अहितेप्रतिषेधश्चहितेचैवप्रवर्त्तनम् । व्यसनेचापरित्यागस्त्रिविधसखिलक्षणम् ॥ अपिच । सन्त्यागासहनोबन्धुसदैवानुगत . सुहृत् । एकक्रियोभवेन्मित्रसमप्राणःसखाभवेदिति ॥ समान ' ख्यायतेलोके । ख्याप्रकथने । समानेख्य सचोदात्तद्तोण्॰ सबडित्॰ यलोप : ॰ समानस्यतूदात्त . सहत्यादेशस्य ॥ सहाये । अमात्यादौ ॥

सखिता ।) स्त्री॰ \
सखित्वम ।) न॰ सख्ये

सखी । स्त्री॰ आली । वयस्यायाम् ॥ सख्यशिश्वीतिङीष् ॥

सख्यम् । न॰ मैत्र्ये । मित्रतायाम् । साप्तपदीने । सौहार्दे ॥ दशाव्दाख्यपौरसख्यपञ्चाव्दाख्यकलाभृताम । त्र्यव्दपूर्वश्रोत्रियाणास्वल्पेनापिस्वयोनिषु ॥ इतिमनु ॥ सख्युर्भाव कर्म्म वा । सख्युर्य ॥ सख्येनिषिध्यायथा । कृतवैरेशठेसक्ते कामुकेचगतघृणे।निर्लज्जेनैवकर्त्तव्यसख्यमतिमतासदेति । हितायसने ॥

सगद्गद ' । पुं॰ भयेनहर्षेणचाश्रुपूर्णनेत्रत्वे । सति॰ कफरुद्धकण्ठनतयायोश्चेोमन्दत्व सकम्पादिविकारस्तस्मिन् । त्रि॰ तद्वति ॥

सगन्ध । पु॰ अशके । ज्ञातौ दायादे । त्रि॰ गन्धयुक्ते ॥

सगर . । पु॰ अयोध्याधिपतौ॰ बाहुराजपुत्रे॰ सूर्य्यवशीयेनृपतिवरे ॥ नामनिदानन्तु । सपत्न्यातुगरस्तस्यदत्तोगर्भजिघांसया । गरेणसहतेनैवजातस्तत्सगरोऽभवदिति ॥ अर्हद्भेदे । त्रि॰ गरसहिते । सविषे ॥

सगर्भ । पुं॰ सोदरे ॥ समानोगर्भीयस्यस । सगर्भेतिनिर्देशात्समानस्यस ॥ अभ्यन्तरितसूक्ष्मपत्रादियुक्तकुशादौ ॥

हीते । शोण बिम्बौष्ठकान्त्यास्वदरि मृगदृशामित्वरीणामरण्ये राजन् गुञ्जाफलानां स्रजइति शबराणां वक्ष्य हरन्ति ॥ अत्र तद्गुणमपेक्ष्य भ्रान्तिमतः प्रादुर्भूतत्वात् तदाश्रयेण तद्गुण सचेतसां प्रभूतचमत्कृतिनिमित्तमित्यनयोरङ्गाङ्गिभावः ॥ अस्यान्ये भेदाः काव्यप्रकाशादिषु द्रष्टव्याः ॥

सङ्करी । स्त्री० सङ्कार्यम् ॥

सङ्करीकरणम् । न० नवविधपापान्तर्गतपापविशेषे ॥ यथाह विष्णुः । अथ पुरुषस्य कामक्रोधलोभाख्य रिपुत्रय भवति० परिग्रहप्रसक्तत्वविशेषाद् गृहाश्रमिणः । तेनायमाक्रान्तो ऽतिपातकमहापातकानुपातकोपपातकेषु वर्त्तते० जातिभ्रंशकरेषु० सङ्करीकरणेषु० अपात्रीकरणेषु० मलावहेषु० प्रकीर्णकेषु० ॥ तद्यथा । खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा । सङ्करीकरणं ज्ञेय मीनाहिमहिषस्य चेति मनुः ॥ गर्दभतुरगोष्ट्रमृगहस्त्यजागमेषमत्स्यसर्पमहिषाणामन्यतमस्य वधः सङ्करीकरणं ज्ञेयमिति कुल्लूकभट्टः ॥

सङ्कर्षकः । त्रि० सङ्कर्षणकर्त्तरि ॥

सङ्कर्षणः । पु० सीरपाणौ । बलभद्रे ॥ सम्यक् कर्षति शत्रुशरीरमायुधैः । कृषविलेखने । नन्द्यादित्वाल्ल्युः ॥ सम्यक् कृष्यते वा । कर्मणि ल्युट् ॥ गर्भस्थमस्य कर्षणात् । यथोक्तं हरिवंशे । गर्भसङ्कर्षणात् सोऽपि सङ्कर्षण स्मृत इति ॥ अहङ्काराधिष्ठातरि ॥ द्रष्टृदृश्ययोः सम्यक् कर्षणमेकीकरणं येन ॥ न० अन्यत्र स्थितस्यान्यत्र नयने ॥ आकर्षणे ॥ सम्यक् प्रकारेणाकर्षणम् ॥

सङ्कलनम् । न० क्रमादुत्क्रमतो वाऽङ्कयोगे । जोड़देना० इ० भा० प्र० कलशब्दसङ्ख्यानयोः । सम्पूर्व । ल्युट् ॥

सङ्कलित । त्रि० सङ्गृहे । सङ्गृहीते एकीकृते । अङ्कान्तरैरेकीकृताङ्के । जोड़ दिया अङ्क इति भाषा ॥ सङ्कल्यते स्म । कलसङ्ख्याने क्त ॥ पुञ्जीकृतधान्यादौ ॥

सङ्कल्प । पु० मानसकर्म्मणि । इदमहं कुर्यामिति मनसो व्यापारे । इदङ्करिष्यामीत्यादिलक्षणेऽन्तःकरणपरिणामे ॥ इद नीलमिदं पीतमिति विषयविवेचने ॥ इष्टसाधनताज्ञाने । समीचीनत्वेन भावने ॥ अहङ्करोमीति कर्तृत्वाभिमाने ॥ दुष्टेष्वपि विषयेषु० शोभनत्वादर्शनेन शोभनाध्यासे ॥ अनेन कर्मणेदमिष्टफलं साधयेत्० इत्येवं विषयायां बुद्धौ ॥ तिथ्याद्युल्लेखपूर्वकानामगोत्राद्युच्चारणपूर्वकवाक्यविशेषे ॥

ने ॥ सङ्क्षिप्यते सङ्क्षेपण वा । क्षिप० । घञ ॥

सङ्क्षेपणम । न० विस्तृतानां सङ्क्षेपणे । समसने सम्पूर्वात् क्षिपे ल्युट् ॥

सङ्क्षेपयोग । पुं ध्यानयोगभ्यसू क्ष्मध्यानेयोगे ॥ यमाहाजुनायश्री भगवान् । यथा । स्पर्शान्कृत्वा ब हिर्बाह्यांश्चक्षुश्चैवान्तरेभ्रुवो । प्राणापानौसमौकृत्वानासाभ्यन्तरचा रिणौ ॥ यतेन्द्रियमनोबुद्धिर्मुनि र्मोक्षपरायण । विगतेच्छाभयक्रो धो यः सदामुक्तएवसः ॥

सङ्क्षेप्ता । पुं० हरौ ॥ त्रि० सङ्क्षेपकारके ॥ विस्तृत सूक्ष्मरूपेणसङ्क्षिपति । क्षिपप्रेरणे । तृच ॥

सङ्क्षोभ । पुं० सञ्चलने । चा-ञ्चल्ये ॥

सङ्ख्यम । न० युधे । आस्कन्दने । युद्धे । सङ्ख्यानम् । चक्षिङ० ख्याप्रकथनेवा । भावेबाबाहुलका त् । त्रि० सङ्ख्येये ॥

सङ्ख्या । स्त्री० विमर्शे । चर्चायाम् । विचारणायाम् । विचारे ॥ सम्य क् विवेकेनात्मकथने । सम्यगात्म बुद्धौ ॥ एकद्वयादौ । अमाङ्ग मरसिंह : । सङ्ख्या सङ्ख्ये याद्यश्चिषु । विंशत्याद्या सदै कत्वेसर्वा । सङ्ख्येयसङ्ख्ययो



। सङ्ख्यार्थे द्विबहुत्वेस्तस्तासुचा नवतेः । स्त्रिय । पङ्क्ते शत सहस्रादिक्रमाद्दशगुणोत्तरमिति ॥ अस्यार्थ । आदश० दशशब्दमभि व्याप्य । आङ मर्यादाभिविध्योरि त्यव्ययीभाव । नपुंसकाद्न्यतर स्यामितिपक्षे टच् न । एकादिकान बदशपर्यन्ता ० सङ्ख्या । सङ्ख्येये० त्रिलिङ्गाच । तेनसङ्ख्या सङ्ख्येययो । सामानाधिकरण्ये नवर्त्तते । यथा० एक पट ० एकाशाटी० एक वस्त्रम् । त्रिशब्दो ऽवधारणे० सङ्ख्येयएव० नतुस ङ्ख्यायामित्यर्थ । तेन० एकोवि प्रइत्यादिभवतिनतुविप्रस्यैकइत्या दि । किन्तु । द्व्येकयोर्द्विवचनैक वचनइतिसूत्रे० द्व्येकयोरितिनि र्द्देशात्सङ्ख्यामात्रेपिसम्भव । तेनघटानांपञ्चत्वमित्यादितिसुभू ति । वार्त्ताकुरैबाशुषसमयुक्तेति नैवाकञ्चमङ्गच्छते । विंशतिराद्या यासांता सङ्ख्या । ० सङ्ख्येय सङ्ख्यायोर्वर्त्तते० एकवचनान्ता श्च० यथाविंशतिर्गाव. ० गवांविंश ति. । विंशत्यादीनांयदासङ्ख्या र्थस्तदाद्विवचनबहुवचनेऽपिस्त । यथाद्वेविंशती० गाव , ० गवां वातिस्रोविंशतयइति । तासुविंश त्यान्तवेतिनभिव्यापश्चौलिङ्गा ।

फलाभिलाषि । च सङ्गे । अत्यन्त सुखहेतुर्वैन्यैव शोभनाध्यासलक्षणे प्रीतिविशेषे ॥ अभिनिवेशे । च इष्टमेव करोमीति कर्तृत्वरूपे । कर्त्तृत्वाभिनिवेशे ॥ सञ्जनम् । षञ्ज सङ्गे । घञ् ॥ सङ्गोऽप्रवृत्तिरितिवा । यथा । बालमूत्रपुरीषाभ्यां सङ्गोऽधाः क्रमोक्ता । जठरेवातजाचान्यं रोगा स्युर्वातनिग्रहात् ॥ सङ्गा जठरे॰ इतिमस्यस्य ॥ प्रसिद्धे ॥

सङ्गणिका । स्त्री॰ अप्रतिरूपकथायाम् । द्र॰ त्रि॰ शेषिसङ्कीर्णवर्गः ॥

सङ्गतम् । न॰ सौहृदे ॥ सुखजननी ॥ । हृदयङ्गमैयुक्तियुक्तवाक्ये । सङ्गतियुक्ते ॥ सम्ब योगजीफले ॥ त्रि॰ सङ्गति ॥ युक्ते ॥ उपसन्ने ॥ सङ्गच्छतेस्म । गत्यर्थेतिकर्त्तरिक्त ॥

सङ्गति । स्त्री॰ सङ्गमे ॥ ज्ञाने ॥ उपोद्घाताद्विषट्के ॥ यथा । सप्रसङ्ग उपोद्घातो हेतुताऽवसरस्तथा । निर्वाहकैककार्यत्वे षोढा सङ्गतिरिष्यते ॥ सङ्गे पि । सङ्घट्टने ॥ सम्पूर्वाद्गमे क्तिन् ।

सङ्गतिका । स्त्री॰ वर्णवृत्तान्तरे ॥ यथा । सगण पुर कुरुशोभित जगदुद्वय गुरुस गतम् । फणिराजवक्त्रनिवेदिताभवतीह सङ्गतिकाविसा ॥ यथा । च यथेह किञ्चिदनुत्तरं प्रवदामितेन्द्रपसत्वरम् । तमदित्तु कीर्त्तिविलासिनीप्रतिभित्तु गेह निवासिनी ॥

सङ्गम । पुं॰ सङ्गे । मेलके ॥ नद्यादिमेलके ॥ स्त्रीपुंसयोर्मैथुनीभावे ॥ यथा । विदग्धस्य विदग्धेन सङ्गमो गुणवान् भवेत् । विदग्धायाद्दतिवा ॥ सच प्रथममध्यमोत्तमभेदात् त्रिविध । यथाह व्यास । त्रिविधं तत्समाख्यातं प्रथमं मध्यमोत्तमम् । अदेशकालभाषाभिर्निर्जनेच परस्त्रिया ॥ कटाक्षावेक्षण हास्य प्रथम साहस स्मृतम् । १ । प्रेरणं गन्धमाल्यानां धूपभूषणवाससाम् । प्रलोभनञ्चान्नपानैर्मध्यमं साहसं स्मृतम् । २ । सहासनं विविक्तेषु परस्परसमाश्रयम् । केशाकेशिग्रहश्चैवमस्यक् स उत्तमं स्मृतमिति भिताक्षरा ॥ सङ्गमनम् । अच्छन्द्रति गमेरप् ॥

सगर । पु॰ युद्धे । समरे ॥ आपदि ॥ क्रियाकारे ॥ सविदि । विषे ॥ अङ्गीकारे ॥ न॰ । अस्य पाले । सागर॰ द्र॰ भा॰ प्र॰ ॥ सगरश्च॰ स गीर्यतेवा॰ अनेनवा । गृ शब्दे । स्वदोरप् । पुंसीतिघोवा । प्रतिज्ञायाम् ॥ यथा । सत्यसगर : ॥

सगरहित । त्रि॰ नि सङ्गे ॥ अ

व्यतिक्रम । घुषिर् विशब्दने । क्ता रूप्यम् त्वरसङ्घुषास्सनामितिपच्चे इट ॥

सङ्घुष्ट । त्रि० सङ्घुषिते । सश ब्दिते । सम्यगघोषणाश्रये ॥ स ङ्घुष्यतिस्म । घुषिर्० रूप्यमत्वर सङ्घुषास्सनामितिपच्चेइडभाव ॥

सचल । त्रि० अचलभिन्ने । अस्थिरे ।

सचि । स्त्री० शच्याम् ॥ सर्वेन्द्रि येषुसचते । षचसमवाये । सर्व धातुभ्यइन् ॥

सचिक्कण । त्रि० स्निग्धे ॥

सचिव । पु० अमात्ये । मन्त्रिविशे षे ॥ कार्यसहाया सचिवाबुद्धि सहायास्समन्त्रिण : प्रोक्ताइतिभेद ॥ अथसचिवा : तेचभेदा७८अध्याये ५४८वशिष्ठोक्तेद्रष्टव्या । सहाये । चेटे । सचनम् । सच० । सर्वधा भ्यइन् । सचिवाति । वा० आ तोऽनुपसर्गेक ॥

सचिवामय । पु० विसर्परोगे ॥

सची । स्त्री० इन्द्राण्याम् ॥ कृदिका रादितिङीष ॥

सचीनन्दन । पु० जयन्ते ॥ गौडदे शोत्पन्ने कलौवैष्णवविशेषधर्मप्रव- र्त्तकेचैतन्यदेवे ॥ यथाशाकेमुनि व्योमयुगेन्दुगण्ये १४०७ पुण्ये तिथौफाल्गुनपौर्णमास्याम् । श्री शोकभाग्योदयपुण्यकीर्त्तिर्देव : सचीनन्दनआविरासीदितिचैत न्यचन्द्रोदयनाटकम् ॥

सचेतन । त्रि० सप्राणे ।

सचेता । त्रि० अव्याकुलचित्ते ॥ प्र सन्नचित्ते ॥

सचेष्ट त्रि० चेष्टयासहवर्त्तमाने ॥

सच्चारा । स्त्री० हरिद्रायाम् ॥

सच्चित् । न० ब्रह्मणि ॥

सच्चिदानन्दम् । न० ब्रह्मणि । नित्यज्ञानसुखस्वरूपे ॥ त्रि० सा कारदेवविशेषणे ॥

सच्चिदानन्दलक्षणम् । त्रि० पर मात्मनि ॥ सच्चिदानन्दे० अनृ तजडदु खप्रतियोगिभिर्व्यते० विरुद्धाश्चत्यागलक्षणयाभागलक्ष णयाज्ञायते० इतिसच्चिदानन्दल क्षणम् ॥ यहा । सन्तोसर्वदास्था यिनोयौचिदानन्दौज्ञानानन्दौतौ लक्षण स्वरूपमस्य ॥

सच्छाकम् । न० आर्द्रके ॥

सजम्बाल । त्रि० पङ्किले । पङ्कवि शिष्टे । जम्बालेनपङ्केनसहेति विग्रह ॥

सजाति । पु० समानजातिस्त्री पुरुषयो: पुत्रे ॥ यथा । सवर्णेभ्य सवर्णासुजायन्तेहिसजातय । अ निन्द्येषुविवाहेषुपुत्रा सन्तान वर्द्धना ॥ त्रि० समानजातौ ॥

सजातीय : । त्रि० समानजातीये ॥

सत्कर्म्म । न॰ वेदविहितक्रियायाम् ॥ सत्कर्म्मयोग्योनजनोनैवाप श्रीवकारणम । यस्मिन्नु दृते तस्मिन्मे दिवायभास्वती । इतिविष्णु पुराणम् ॥

सत्काण्डनार । पु॰ रक्तकाञ्चने ॥

सत्काण्ड पु॰ । चिल्ले ॥

सत्कार । पु॰ अह्वातिथये ॥ साधु रयतपस्वीत्र श्यापहृत्ये व क्रियमाणा यास्तुनी ॥ कोमुद्यादिषु ॥ यथा । तस्मादत्ता सदापूज्या भूषणा च्छादनाशने । भूतिकामेनरै नित्यसत्कारेषूत्सवेषुचेति । एता • माय ॥ पूजायाम् ॥

सत्कृत । त्रि॰ कृतसत्कारे पूजिते ॥ आहते ॥

सत्कृति । स्त्री॰ सत्क्रियायाम् । सत्कारे ॥

सत्क्रिया । स्त्री॰ सत्कारे । आदर स्यक्रियायाम् ॥ अवदाहादिक्रिया याम् । सत्क्रियायाम् ॥

सत्तम । त्रि॰ पूज्यतमे । साधीयसि । इत मे । अतिशोभने । अयमेषामतिशयेनस न् । अतिशायनेतमविष्ठनाविति तमप् ॥

सत्ता । स्त्री॰ सजातीयविजातीयस्व गतभेदरहितानुभूतौ । विद्यमान तायाम् ॥ साधुतायाम् । जाति विशेषे । इतिभाषापरिच्छेदः ॥ भावेतल् ॥

सत्तामात्रम् । त्रि॰ केवलपरमार्थस स्वरूपे ॥

सत्य । पु॰ श्रीरामे । दृशमुखान्तके । विष्णौ । यथा । आसमेप्यन्तरे च वायु सत्ये सहस्रधोत्तमे । सत्या यामभवत्सत्य सत्यरूपोजनार्द्दन इतिकौर्म्मे ४८ ऽध्याय ॥ अश्वत्थवृक्षे ॥ नान्दीमुखश्राद्धदेवे ॥ यथा । इष्टिश्राद्धेक्रतुर्द्दक्ष • सत्यो नान्दीमुखे सु । नैमित्तिकेकाल कामौ • काम्येचधुरिलोचनाविति ॥ तपोलोकादूर्द्ध्वतनेलोके । सत्य लोके ॥ यथ तत्कृगेन्द्रसहितायाम । तत सत्यमिय स्थानसत्य लोक स्वयम्भुव । कामातिश यसम्पन्न कोटयोनवसमध । सा त्रिन्नोमूर्त्तिमत्यास्ते यत्रदेदाश्चसा नुगा ॥ ततस्तपोलोकानन्तरम् • सत्यकत्तुर्हित्वात् • प्रमकस्याधि पत्यकव्रह्मण स्थानम् • इत्यर्थ ॥ न॰ कृतयुगे ॥ शपथे ॥ यथोक्तं श्रीमहानिर्वाणे । सत्यव्रतोमिस ल्पसत्पुष्टाकील गुरुहिजम् । ग ङ्गातोय देवमूर्त्तिं कुलशास्त्रं कुला मृतम् । देवीनिर्माल्यमथवाकथन शपथोभवेत । तथानृत वदन म र्त्य • कल्पान्तनरक व्रजेत् ॥ अपा पजनिकार्य्याण्यागेवाप्यर्था पिवा । तत्कार्यसर्व्वामत्यैँ स्वीकृत

सत्यवादी । त्रि॰ यथार्थवक्तरि । सत्योद्ये ॥

सत्यवृत्त । त्रि॰ अकपटचरिते ॥

सत्यव्रत । पु॰ ईश्वरे ॥ सत्यं व्रतसङ्कल्पोऽस्य ॥ सूर्यवंशीयस्त्रय्यारुणस्यात्मजे राजर्षिविशेषे । योऽसौ त्रिशङ्कुसंज्ञामवाप ॥ त्रि॰ सत्यसङ्कल्पे ॥

सत्यसङ्कल्प । त्रि॰ अमोघवाञ्छिते । ईश्वरे ॥ सत्यः सङ्कल्पोऽस्य ॥

सत्यसङ्गर । पु॰ विश्मिर्पसि । श्रीदे । कुवेरे ॥ कूटास्त्रबर्जितेशूरायुधे ॥ त्रि॰ सत्यप्रतिज्ञे ॥

सत्यसन्ध । पु॰ कैकयीतनये । भरते । जनमेजये ॥ त्रि॰ सत्यप्रतिज्ञे ॥ सता सन्धा प्रतिज्ञा यस्य ॥

सत्यसन्धा । स्त्री॰ द्रौपद्याम् ॥

सत्या । स्त्री॰ दुर्गायाम् ॥ जनकात्मजायाम् । सीतायाम् ॥ व्यासमातरि । सत्यवत्याम् ॥ सत्यभामायाम् ॥ विनापिप्रत्ययं पूर्वोत्तरपदलोप ॥ सत्यभामावत्याम् ॥ अविनाशिन्यां ॥

सत्याकृति । स्त्री॰ सत्यापने । मयैतदवश्यं कर्तव्यमितितथ्यकरणे । सत्यक्रिया॰ साहु॰ भा॰ प्रसिद्धनिश्चये ॥ सत्यस्य करणं । स्त्रियां क्तिन् । सत्यादशपथे॰ डाच् ॥

सत्याग्नि । पु॰ अगस्त्यमुनौ ॥ चूडामाग्नौ ॥

सत्यानृतम् । न॰ वाणिज्ये ॥ सत्यसहितमनृतम् । शाकपार्थिवादि ॥

सत्यापनम् । न॰ सत्यङ्कारे । सत्याकृतौ ॥ सत्यस्य करणम् । सत्यापपाशेतिणिजापुकौ । भावेल्युट् ॥

सत्योद्यम् । न॰ सत्यवचो । सत्यस्यवदने ॥ वद सुपिक्यप् चेतिक्यप् ॥

सत्रम् । न॰ कृतौ । यज्ञे ॥ सदादाने ॥ आच्छादने ॥ अरण्ये ॥ कैतवे ॥ यज्ञविशेषे । गवायनादिक्रतुविशेषे ॥ यत्रयजमानाएवसमानाः ऋत्विगादिरूपेण॰ कर्म कुर्वन्ति॰ तस्मिन् यज्ञे सदञ्चियेसततान्नदाने ॥ धने ॥ गृहे ॥ कर्मणि ॥ सीदन्त्यस्याऽनेनवा । षद्लृविशरणगत्यवसादनेषु । ष्ट्रन् ॥ गुधुशीङ्‌भ्यादिनावोभः ॥ सतः साधून् त्रायतेवा । त्रैङ् पालने । आतोनुपसर्गेकइतिकः । नपुंसकत्वात्सत्रमिति ॥

सत्रम् । अ॰ सहार्थे ॥ सत्रायते । त्रैङ्पालने । अम् । यदोहितम् ॥

सत्रशाला । स्त्री॰ प्रतिश्रये । अन्नदानाद्युद्दवसिते ॥

सत्रा । अ॰ सहार्थे ॥ सत्राकृत्वेगीर्व्याम् ॥ सत्रायते । त्रैङ्॰ । क्विप् ॥

सत्राजित् । पु॰ कृष्णस्य श्वशुरे ॥

स्यात्तेतोवी । चि० सत्त्ववहुले ।
जडेसत्त्वविसाल ॥ सत्त्वेनविशा
ल ॥

सत्त्वसंशुद्धि : । स्त्री० अन्त करणस्य
निर्मलतायाम् । श्रवणादिपरंपरा
श्रेयान्त : करणस्यासंभावनाविप
रीतभावनादिमलराहित्ये सम्य
क्शुद्धि 'सम्यद्धि सत्त्वस
शुद्धि ' । तथा सम्यक्भगवत्त
त्वस्फूर्तियोग्यता ॥

सत्त्वसङ्क्षय । पु० चित्तभङ्गे ॥
प्रारब्धकार्यासिद्ध्यादिविषाद स
त्त्वसङ्क्षय . ॥

सत्त्वसमाविष्ट । चि० सत्त्वेनच त्म
ना० आत्मविविक्तज्ञानहेतुनाचित्त
गतेनातिशयेन० सम्यगज्ञानप्रति
बन्धकरजस्तमोमलराहित्येन० आ
समन्तात्फलाव्यभिचारेण० आवि
ष्टेव्याप्ते ॥

सत्त्वसम्पन्न । चि० सद्भावापन्ने ॥

सत्त्वस्थ . । चि० सत्त्ववृत्तिप्रधाने ।।
पु० विष्णौ ॥ सत्त्व सत्त्वगुण प्रका
शात्मकमधितिष्ठतिपालनोपाधित
याविष्णुरूपेणेतिसत्त्वस्थोविष्णु
। यद्वासत्त्वेसुसर्वप्राणिषुजीवरूपे
णान्तर्यामिरूपेणचतिष्ठतीतिसत्त्व
स्थ ' । स्था० । सुपिस्थइतिक ।।

सत्पत्रम् । न० संवर्त्तिकायाम् ॥

सत्पथ . । पु० पथिसतोऽध्वनि ' । स
मासौपथ्यायश्च । सन्महदितितत्पु
रुष । समासान्तश्च ॥

सत्पुत्र । पु० सद्पत्ये ॥ सत्पुत्रे
णतुजातेनयोपिदिदिवत्रयौ । पु
न्नाम्नोनरकात्त्रात सत्तेनसुमहा
त्मना ॥

सत्पुरुष : । पु० पूज्यमानपुरुषे ॥

सत्प्रतिग्रह । पु० साधुजनदत्तद्र
व्यग्रहणे ॥ सद्भ्य ' साधुभ्य प्र
तिग्रहोदानग्रहणम् । यथा । सप्त
वित्तागमाधर्म्यादायोलाभ क्रियो
जय । प्रयोग कर्मयोगश्चसत्प्र
तिग्रहएवचेतिमनु ' ॥

सत्प्रतिपक्ष । पु' तुल्यव्यक्तौ । प्र
तियोगिनि ॥ न्यायमते० साध्या
भावसाधक हेत्वन्तर यस्यतस्मिन्-
॥ यथा । शब्दोनित्य : श्रवणत्वात्
शब्दवत् । शब्दोऽनित्य कार्यत्वात्
घटवदिति ॥ यद्वा । ह्रदोवह्निमा
न्धूमात्० ह्रदत्वाद्दोवह्न्यभावव्या
प्यवद्भ्रदादिरिति ॥

सत्फल । पु० दाडिमवृक्षे ॥ शोभ
नफलवतिवृक्षे ॥

सत्सङ्ग । पु० साधुसङ्गमे । सधर्म्म
वर्त्तिजनसमागमे । यथोक्त कुला
र्णवे । सत्सङ्गश्चविवेकश्चनिर्मल न
यनद्वयम् । यस्यनास्तिनर सो
न्ध . कथ नस्यादमार्गगइति ॥

सत्सार . । पुं० खादिरे । खदिरसा

रे । वृक्षविशेषे ॥

सयुत्कारम । न॰ अव्यङ्कृते ॥ युत्का रैयसद्वर्त्त माने ॥

सदंशक । पु॰ कर्कटे । कुलीरे ॥ त्रि॰ दंशयुक्ते ॥

सदंशवदन । पु॰ कङ्कपक्षिणि । रथालङ्करणे । आमिषप्रिये ॥

सदञ्जनम् । न॰ कुसुमाञ्जने ॥

सदनम् । न॰ वस्मनि । भवने । गृहे ॥ सीदन्त्यत्र । षद्लृ॰ । अधिकरणे ल्युट् ॥ ति॰ ये । जले ॥ ग्लानौ ॥ यथा । दौर्बल्यं सदनं कार्श्यं शुष्किशूनमथारुचिमिति ॥

सदव्यय । त्रि॰ विनाशापचयोपलक्षितसर्वविकारशून्ये । स चासौ अव्ययश्चेति कर्मधारय ॥

सदश्व । पु॰ दान्ताश्वे ॥

सदस् । स्त्री॰ न॰ सभायाम् ॥ सीदन्त्यस्याम् । षद्लृ॰ । असुन् ॥

सदसदात्मकम । न॰ स्वरूपपररूपाभ्यां निरूपणीयं सर्वात्मकं जगति । जगद्धि द्व्यवहारदशायां सत् परमार्थदर्शनेनासत् । तत्स्वरूपम ॥ सदसती आत्मा स्वरूपं यस्य तत् ॥

सदसद्भावमनिर्वचनीयम् । न॰ अज्ञाने अप्ती त्क्रष्टलक्षणे ॥ नेदमसदभिव्यक्तानस्य सत्त्वे विदात्मवद्बाधाभावप्रसङ्गात् । असत्त्वे च वन्ध्यासुतादिवदपरोक्षप्रतिभासानुपपत्तेः श्चाध्यप्रतीत्योश्चाप्रसिद्धत्वाच्च तस्यानिर्वचनीयत्वम् ॥

सदसद्योनि । स्त्री॰ धर्माधर्ममिश्रस्वाद्गाश्चादिमनुष्येषु । तेषु क्षिराजसमिश्रफलभुक्त्वात् । सदसती योनि ॥

सदसद्वादी । पु॰ अकलङ्कितयप्रभृतिषु॰ अर्हत्सु ॥

सदसद्विकारम् । न॰ जगति ॥ सत् आकाशवायुरूपममूर्त्तभूतद्वयम् असत् तेजोजलभूमिरूपम् मूर्त्तभूतत्रयम् । तयोर्विकार तत्परिणामरूपं यत् तत् ॥

सदस्पति । पु॰ सभाधिपतौ । सदसः पति ॥

सदस्य : । पु॰ विधिदर्शिनि । सभायां न्यूनाधिकविचारके॰ ऋत्विग्विशेषे ॥ सदसि मार्धु । तत्र साधुरिति यत् ॥ सभ्ये ॥ सदसि यज्ञसभायामृत्विग्भ्योऽन्ये मिलिताये ब्राह्मणास्ते सदस्या ॥

सदा । अ॰ सर्वकाले । सर्वदार्थे ॥ सर्वस्मिन् काले सर्वकाल्यकिय सदा कालेदा । सर्वस्मिन्नन्यतरस्यादि ॥

सदाकार : । पु॰ आत्मनि । असौ त्वं तत्त्वात्मव्यवहारकारणभूतघाकारो यस्य ॥

सदागति : । पु॰ वाते । वायौ ॥

सदागतिरम्ब ॥ नाके ॥ निर्वाणे ॥ सदीश्वरे ॥ सूर्य्ये ॥

सदाचार. । पुं॰ प्रात 'कृत्यादि नियमाचरणेनसाधुव्यवहारे । शिष्टाचारे ॥ यथमनु । तस्मिन् देशेयआचार पारम्पर्यक्रमागत वर्णानांसान्तरालानांससदाचारउच्यते ॥ तस्मिन्देशे॰ ब्रह्मावर्तदेशे ॥ सताम्आचार ॥ सदाचार बतापुसाक्लिलोकावुभावपि । विशेष कालिकावामनपुराणादौ द्रष्टव्य ॥ वि॰ तद्वति ॥

सदाचारवान । वि॰ सदाचारविशिष्टे । सदाचारिणि ॥

सदातन । पु॰ विष्णौ ॥ वि॰ नित्ये ॥ सदाभव । सायन्तिर मित्यादिना॰ ट्यु ट्युलौतुट्च ॥

सदातोया । स्त्री॰ एलापर्ण्याम् ॥ सदानीरायांसरिति ॥

सदादान । पुं॰ अभ्रमातङ्गे । ऐरावते ॥ हेरम्बे । लम्बोदरे ॥ गन्धहस्तिनि । मत्तगजे ॥ न॰ नित्यदाने ॥ त्रि॰ सर्वदादानशीले ॥ सदादानंयस्य ॥

सदान । पु॰ समदे ॥

सदानन । त्रि॰ शोभनवदने । सतृष्णाननयस्य ॥

सदानन्द : । पुं॰ सदाशिवे ॥ सदा आनन्द : सन्॰ सर्वदाह्लादीसा आनन्दोयस्य । सत 'साधूनआनन्दयतीतितथा ॥ वि॰ सततानन्दादयुक्ते ॥ यथा । ममानन्दे सदानन्द सदानन्दोभविष्यति । ममानन्देनिरानन्दोनिरानन्दोभविष्यतीतिपुराणे भगवतीवाक्यम् ॥

सदानर्त्त । पु॰ खञ्जनखगे ॥

सदानीरवहा । स्त्री॰ करतोयायाम् ॥

सदानीरा । स्त्री॰ करतोयायासरिति ॥ गौरीविवाहसमये॰ शङ्करकरगलितसम्प्रदानतोयप्रभवत्वात्॰ सदानीरंयस्या अरजस्कत्वात् । तथाचात्रस्मृति . । प्रथमेकर्कटे देवीत्र्यहगङ्गारजस्वला । सर्वारक्तवहानद्य करतोयाम्बुवाहिनीति ॥

सदापुष्प । पु॰ नारिकेलवृक्षे ॥ श्वेतार्के ॥ न॰ कुन्दे । माघ्ये ॥

सदापुष्पी । स्त्री॰ अरुणार्के । आदित्यपुष्पिकायाम् ॥

सदाप्रद । त्रि॰ सततदातरि ॥

सदाप्रसून । पुं॰ अर्कवृक्षे ॥ रोहितके ॥ कुन्दवृक्षे ॥

सदाफल । पु॰ स्कन्धफले ॥ उदुम्बरे ॥ नारिकेले ॥ बिल्वे ॥ सदाफलानियस्मिन् ॥

सदाफला । स्त्री॰ त्रिसन्धिपुष्पवृक्षे ॥ वार्त्ताकुशिम्बि । सदाफलम्॰ इ॰ भा॰ ॥ सदाफलाचिदीयस्ते

भावोधर्मः सत्त्वमनेयत्वादिरस्मिन् ॥ अस्तित्वे । देवदत्तस्य पुत्रादिकमस्तीत्यस्मिन्नर्थे ॥

सद्भूत । त्रि॰ सत्ये ॥

सद्म । न॰ वेश्मनि । निकेतने । गृहे ॥ तोये । पानीये । नीरे ॥ सीदन्त्यत्र । षद्लृविशरणगत्यवसादनेषु । मनिन् ॥

सद्य क्षतम् । न॰ नामनि ॥ त्रि॰ तत्कालक्षते ॥

सद्य प्राणकर । त्रि॰ तत्क्षणातबलकारकद्रव्यादौ ॥ यथा । सद्योमांसं नवान्नञ्च बालास्त्रीक्षीरभोजनम् । घृतमुष्णोदकञ्चैव सद्य प्राणकराणि षट् ॥

सद्य प्राणहर । त्रि॰ तत्क्षणात्मायुर्नाशकद्रव्यादौ ॥ यथा । शुष्कमांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि । प्रभाते मैथुनं निद्रा सद्य प्राणहराणि षट् ॥

सद्यशुच । स्त्री॰ सद्य शौचे ॥ यथा । देशान्तरमृतेवापि सद्य शुचिर्यतीमृते ॥ इ॰ गारुडे १०७ अध्याय ॥

सद्य . शोथा । स्त्री॰ कपिकच्छाम् ॥

सद्य शौच . । पु॰ कार्वादिषु ॥ तद्यथा । कारवः शिल्पिनो वैद्याः दासीदासास्तथैव च । राजानोराजभृत्याश्च सद्यःशौचाः प्रकीर्त्तिता ॥ विशेषागरुडकूर्मपुराणशुद्धिविवेकादौ द्रष्टव्य ॥

सद्य . । अ॰ तत्क्षणे । सपद्यस्त्यर्थे ॥ समानेऽहनि॰ इत्यस्मिन्नर्थे॰ सद्यः पक्षत्परार्य्यैषमस्त्वादिना समानस्य सभावोऽद्यस्चाहनि निपात्यते ॥ यथा । सद्योवलकरानारी सद्योवलहरापयः । स्त्रियगच्छेत् पयः पीत्वा सास्थ्यान्न पुनः पिवेदिति ॥

सद्यस्क । त्रि॰ नवीने । नूतने ॥

सद्योजात : । पु॰ शिवे । मत्स्ये ॥ त्रि॰ तत्क्षणोत्पन्ने ॥

सद्योनि । पु॰ देवे । सुरे ॥ साक्षिकोपफलभुजि ॥ सतोयोनि ॥

सद्येभाषी । पु॰ तर्कके । गौवत्से ॥ त्रि॰ तत्क्षणभवनयोग्ये ।

सद्रूप । त्रि॰ स्वाध्यस्वरूपे । सर्वदाशाश्वतरूपे ॥ सत्सदास्थायी रूपं यस्य ॥

सद्वत्ता । पु॰ सत्कथने । सद्वार्त्तौव ताच ॥

सद्वृत्तम् । न॰ सच्चरित्रे । साधुस्वभावे ॥ त्रि॰ तद्युक्ते ॥ यथा । नासमञ्जसशीलैस्तु सहासीत कदाचन । सद्वृत्तसन्निकर्षोहि क्षणार्द्धमपि शस्यते ॥

सद्वृत्ति : । स्त्री॰ शास्त्राविरुद्धजीवने ॥ प्रमाणान्तराबाधितयाथार्थ्यज्ञानादौवृत्ती ॥ सतीचासौवृत्तिश्च

कोनामचतुर्थस्सनन्दनइति ॥ सनत्कुमारे ॥

सनपर्णी । स्त्री॰ असनपर्ण्याम

सना । अ॰ नित्ये ॥ सनति । अयास भक्तौ । आप्रत्यय ।

सनाखल । पु॰ सनखले ॥ यथा । महेन्द्रभीमविमलकुरुचेत्रगयाखला । समापदोत्तरा साहद्दा सा ' सनखला खग ॥

सनात् । अ॰ नित्यार्थे ।

सनातन । पुं॰ अच्युते । विष्णौ ॥ शिवे ॥ अजे । वेधसि ॥ पितृणामतिथौ ॥ दिव्यमनुष्ये । ब्रह्मण पुत्रे । मुनिविशेषे ॥ परम्पराप्राप्ते॰उपाधिपरिच्छेदेपिवस्तुत परमात्मस्वरूपत्वान्नित्ये॰आत्मज्ञानविनाश्ये उ मयक्येससारवत्ते ॥ वि॰ स्थिरे । सुनिश्चले । सर्वदैकरूपे । अविनाशिनि ध्रुवे ॥ सनाभव : । सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौतुट्च् ॥ अनादिपरम्परागते । चिरन्तने ॥

सनातनी । स्त्री॰ लक्ष्म्याम् ॥ सरस्वत्याम् ॥ दुर्गायाम् । भवान्याम् ॥ निर्वचनन्तु । सर्वकालेसनाप्रोक्तं विद्यमानेतनोतिच । सर्वश्चसर्वकालेषुविद्यमानासनातनीति ॥ अपिच । निर्गुणस्यचनित्यस्यवाचकस्सनातन । सदानित्यानिर्गुणायाकीर्त्तितासासनातनीति ॥ टित्वान्ङीप् ॥

सनत्कुमार । पु॰ ब्रह्मण पुत्रे॰ सनत्कुमारे ॥ सनात्॰ नित्य कुमार ॰ ॥

सनाथ । वि॰ सस्वामिके । नाथवति ॥

सनाथा । सनाथिका । स्त्री॰ पतिव्रतायाम् । जीवद्भर्तृकायाम् ॥

सनाभ । पु॰ सोदरेभ्रातरि ॥

सनाभि । पु॰ ज्ञातौ । सपिण्डे ॥ सहोदरे । समानोनाभिर्मूलपुरुषोऽस्य । ज्योतिर्जनपदेतिसमानस्यस ॥ वि॰ तुल्ये । सदृशे ॥

सनामक । पुं॰ माषाङ्गे ॥ वि॰ समाननामवति ॥

सनि । स्त्री॰ भक्तौ । दाने ॥ सनोति । षणुदाने । खनिकषोत्यादिना॰ इन् ॥ सनन वा ॥ अध्येषणायाम । गुर्वादि प्रार्थनयाकश्चिदर्थेनियोजने ॥ यथा । हेस्वामिन्ममाभिषिक्त कुरु । अपिच । वाहिनायकुलाचारनलिनीकुलवल्लभ । त्वत्पादाम्भोरुहच्छायांदेहिमूर्ध्निकृपानिधे॰ इति ॥

सनित । वि॰ प्रतिपन्ने ॥

सन्निष्ठीवम् । न॰ सम्यगवचसि । सन्निष्ठीवे । निष्ठीवनम् । ष्ठिवुनिरसने । घञ् । लघूपधगुण : । ष्ट

णोद्‍राद्दित्वाद्दीकार : । सन्निष्ठी वेन॰ स्त्रिम्भकाद्दिनिर्गमनीमवस्तै तैद्भूतिसन्निष्ठीवस ॥ त्रि॰ तद्वति । सन्निष्ठेवम् । न॰ सन्निष्ठप्रवचसि । थ्य्वूक्ते ॥ निष्ठेवनम्॰ निष्ठेव : । ष्ठिवु॰ । घञ् । लघूपधगुण । सन्निष्ठेवेनसं श्लेष्मकादिनिर्गमने भवस्तैद्भूतिसन्निष्ठेवम् ॥ थ्य्वूक्त सन्निष्ठेवमित्यमर ॥ त्रि॰ तद्वति ॥

सन्नी । स्त्री॰ सन्निपत्यर्थे ॥

सन्नीड । त्रि॰ निकटे । समीपे । उपकण्ठे ॥ समान नीडं वासस्था नमस्य । सन्नीडनेतिवा ॥

सन्नुतर् । अ॰ अन्तर्हाने ॥

सन्तत : । पुं॰ ज्वरविशिषि । तथाच यथा । समाद्वाद्‍याद्वाद्वादशावमथापिवा । सन्तत्याद्योऽविसर्गीत्सन्तत : सन्निपादुष्यतदृति ॥ विकारस्योवातिकादिभेदात् । सन्तत्याने रन्तरेन्च । अविसर्गोपपरित्यागो ॥ न॰ सतती ॥ त्रि॰ तद्रूति । व्याप्ते ॥ विस्तीर्णे ॥ सन्तन्यतेस्य । तनु॰ । क्त : । अनुदात्तोपदेशेतिनलोप : । समीवाक्तिततशारितिपक्षे नलोपाभाव : ॥

सन्ततम् । अ॰ सातत्ये ॥

सन्तताभ्यास : । पुं॰ स्वाध्याये ॥

सन्तति : । स्त्री॰ गोत्रे । अभिजने । हन्ताने ॥ पङ्क्तौ । पुत्रपौत्रादौ पारम्पर्यें ॥ विस्तारे ॥ तनये ॥ दुहितरि ॥ सन्तन्यते । तनोतेर्क्तिः । अविच्छिन्न पारम्पर्यं ॥

सन्तप्त　त्रि॰ अध्वगमनादिनाश्रान्ते । तत्पर्यायोयथा । सन्तापितस्सन्तप्तौ धूपितध् पायितौच दूनश्चेति ॥ सन्तप्यतेस्म । तपसन्तापे । क्त : । अकर्मकत्वात् कर्त्तरिवाक्त : । परितोद्विग्ने ॥ चिन्तातापयुक्ते ॥

सन्तमसम् । न॰ विष्वग्ध्वान्ते । व्यापकान्धकारे ॥ समन्तात् सर्वत : त॰ तम । अवसमन्धेभ्यस्तमसइत्यच् ॥

सन्तरणम् । न॰ तरणे । पारगमने । प्रवनपूर्वकदेशान्तरगमने ॥

सन्तर्जनम् । न॰ हठसं सि ॥

सन्तर्पणम् । न॰ प्रीणने । प्रसी ॥ द्राक्षादाडिमखर्जूरोत्कर्षावरान्नाम्बूर्णमध्वाज्यसक्तुभिर्हितै ॥ त्रि॰ तृप्तिकारके ।

सन्तर्पित । त्रि॰ सम्यक्प्रीणिते

सन्तान : पुं॰ सन्ततौ । विस्तारे ॥ गोत्रे । वंशे । अन्वयाये ॥ अपत्ये ॥ सन्तन्यते । तनुविस्तारे ॥ घञ् ॥ सुरद्रुमे । कल्पवृक्षे ॥ सम्यक्तनोतिपुष्पाणिव्याप्नोतीति सूत्रे॰ तनोतेरपसङ्ख्यानात् : ॥ सम्यक्तन्यन्तेपुष्पाण्यस्मिन्निति

कारणे इवर्षे तिथञ्‌वा ॥

सन्तानिका । स्त्री० मर्कटजालके ॥ छुरिकाफले । फेने ॥ क्षीरादिसारे । मला० ह० भा० ॥ सन्तानिकागुरु शीताह्व्यापित्तास्रवातनुत् । तर्पणीव हृणीस्निग्धाबलासवलशुक्रदा ॥

सन्ताप । पु० अग्निजतापे । सञ्ज्वरे ॥ सन्तापयति । तपसन्तापे । वय त । पचाद्यच् ॥ सम्यगुत्तापे । शोचये ॥

सन्तापन । पुं० स्मराशुगविशेषे ॥ त्रि० सम्यक्तापकारके ॥

सन्तापित । त्रि० अध्वादिनाश्रान्ते । सन्तप्ते ॥ सन्ताप्यतेस्म । तपदाहे चुरादि । क्त । अकामकत्वात्कर्त्तरिवाक्त ॥

सन्तार । पुं० सन्तरणे ॥

सन्ति । स्त्री० दाने ॥ अवसाने ॥ पुं० भृत्ये ॥

सन्तुष्ट । त्रि० उत्पन्नालम्प्रत्यये । निष्प्रस्पृहे । सन्तोषयुक्ते ॥ यथा । अप्राप्तिपरित्यज्यसम्प्राप्तेसमतांगत । अदृष्टखेदाखेदोय . सन्तुष्टइतिकथ्यतइति ॥ असन्तुष्टाद्विजानष्टा 'सन्तुष्टाश्चमहीभुज '। सलज्जागणिकानष्टानिर्लज्जाश्चकुलाङ्गना । पुं० अश्वत्थरजी । लक्ष्मरद्ध० भा० प्रसिद्ध ॥

सन्तृण । त्रि० विद्धे । व्याप्ते ॥

सन्तोष । पु० विद्यमानभोगोपकरणादधिकस्यानुपादित्सारूपायाश्चित्तवृत्तौ । आनमने । यदृच्छालाभसन्तुष्टौ अलाभेचाविषादे । अलम्बुद्धौ । यथासम्भवभृत्यात्मवाणधारणावश्यकपञ्चयज्ञाद्यनुष्ठानमात्रोचितधनानधिकायास्पृहायाम् ॥ सन्तोषामृततृप्तानायत सुख शान्तचेतसाम् । कुतस्तद्धनलुब्धानामितश्चेतश्चधावताम् ॥ धृतौ । स्वास्थ्ये ॥

सन्त्रास । पु० साध्वसे । भये ।

सन्दंश । पु० कङ्कमुखे । स दशतीति व्यातिलोहयन्त्रविशेषे । एकाङ्गानुवादेनविधीयमानयोरप्यङ्गयोरन्तरालेनिहितत्वसन्दंश . ॥ नरकविशेषे ॥

सन्दंशिका । स्त्री० सुचुव्याम् ॥ लौहयन्त्रविशेषे । कातारि० ह० गौ० दे० भा० प्र० ॥

सन्दर्भ । पुं० प्रबन्धे । रचनायाम् । ग्रन्थने ॥ प्रकरणे ॥

सन्दर्शनम् । न० साक्षात्कारे । सदृश्यते । दृशिर्० । ल्युट् ॥ सम्यक्प्रकारेणदर्शनवा ॥

सन्दृष्ट । त्रि० सम्यक्प्रकारेणदृष्टे

सन्दानम् । न० दामनि । दे०हन्कालीपादबन्धनरज्जौ ॥ सन्दीयते

वासंयुता ॥ अपिच । अष्टम्यास
धियोगेसकालपरिजनैः पूजयेतस
त्वभावैरिति ॥

सधिवध । पु॰ भूमिचम्पके ॥

सधिवधमम् । न॰ शिरायाम ॥

सधिला । स्त्री॰ सुरङ्गायाम् । गू
ढमार्गे । सुरङ्ग॰ झ॰ भा॰ प्र॰
॥ नद्याम् ॥ मन्दिरे । ओक
सि ॥

सधिवल्ली । स्त्री॰ विसनुधिपुष्पे ॥

सधिवेला । स्त्री॰ कालविशेषे ।
अहोरात्रादिमेलनकालरूपे ॥

सधिहारक । पु॰ कुम्भिले । स
न्धिचौरे ॥

सधुक्षित । त्रि॰ प्रदीप्ते ॥

सन्ध्यम् । न॰ स्वप्नस्थाने ॥ सध्य
स्वप्नस्थानमितिवेददर्शनात् ॥

सन्ध्या । स्त्री॰ पितृप्रसूम् ॥ नदी
विशेषे ॥ युगसन्धौ ॥ चिन्तायाम्
सश्रवे ॥ सीम्नि ॥ सधाने ॥ कुसु
मान्तरे ॥ दुर्गाशाम ॥ अहोरात्र
सधौ ॥ यथा । अहोरात्रस्यय
सधि सूर्यनक्षत्रवर्जितं । सा
तुसध्यासमाख्याता मुनिभिस्तत्वद
र्शिभिरिति ॥ कालभार्येयम् । य
थाकालस्यतिस्रोभार्यास्सध्याराचि
दिनानिच । याभिर्विनाविधाताच
सङ्ख्यातुं नशक्यतद्दति ॥ सध्या
रात्रिवहिनानामपिकालाधीनत्वात्
स्त्रीसदृशत्वात्स्त्रीत्वम् ॥ प्रातर्मध्याह्न
सायाह्नरूपकालविशेषे ॥ त्रिकालवि
हितैकर्मविशेषे ॥ अत्रोपासनानिर्णय
तन्त्रे । संध्यात्रैकालिकोपायावैदि
कोतान्त्रिकोक्रमात् । उपासनाया
भेदेनपूजाकुर्याद्यथाविधि ॥ ब्रह्म
मन्त्रोपासकानागायत्रीजपनात्प्रि
ये । स्नानाद्यूर्ध्वतिलहाच्य सध्या
भवतिवैदिकी ॥ अन्यापावैदिकी
सध्यासूर्योपस्थानपूर्वकम् । अ
र्घ्यदानदिगेशायगायत्रीजपनतथा
॥ अष्टोत्तरसहस्र वाशत वादशधा
पिवा । जपान्नियमोभद्रे सर्व
त्वाह्निककर्म्मणि ॥ शूद्रसामान्य
जातीनामधिकारोस्तिकेवलम ॥
आगमोक्तविधौदेविसर्वसिद्धिस्ततोभ
वेत् ॥ प्रातः सूर्योदय काले ।
मध्याह्नस्तदनन्तरम् । सायसूर्या
स्तसमयस्त्रिकालानामयक्रम
। इति ॥ तत्काले॰ उपास्या॰
अपिदेवता॰ सध्या । तथाचयाज्ञ
वल्क्य । सधौ सध्यामुपासीत
नास्तगेनोद्गतेरवाविति ॥ उपासनो
पक्रममाह्सवर्त्तः । प्रातः सध्यां
सनक्षत्रामुपासीतयथाविधि । सा
दित्यांपश्चिमांसध्यामर्द्धास्तमितभा
स्करामिति ॥ गायत्रीमभ्यसेत्ताव
द्यावदादित्यदर्शनमेतत्वनुदितहो
मीतरविषयम् । सन्ध्याकर्मान

सिवनमनुष्ठानमितियावदित्यर्थ. ॥

सन्न । पु॰ पियालवृक्षे ॥ त्रि॰ अवसादयुक्ते ॥ क्षीणे ॥

सन्नक । पु॰ पियालवृक्षे ॥

सन्नकद्रु । पुं॰ पियालवृक्षे । चार इ॰ भा॰ प्र॰ ॥ सन्नोलीन : कद्रु पिङ्गलवर्णोऽस्य ॥

सन्नत । त्रि॰ सम्यक प्रह्वीभूताङ्गे ॥ स नमतिस्म । सम॰ । क्त ॥

सन्नति : । स्त्री॰ ध्वनौशब्दे । प्रणतौ ॥ नम्रतायाम् ॥ यथा । हरिवंशे । यदृच्छया वा श्रीः स्थितास्तव । यच्छ्रीमत्सन्नति : । सन्नतिर्गीतयाश्रीः सन्निध्यं कृष्णे महात्मनि ॥ सम्यक नति : ॥ आनुकूल्ये ॥

सन्नद्ध । त्रि॰ युद्धायसज्जे । धृतसन्नाहे । तत्पर्यायाः यथा । सन्नद्धोवर्मितः सज्जो दंशितो व्यूढकङ्कटः । इति ॥ व्यूढरचनमाश्रिते ॥ सन्नह्यति॰ सन्नह्यतिस्म वा । बद्धवर्मणि । अकर्मकत्वात् कर्त्तरि॰ कर्मणि वा क्त : । सज्जादियुते ॥ सन्नाते ॥ यथा । शरीवसन्नद्धमनोज्ञपल्लवैस्तिरच्छ : ॥

सन्नद्रु : । पुं॰ पियाले ॥

सन्नय : । पु॰ समवाये । समूहे । पृष्ठस्थायिन्यां । अनुसैन्ये ॥ सन्नयनं सन्नीयतेऽनेन वा । सन्नीयतेवा । धो अच् प्राप्ते । घञर्थे कव्वाद्यच्च ॥

सन्नहनम् । न॰ कवचादिधारणे ॥

सन्नाह । पुं॰ कवचे । वर्मणि ॥ सं वर्मयति॰ सन्नह्यत्यात्मनेऽस्य यतो वा । सन्नह्यते॰ दंशयते॰ स न्नाहोपदपक्षकम् ॥

सन्नाय्य । पु॰ सन्नाहयोग्ये ॥ युद्धाङ्गके ॥

सन्निकर्ष . । पुं॰ सन्निधाने । समीपे । निकटे ॥ अतिप्रवितसंनिधौ ॥ सम्बन्धे ॥ न्यायमतेन॰ विषये न्द्रियसम्बन्धे ॥ सन्निकर्षणमस्यापे म् ॥ सन्निकर्षणम् । कृष॰ । घ ञ् ॥

सन्निकर्षणम् । न॰ सन्निधौ । संनिकर्षे ॥ कृषिल्युट् ॥

संनिकृष्ट : । त्रि॰ समीपे । सन्निकृष्यते स्म । कृष॰ क्त : ॥

संनिधम् । न॰ सन्निधाने । सं- निधौ ॥

सन्निधानम् । न॰ सन्निधौ । निकटे ॥ आश्रये ॥ वदादेशाभासन्निधानमिति ॥ न॰ अवस्थाने ॥ सम्यक् निधीयतेऽस्मिन् । ल्युट् ॥

सन्निधि . । पुं॰ सन्निधाने । अन्तिके ॥ इन्द्रियगोचरे । प्रत्यक्षे ॥ वाक्यार्थज्ञानहेतौ । पदानामविलम्बेनोच्चारणे ॥ प्रहरेप्रहरेऽसंनिहितोच्चारितानि॰ गामानयेत्यादिपदानि नप्रमाणम्॰ सांनिध्याभावात् ।

स॑निधानम् । ङु धाञ • । उपसर्गेयो . क्रि : ॥
सं निपतनम् । न॰ सम्यङ्निपाते ॥
सं निपात . । पुं॰ सङ्गमे । मेलने ॥ तालविशेषे ॥ यथा । एकएवगुरुर्यत्र सन्निपात ' सउच्यतइति ॥ त्रिदोषजनितव्याधौ ॥ यथा । वृद्धैकोल्वण : षट् द्विहीनमध्याधिके षट् । समश्चैकोविकारास्ते सन्निपातास्त्रयोदश॰ इतिचरकेच त्रयोदशसन्निपाताउक्ता : । तेयथा वातोल्वण १ । पित्तोल्वण ' २ । कफोल्वण ३ । वातपित्तोल्वण ४ । वातश्लेष्मोल्वण ५ । पित्तश्लेष्मोल्वण ' ६ । एवंषट् । अधिकवातोमध्यपित्तोहीनकफ : १ । अधिकवातोमध्यकफोहीनपित्त . २ अधिकपित्तोमध्यवातोहीनकफ . ३ । अधिकपित्तोमध्यकफोहीनवात: ४ । अधिककफोमध्यवातोहीनपित्त ' ५ । अधिककफोमध्यपित्तोहीनवातश्चेतिषट् ६ । समैर्वातपित्तकफैस्त्वल्वणएक ' १ । एवंत्रयोदशसन्निपाता ' ॥ सन्निपतनम् । पतृ॰ । घञ् ॥ समूहे ॥
सं निपातज्वर : । पुं॰ त्रिदोषज्वरे ॥ त्रिदोषजनकैर्वातपित्तश्लेष्मभिर्गेहगा : । वह्निनिरस्यकोष्ठाग्निरसगा ज्वरकारिण : ॥ अत्राह । संनिपातम्यकालश्चकश्चिद्दोषनिवर्तते । चिकित्सकोजयेद्यस्तु तस्मात्कोस्ति प्रतापवान् ॥ त्रिदोषाजगरग्रस्त मोचयेद्यस्तुवैद्यराट् । आत्मापितस्य दातव्य किंपुन र्कनकादयइतिवोलिम्बराज ॥
सं निपातनुत् । }
सं निपातरिपु । } पुं॰ नेपालनिम्बे । दृणनिम्बे । ज्वरान्तके ॥
सं निबद्ध । त्रि॰ संयोजिते । सम्यग्बन्धनयुक्ते ॥ संनिपूर्वाद्बधेः क्त . ॥
सं निभ । त्रि॰ सदृशे ॥ संनिभाति । भा॰ । आतश्चोपसर्गइतिक ॥
सं निरोध । पुं॰ लये ॥
सं निवाय ' । पुं॰ समुदाये ॥
सं निविष्ट । त्रि॰ स्थिते ॥ उपविष्टे ॥
सं निविष्टोद्भव । पुं॰ उपविष्टस्याधिभावे ॥
सं निवृत्त ' । त्रि॰ प्रत्यागते ॥
सं निवृत्ति : । स्त्री॰ सम्यङ्निवर्त्तने ॥
सं निवेश . । पुं॰ पुरादौ गृहादिरचनापरिच्छिन्नप्रदेशे । निकर्षणे ॥ पुरादेर्बहिर्विहारभूमौ ॥ नगरादिबहि ' खैरविहारचारभूमिषु । तन्त्रज्ञ निगदितंसंनिवेशोनिकर्षणमितिशब्दरत्नावली । संनिविशन्त्यत्र । विश॰ । हलश्चेतिघञ्

एतेषां सर्ववर्णानामाश्रमौ द्वौ महेश्वरि । तेषामाचारधर्मांश्च शृणुष्वावहितामिते ॥ पुरैव कथितं तावत् कालसम्बन्धचेष्टितम् । तपःस्वाध्यायहीनानां नृणामप्यायुषामपि क्लेशप्रयासाशक्तानां कुतो देहपरिश्रम । ब्रह्मचर्याश्रमो नास्ति वानप्रस्थोऽपि न प्रिये । गार्हस्थो भैक्षुकश्चैव आश्रमौ द्वौ कलौ युगे ॥ गृहस्थस्य क्रिया सर्वा आगमोक्ता कलौ शिवे । नान्यमार्गैः क्रियासिद्धिः कदापि गृहमेधिनाम् ॥ भैक्षुकेऽप्याश्रमे देवि वेदोक्तदण्डधारणम् । कलौ नास्त्येव तत्त्वज्ञे यतस्तच्छ्रौतसंस्कृति ॥ शैवसंस्कारविधिनाऽवधूताश्रमधारणम् । तदेव कथितं भद्रे संन्यासग्रहणं कलौ ॥ विप्राणामितरेषाञ्च वर्णानां प्रबले कलौ उभयत्राश्रमे देवि सर्वेषामधिकारिता सर्वेषामेव संस्कारः कर्माणि शैववर्त्मना । विप्राणामितरेषाञ्च कर्मलिङ्गं पृथक् पृथक् ॥ जातमात्रो गृहस्थः स्यात् संस्कारादाश्रमी भवेत् । गार्हस्थ्ये प्रथमं कुर्यात् यथाविधि महेश्वरि ॥ तत्त्वज्ञाने समुत्पन्ने वैराग्यं जायते यदा । तदा सर्वं परित्यज्य संन्यासाश्रममाश्रयेत् ॥ विद्यामुपार्ज्य यत्नेन धनं दारांश्च यौवने । प्रौढे धर्म्याणि कर्माणि चतुर्थे प्रव्रजेत् सुधीः ॥ मातरं पितरं वृद्धं भार्यां चैव पतिव्रताम् ॥ शिशुं च तनयं हित्वा नावधूताश्रमं व्रजेत् ॥ मातॄन् पितॄन् शिशून् दारान् स्वजनान् बान्धवानपि । यः प्रव्रजति हित्वैतान् स महापातकी भवेत् ॥ मातृहा पितृहा स स्यात् स्त्रीवधी ब्रह्मघातकः । असन्तर्प्य स्वपित्रादीन् यो गच्छेद्भिक्षुकाश्रमे ॥ ब्राह्मणो विप्रभिन्नश्च सकलवर्णाश्च सत्क्रिया । शैवेन वर्त्मना कुर्यादेष धर्मः कलौ युगे । इति ॥ अपि च । अवधूताश्रमो देवि कलौ संन्यास उच्यते । इत्युपक्रम्य । ब्रह्मज्ञाने समुत्पन्ने विरते सर्वकर्मणि । अध्यात्मविद्यानिपुणः संन्यासाश्रममाश्रयेत् ॥ वृद्धौ च पितरौ शिशुं भार्यां पतिव्रताम् । त्यक्त्वाऽसमर्थान् बन्धूंश्च प्रव्रजन् नारकी भवेत् ॥ ब्राह्मणः क्षत्रियो वैश्यः शूद्रः सामान्य एव च । कुलावधूतसंस्कारे पञ्चानामधिकारितेति ॥ सम्यक् न्यासः संन्यासः । सम्यग्वान्तविष्ठादिवत् लौकिकभोगस्य न्यासः त्यागः संन्यास इत्यर्थः । अथ मूर्त्तमाह कालिदासः । संन्यासः श्रुतियुगलविषये शिशुवचो वैरस्यं कविरसोन्द्रपूजितयोः । नौरिक्तैः स्थिरसदनेऽपवर्गसिद्ध्यै सोमेज्य

वसेत् पर्वतम् लेषु प्रौढोयोऽध्यानधा रणात् । साराद्‌सारं विजाना ति पर्वत ' परिकीर्त्तित ॥ ६ ॥ वसेत् सागरगम्भीरो वनरत्नपरिग्रह । मर्यादावनलङ्घितसागर परि कीर्त्तित । ॥ ७ ॥ स्वरूपानन्दप्रे निलयूरवादो व्यायीश्वर । स सा रसागरे सारा भिज्ञो योऽहि सरस्वती ॥ ८ ॥ विद्याभारेण सम्पूर्ण : स र्वभारं परित्यजेत् । दुःखभारं न जानाति भारती परिकीर्त्तित ॥ ९ ॥ ज्ञानतत्त्वेन सम्पूर्ण पू र्णतत्त्वपदे स्थित । परब्रह्मरतो नि त्य पुरी नामा स उच्यते ॥ १० ॥ इति श्रीशङ्करविजये श्रीविद्यारण्य स्वामिन ॥ चन्द्रधर्माचरणादि क मनुस्मृतौ ब्रह्मवैवर्त गरुडकूर्म पुराणादिषु द्रष्टव्यम । विधानन्तु । श्री महानिर्वाणतन्त्रे श्रीसदाशिवेनोक्त तत् ततोऽवगन्तव्यम् ॥ सन्न्या सोऽस्यास्ति । अतइनि ॥ अस्या न्निविधिमाचर्य्यानन्त ' । सर्वसङ्ग निवृत्त स्थध्यानयोगरतस्य च । नत स्य हवन कार्य्यं नैव पिण्डोदकक्रिया ॥ निदध्यात् प्रणवेनैव बिलेभिक्षो कलेवरम् । प्रोक्षणं खननञ्चैव सर्व तेनैव कारयेत् इति ॥

सम्मुख ' । त्रि॰ अभिमुखे ॥

सपक्ष । । त्रि॰ निश्चितसाध्यवति । साध्यवत्त्वनिश्चयविषये ' यथाधूम वत्त्वे॰ महानसम् ॥ अनुकूले ॥ स मान ' पक्ष • इतिविग्रहे॰ स मानस्य तियोगविभागात् सादेश : ॥ यद्वा । सहव्द सदृशवचन ' । तेनासपदृविग्रहे बहुव्रीहि । • स मान पक्षोऽस्य॰ इतिसपक्ष ॥

सपण ' । पु॰ ग्लहे ॥ पणेनसहवर्त्त माने॰ व्यवहारविशेषे ॥ यथायद्य हमपराजितोभवामि॰ तदायत दास्यामीति ॥

सपत्राकरणम् । न॰ अत्यन्तपीडने । सपत्रनिष्पत्रादतिव्यथनइतिडाच् ॥

सपत्राकृत । पु॰ क्षतमृगादौ ॥ त्रि॰ अत्यन्तपीडिते ॥

सपत्राकृति । स्त्री॰ अत्यन्तदु : खे । निष्पत्राकृतौ ॥

सपत्न । पु॰ अरौ । सपत्नीव ॥ व्य न् सपत्नइतिनिर्द्देशादकार । इ वार्थे च प्रत्ययोवा ।

सपत्नारि । । पु॰ वेष्टवंशे ॥ अयो आयो ॥ सपत्नस्यअरि : ॥

सपत्नी । स्त्री॰ समानपतिकायाम् ॥ समानएक पतिर्यस्या । • इति विग्रहे॰ संपत्न्यादिषुसमानस्य स भावोनिपात्यते । नित्य सपत्न्या दिष्विति ङीप् ॥

सपत्नीक ' । पु॰ पत्नीसहिते ॥ सप त्न्यावर्त्तते इतितथानद्युतश्चेति

तेनमातामहादीनामेकपिण्डसम्बन्धेपिनसपिण्डता ॥ सपिण्डस्यभाव . । तल् । टाप् ॥

सपिण्डीकरणम् । न॰ श्राद्धविशेषे । प्रेतपिण्डस्यपितृपिण्डेनसहमिश्रीकरणे ॥ तच्चपूर्णसंवत्सरेसपिण्डीकरणमितिमुख्यकाल • तदशक्तौनवमेमास तदशक्तौषष्ठेमास . तत्राप्यसक्तौत्रिपक्ष तत्राप्यशक्ता वृद्धौवापगमेप्रथममासश्राद्धादशभिर्दिनैर्द्वादशमासिकानिश्राद्धानिनिवर्त्यतयोर्द्वादशाह सपिण्डीकरणकाल ॥ सपिण्डीकरणविषयेकूर्मपुराणंयथा । सपिण्डीकरणं प्रोक्तं पूर्णेसम्वत्सरेपुन । कुर्याच्चत्वारिपात्राणिप्रेतादीनांद्विजोत्तमा ॥ प्रेतार्थंपितृपात्रेषुपात्रमासेचयेत्तत ' येसमानाइतिद्वाभ्यांपिण्डानप्येवमेवहि ॥ सपिण्डीकरणंश्राद्धंदेवपूर्वंविधीयते ' पितॄनावाहयेदत्रपृथक्पिण्डंचनिर्दिशेत् ॥ येसपिण्डीकृता प्रेतानतेषांस्यात्पृथक्क्रिया । यस्तुकुर्यात्पृथक्पिण्डं पितृहासोपिजायते • इति ॥

सपीतक । पु॰ राजकोषातक्याम् ॥

सपीति । स्त्री॰ चात्मीयेनजनेनसहमिलित्वैककालकृतेपाने । तुल्यपाने • पानम । पापानेस्त्रियांक्तिन् । घुमास्थेतीत्वम् । समानापीति । समानस्यच्छन्दसीतिसभाव' । सहपीतिर्वा । सहस्यस सआर्था ॥

सपीतिका । स्त्री॰ हस्तिघोषायाम् ॥

सपुत्र : । त्रि॰ पुत्रेणसहवर्त्तमाने ॥

सप्तक । पुं॰ सप्तसङ्ख्यायाम् ॥ त्रि॰ सप्तसङ्ख्याविशिष्टे ॥ सप्तभि क्रीतेवस्तुनि ॥ सङ्ख्यायाअतिशदन्ताया ' कन्निस्ताशीत्यर्थेषुकन् ॥

सप्तकी । स्त्री॰ मेखलायाम् । काञ्च्याम् । कटिभूषणे ॥ सपति । षप समवाये । बाहुलकात्तन् । स्वार्थेकन् ॥ यद्वा । सप्तभिरनेकाभिकिङ्किणीभिर्वा॰ सप्तस्वरान्वा॰ कायति । कै शब्दे । चातोनुपसर्गेक : । गौरादित्वान्ङीष् ॥

सप्तगङ्गम् । न॰ तीर्थविशेषे ॥

सप्तगोदावरम् । न॰ सप्तानांगोदावरीणांसमाहारे ॥ तीर्थविशेषे ॥

सप्तच्छद । पु॰ सप्तपर्णवृक्षे ॥ काण्डेकाण्डेसप्तच्छदान्यस्य । सङ्ख्याशब्दस्यवृत्तिविषयेवीप्सार्थत्वम् ॥ न॰ तस्यपुष्पे ॥

सप्तजिह्व । पु॰ अनले । अग्नौ ॥ सप्तकाल्यादयोजिह्वाआकृतियस्याथवाऽस्य ' । तायथा । कालीकरालीचमनोजवाचसुलोहिताचसुधूम्रवर्णा । स्फुलिङ्गिनीविश्वरुचीचदेवीलेलायमानेतिचसप्तजिह्वा इति

याम् ॥

सप्तपद: । पु० सप्तच्छदे ॥ मुद्गरवृक्षे ॥ सप्तसप्तपदा यस्य ॥

सप्तपदार्थवाद । पुं० आर्हतानां वादे ॥ यथा । जीवाजीवात्मकं विश्वं चेतनं स्वशरीरवत् । परिणामावयवानजीवं षड्विधं स्मृतं ॥ महीधरादिकं स्यात् पञ्चधा चास्त्रवादिकं । आस्रवं संवरो निर्जरो बन्धो मोक्ष एव च ॥ इन्द्रियाख्यविवेकादि केशोलुञ्चादिभिस्तपः । जन्मान्यूर्ध्वगतिश्चेतिपञ्चानामर्थ उच्यते । स्यादस्तीत्यादिना सप्तभङ्गीन्यायेन वादिना । सप्तैवं क्रमशोऽपास्यमतं च साधयेत्सुधीरिति ॥

सप्तपदी । स्त्री० विवाहाङ्गसप्तपदीगमने । सप्तानां पदानां समाहार, । द्विगोरिति ङीप् ॥

सप्तपर्ण पु० छतवनीतिख्यातेवृक्षे । पर्यायास्तु । सप्तपर्णो विशालत्वक् शारदो विषमच्छद इति ॥ सप्तपर्णो व्रणश्लेष्मवातकुष्ठास्रजन्तुजित् ॥ दीपनः श्वासगुल्मघ्नः स्निग्धोष्णस्तुवरः सरः इतिगुणा. ॥ काण्डे काण्डे सप्तसप्तपर्णान्यस्य । क्वचित्सङ्ख्याशब्दस्य वृत्तिविषये वीप्सार्थत्वमितिकैयटादिव्याख्यानात् ॥ न० मिष्टान्नविशेषे ॥ यथा । द्राक्षादाडिमखर्जूरमृदितं स्यात् सशर्करम् । लाजचूर्णं समध्वाज्यं सप्तपर्णमुदाहृतम् ॥

सप्तपर्णी । स्त्री० लज्जालौ ॥

सप्तपलाश । पु० सप्तपर्णद्रुमे ॥ सप्तसप्तपलाशानि पत्राणि पर्वसु यस्य ॥ न० सप्तपर्णस्य पुष्पे ॥

सप्तपातालम् । न० सप्तसङ्ख्याके अधोभुवने ॥ यथा । अतलं वितलञ्चैवनितलञ्च गभस्तिमत् । महाख्यं सुतलञ्चाग्र्यं पातालं सप्तमं विदुरिति । नामान्तराण्यपि यथा । आभासं तलाख्यं वितलं च गभस्तिमत् । महातलं रसा कञ्च पातालं सप्तमं मुने । इति ॥ एतेषामधिपा यथा । सप्तस्वेतेषु दैत्येन्द्रभुजङ्गाश्च दानवाः । सप्तसप्तसमाख्यातास्तानप्यथ निबोध मे ॥ दैत्याः शङ्कुश्रुतिः पूर्वं प्रह्लादः शिशुपालकः । कर्णाभ्युक्षो हिरण्याक्षो हरङ्गभौ बलिस्तथा ॥ काद्रवेयाः कुटिलश्च वासुकिः कम्बलस्तथा । कर्कोटकोऽथ कालाङ्को दुर्धरश्च तक्षकस्तथा ॥ विकटाक्षो हिताक्षश्च यमाख्यो विकटाननः । करालो भीमनिर्ह्रादपिङ्गलश्चेति राक्षसाः । इति ॥

सप्तपुत्रसू । स्त्री० सप्तवत्सकरायाम् । सप्तपुत्रायाम् ॥

चैतद्धार्यते भुवनत्रयम्॥ सन्ध्यात्रयमुपासीनागायत्रीजपतत्परा ॥ तस्मिन् लोके वसन्त्येते ब्राह्मणा ब्रह्मवादिन इति पाद्मे ११९ अध्याय ॥

सप्तला। स्त्री॰ नवमालिकायाम्॥

सप्तलाति। ला॰। आतोनुपेति कः ॥ चर्मकषायाम्। सातलायाम्॥ गुञ्जायाम्॥ पाटलायाम्॥

सप्तवाहन। पु॰ आदित्ये। सप्ताश्वा वाहनान्यस्य। सप्तनामकएकोऽश्वो वाहनमस्य वा॥ एकोऽश्वो वहति सप्तनामेति श्रुतेः॥ वहति॰ आदित्यरथम्॥

सप्तशती। स्त्री॰ सप्तशतिकायाम्॥ सप्तशतमन्त्रात्मकदेवीमाहात्म्ये॥ गीतायाम्॥ सप्तानांशतानांसमाहारः। द्विगोरिति ङीप्॥

सप्तशलाक। पु॰ विवाहोपयोगि वेधविशेषे॥ यथा। ऊर्ध्वगा सप्तरेखास्तु तिर्यक् सप्त विलिख्य च कृत्तिकादि च तु सप्तरेखाऽन्विता सु संलिखेत्॥ चन्द्ररेखास्थनक्षत्रं यत्र तिष्ठति चेत्तदा। वेध सप्तशलाकाख्यो विवाहे तत्र वर्जयेत्॥ यद्रेखायां चन्द्रस्तिष्ठति सा चन्द्ररेखा॰ तत्र स्थितनक्षत्रं च तस्मिन् यदि सूर्यादीनामन्यतमोऽपि कश्चिद्ग्रहस्तिष्ठति॰ तदा सप्तशलाकाख्यो वेधः॰ स्यात्॰ तत्र विवाहं वर्जयेदिति॥ यथा। अथो सप्तशलाकभिन्नपापैरपापैरथवा विवाहे। रक्ताम्बरेणेव चतुरोदमाना स्मशानभूमिं प्रमदा प्रयातीति फलम्॥

सप्तशिरा। स्त्री॰ नागवल्ल्याम्॥ ताम्बूल्याम्॥

सप्तशृङ्ग। पु॰ हिमाचले॥ सप्त शृङ्गाणि॥ दक्षिणदेशप्रसिद्धेगिरिविशेषे॥ तत्रप्रसिद्धेऽम्बिकास्थाने॥

सप्तसप्ति। पु॰ दिवाकरे। सूर्ये॥ सप्तगायत्र्यादीनिच्छन्दांसि॰ सप्तयोऽश्वा॰ यस्य॥ यथा। गायत्र्यादीनि सप्त छन्दांसि वै वामानि मेऽनुष्टुभ गायत्री च बृहत्युष्णिग् जगती त्रिष्टुबेव च। अनुष्टुप् पङ्क्तिरेतानि छन्दांसि हरयो हरेरिति विष्णुपुराणम्। सप्ताश्वरूपाश्छन्दांसि वहन्ते वातरंहस इति मत्स्यपुराणञ्च॥

सप्तसंमिश्र। स्त्री॰ बहुवचनान्त॰ सप्तप्राणानां सप्तसु विषयेषु॥ विषयेषु संमिश्राः प्राणाः।

सप्ततोमर। पु॰ महादानविशेषे॥

सप्तसारस्वतम्। न॰ तीर्थविशेषे॥

सप्तसूः। स्त्री॰ सुप्रसवकारायाम्। सप्तपुत्रप्रसूतायाम्॥

सप्तस्रोत.। न॰ तीर्थप्रभेदे। दक्षिणे नर्मदातटस्थे श्रीशैलाश्रमे॥ यथा

समासस्येतियोगविभागात्. सभा
बाहुतिनिर्देशात्समासस्यादेश
। वह्यातिलक्षणं यथा । यस्मिन्देशे
निषीदन्ति विप्रावेदविदस्त्रय रा
ज्ञश्चाधिकृतोविद्वान् ब्रह्मणस्तांसभां
विदुरितिमनुः ॥ चत्वारोवेदधर्म
ज्ञाः पर्षत् त्रैविद्यमेवच । सामूते
ब सधर्म. ख्यादेकोवाध्यात्मवित्तम
• इतियाज्ञवल्क्यः ॥ विद्वत्स ह
ती • भा प्रकाशस्तथासद्वस्तु •
इत्युक्तं ॥ ग्रामनगरादौनियत
जनसमूहस्थाने ॥ समाजिके । स
भ्ये ॥ द्यूते ॥ मन्दिरे । राज्ञोऽमा
त्यादिदर्शनगृहे ॥ अनुविधेयस्त्रैव
सम्यपुरुषवतीजनतासभा । अनु
विधेयोराजादिः • स्त्रीयाम्सभ्य
स्त्र ॥

सभाग । त्रि• सभाकृते ॥ अन्यैः पू
ज्यमाने ॥ भजन भाग • पूजा•
सेवा । सहभागेनवर्त्तमान ॥
भागसहिते ॥

सभाजन । पु • सभ्यै ॥ न• गमना
गमनादिसमयेसुहृदादेरालिङ्गनादि
व्यग्रत्रस्वागतादिनानन्दोत्पादने ।
आनन्दने । आप्रच्छने ॥ सभाज
प्रीतिसेवनयोः । ल्युट् ॥

सभाजित । त्रि• पूजिते ॥

सभाज्य । त्रि• पूज्ये । भजनीये ॥

सभापति । पुं • सभाधिपती ॥
यथा । श्रीमद्वाग्भपुरेसाघाहरना
मासभापतिरिति ॥

सभारचना । स्त्री• राजमन्दिरनिर्मितौ
॥ यथा । चापाकृति न्यस्तनृपास
नोदरा सती तिरश्चीनां नृपगौरवो
चिता । निधायतत्रैव विदधीत म
न्त्रिणां नरैरनूचानरसामरैः
सभा ॥

सभासत्.द् । पुं• सभास्तारे । सभ्ये
। सामाजिके । सभासद्नाः । श्रु
ताध्ययनसम्पन्नाः कुलीनाः सत्य
वादिनः । राज्ञःसभासदः कार्या
शत्रौमित्रे चयेसमा इतियाज्ञवल्क्यः
॥ श्रुताध्ययनसम्पन्नाः • धर्म
शास्त्रज्ञाः । कुलीनाः • साङ्कर्य
दोषशून्यमातापितृवंशपरम्पराकाः
॥ सभायामधिकृतत्वेनलोकानां
धर्माधर्मविलोकनार्थं सीदन्तिउपवि
शन्ति । क्विप् । सत्सूद्विषेति
क्विप् ॥ समाङ्गवाक्य सामाल्यः
सब्राह्मणपुरोहितः । ससभ्य प्रे
क्षकोराजास्वर्गे तिष्ठतिधर्मतः ॥
तत्रब्राह्मणाअनियुक्ताः • सभ्यास्तु
नियुक्ताइतिभेदः । तत्रनियुक्ता
नांयथावस्थितार्थकथनेऽपियदिराजा
न्यथाकरोतितदाऽसौनिवारणीयो
ऽन्यथादोषः । यथाहकात्यायनः ।
अन्यायेनापितंयान्तं येनुयान्तिसभा
सदः । तेपितद्भागिनस्तस्माद्बोध

सम्यगन्वय ॥
समन्वारम्भणम् । न० समनुगमने ॥
समन्वित · । वि० सम्यगन्विते । स
युक्ते ॥
समन्वितलय · । पुं० एकताले ॥ स
म्यक अन्वितोलयोनृत्यगीतवाद्या
नांसाम्यअत्र ॥ सम्यगन्वितोवा
योमध्यमलयोयत्रयस्मिन् ॥
समपद । पु० रतिबन्धविशेषे ॥ य
था । योषित पादौस्कंदेस्थाप्यकारा
भ्यांपीडयेत स्तनौ । यथेष्टताडये
द्योनिं बन्धः समपदः स्मृतः इति ॥
न० युद्धकालेधन्विनांपादन्यासवि
शेषे । धन्विनांपादयोस्तुल्यरूपतया
धारणे ॥ धन्विनांस्थाने ॥
समपर्य्यासनम् । न० परिवर्त्तने ॥
समपादम् । न० धन्विनांपादयोस्तु
ल्यरूपतयाधारणे ॥
समबुद्धि । वि० सर्वत्ररागद्वेषशून्ये
॥ कः कोष्ठकः कर्मा० कृत्यव्यापृत
बुद्धौ ॥
समभिव्याहार :। पु० सहिते ।
समभिव्याहृत : । वि० सहोच्चरिते ॥
सहिते ॥
समभिहार . । पुं० आभीक्ष्ण्ये । पौ
न : पुन्ये ॥ भृशार्थे ॥ समभिहर
णम् । हृञ् । घञ् ॥ सम्यगभि
हारोयत्र ॥ विप्रकीर्णानांद्रव्याणांरा
शीभावे । शेषशेषिवाचकपदयो .

सहोच्चारणे ॥
समभूमि । स्त्री० समानस्थाने ।
भाजी ॥
समम । अ० सहार्थे । सार्द्धम् । स
मम् ॥ समति । अम० । अम् ॥
समय । पु० काले । दिष्टे । अनेह
सि ॥ सम्यगेति । इण् गतौ । अचा
दाच् ॥ आर्यकाले ॥ समयेहिस
र्वमुपकारिकृतम् । सर्वसमयेकृत
मुपकार्यंभवति ॥ शपथे ॥ आ
चारे ॥ सिद्धान्ते ॥ धियि । स
विदि ॥ क्रियाकारे ॥ निर्देशे ॥
सङ्केते ॥ भाषायाम् ॥ सम्पदि ॥
नियमे ॥ अवसरे ॥ समयनम्० स
मीचनेऽनागमनेवा० समेत्यता ।
इण् ० इणगतौवा । एरच् ० पुंसी
तिघोवा । पचाद्यज्वा ॥ सङ्ग
मे ॥
समयकार । पुं० सङ्केते ॥
समयज्ञ । वि० कालज्ञे ॥ समयंजा
नाति । ज्ञा० । क ॥
समयभेदी । वि० सविदुःखेतिक्रमका
रिणि ॥
समया । अ० अन्तिके । निकटे । म
ध्ये ॥ समेति० समयनंवा । इण्०
। आ समिण निकषिभ्याम् ॥ का
लविज्ञापने ॥
समयाचार · । पु० समयोचिताचर
णे ॥ तन्त्रविशेषे ॥

त् क्रियायांमिलने । सम्बन्धविशे षे । यथा । घटादीनांकपालादौ द्रव्ये गुणकर्मणो । तेषुजातेश्चस म्बन्ध समवाय प्रकीर्त्तित ॥ अवयवावयविनो॰ गुणगुणिनो ॰ क्रियाक्रियावतो॰ जातिव्यक्त्यो॰ नि त्यद्रव्यविशेषयोश्च यः सम्बन्ध स समवायइत्यर्थ ॥ यथावा॰ श्रोत्रे णशब्दसाक्षात्कारे॰ समवाय स न्निकर्ष ॰ कर्णविवरवर्त्याकाश स्यश्रोत्रत्वात्॰ शब्दस्याकाशगुण त्वात् ॰गुणगुणिनोश्चसमवायात् । तचनित्यसम्बन्ध । सचएकएव ॥ समवायते । अय॰ । घञ् ॥

समवायिकारणम् । न॰ उपादानका रणं ॥ यत्समवेत कार्यमुत्पद्यते॰ तत्समवायिकारणम् । यथातन्त वः पटस्य॰ पटश्चस्वगतरूपादे । यथावा॰ परमाणुद्व्यणुकस्य॰ कपा लश्चघटस्य । सर्वत्रसमवायिकार णं द्रव्यमेव । समवायोस्यास्त । इ नि । तच्चतत्कारणञ्च ॥

समवेत । त्रि॰ मिलिते । सङ्गते ॥ समवायसम्बन्धेनवर्त्तमाने । यथा । यत्समवेतं कार्यं भवतिज्ञेयं तुसम वायिजनकंतत् ॥

समवेतसमवाय । पु॰ सन्निकर्षवि शेषे ॥ यथ । शब्दत्वसाक्षात्का रेसमवेतसमवाय सन्निकर्ष ॰ श्रोत्रसमवेतेशब्दे॰ शब्दत्वस्यसम वायात् ॥

समस्तव्याप्त । त्रि॰ सम्यक्प्रकारेण व्याप्तिविशिष्टे ॥

समष्टि । स्त्री॰ सामान्ये । समस्त व्याप्ते । यथा । समस्तत्वेन सव्याप्ति समष्टिरितिकीर्त्तितेति । अपिच । समष्टिरीश सर्वेषांस्वा त्मतादात्म्यवेदनात् । तदभावात् ततोन्येतुकथ्यन्तेव्यष्टिसंज्ञयेति । सङ्घाते ॥

समष्ठिल । पु॰ क्षुपविशेषे । भण्डी रे । मन्थाने । आस्वगन्धके । कोकिला क्षे । कण्टकिफले । उपदंशे ॥ कोकुआ॰ इ॰ भा॰ ॥

समष्ठिला । स्त्री॰ गण्डीरे । गण्ड दूर्वा॰ इ॰ प्र॰ शा॰ कि ॥ सम्यग ष्ठिलाबीज यस्या ॥

समष्ठ्यस्थानम् । न॰ सकलास्थाने

समष्ठिल । पु॰ समष्ठिले ॥

समष्ठिला । स्त्री॰ समष्ठिलायाम् ॥ समेतिष्ठति । मिथिलादयश्चेति साधु ॥

समष्ठीला । स्त्री॰ समष्ठिलायाम् ॥

समसनम् । न॰ समासेपादानामैक्य साधने । अनेकस्यपदस्यएकपदीभव ने ॥ सङ्क्षेपणे ॥ अमुच्चेपणे । सम्पूर्वात्ल्युट् ॥

समसुप्ति । स्त्री॰ कल्पान्ते । महा

न्येऽध्यस्तत्वात् । तद्व्यतिरेकेणान-
स्तीत्यनुसन्धानेन । विद्यमानेतिका-
र्यकारणात्मकेप्रपञ्चे । ऐतद्यमा-
नगोचरोय । समाधिः । सत्यप-
र्वकमुच्यते । तत्वमस्यादिवेदा-
न्तमहावाक्यार्थज्ञानाभावेनाऽविद्या-
तत्कार्यस्याक्षीणत्वात् । एवं चित्तनि-
र्विकारत्वसत्वेन । पुनः क्षतत्प्रप-
ञ्चोत्थानात् । अयं सुषुप्तिवत् सबी-
जः । समाधिर्मुख्यः । मुख्यस्तु ।
तत्वमस्यादिमहावाक्यार्थसाक्षात्का-
रेण । अविद्यायानिवृत्तौ सत्यां क्रमेण
तत्कार्यनिवृत्तिरनेनाविद्यायाः पु-
नरुत्थानाभावेन तत्कार्यस्यापि पु-
नरुत्थानाभावान्निर्बीजोऽयं पूर्व-
कः समाधिः । स एव । सर्वाणी-
न्द्रियकर्माणि प्राणकर्माणि चापरे ।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदी-
पिते इत्यनेन श्लोकेन प्रदर्शितः । त-
थाहि । सर्वाणि निखिलानि स्थूल-
रूपाणि संस्काररूपाणि च । इन्द्रि-
यकर्माणि । इन्द्रियाणां श्रोत्रत्वक्-
चक्षूरसनघ्राणाख्यानां पञ्चानां । वा-
क्पाणिपादपायूपस्थाऽऽख्यानां वा-
ह्यानाम् । आन्तरयोर्मनोबुद्ध्योः
कर्माणि । शब्दश्रवणस्पर्शग्रहणरूप-
दर्शनरसग्रहणगन्धग्रहणानि । वच-
नादानगमनविहरणोत्सर्गानन्दा-
ख्यानि च । सङ्कल्पाध्यवसायौ च ।



एवं प्राणकर्माणि च । प्राणानां । प्रा-
णापानव्यानोदानसमानाख्यानां प-
ञ्चानां कर्माणि । वहिर्नयनमधोनय-
नमाकुञ्चनप्रसारणाद्यशितपीतस-
मानयनमूर्ध्वनयनमित्यादीनि । अ-
नेन पञ्च ज्ञानेन्द्रियाणि । पञ्चकर्मे-
न्द्रियाणि । पञ्च प्राणाः । मनोबु-
द्धिश्चेति सप्तदशात्मकं लिङ्गसूक्ष्मम् ।
तच्च सूक्ष्मभूतसमष्टिरूपं । हिरण्य-
गर्भाख्यं मिश्रविशिष्टमिति वेदितु
सर्वाणीति विशेषणम् । आत्मसंय-
मयोगाग्नौ । आत्मविषयकः स-
यमो धारणाध्यानसम्प्रज्ञातसमाधि-
रूपस्तत्परिपाके सति योगो । निरो-
धसमाधिः । यं । पतञ्जलिः सू-
त्रयामास । व्युत्थाननिरोधसंस्का-
रयोरभिभवप्रादुर्भावौ निरोधक्ष-
णचित्तान्वयो निरोधपरिणाम इति
। व्युत्थानं । क्षिप्तमूढविक्षिप्ताख्य-
भूमित्रयम् । तत्संस्काराः स-
माधिविरोधिनः तैर्योगिप्रयत्नेन
प्रतिदिनं प्रतिक्षणञ्चाभिभूयन्ते ।
तद्विरोधिनश्च निरोधसंस्काराः प्रा-
दुर्भवन्ति । ततश्च निरोधमात्रक्ष-
णचित्तान्वयो निरोधपरिणाम इति ।
तस्य फलमाह । ततः प्रशान्तवाहि-
ता संस्कारादिति । तमोरजसो-
र्नाशात् सर्वविक्षेपशून्यत्वे मधुरसत्व
रूपं चित्तं प्रशान्तमित्युच्यते । पूर्व

नाममात्रतदुक्ति । चतुरक्षरलघुवर्णेषु ॥ समानशब्देनपूर्वाचार्यैर्निर्द्दिष्टशब्दोऽभिधीयते दुष्समानात्रुतिवचनादितिकैयटः। वचनादिति । यथा॰ ऋ ऌ उ ज ऋ ऋ ऌ ऌ दुष्समानात्रुतिपूर्वव्याकरणवचनादित्यर्थ इतिविवरणम् । त्रि॰ सतौ । साधौ ॥ समे । तुल्ये । ऊनातिरिक्तवर्ज्जे ॥ एकस्मिन् ॥ समन्तादनित्यनेन । अन॰ । इल र्घेतिघञ् ॥ समतिना अन॰ । ताच्छील्यवयोवचनशक्तिषुचानश् । आगमशासनमनित्यमितिसुमन ॥ सहमानेनवर्त्ततइतिवा । वोपसर्ज्जनस्येतिसभाव ॥ समानमानमस्येतिवा । समानश्छन्द सीतिस॰ ।

**समानकालीन**:। त्रि॰ समकालोत्पत्तिके ॥ यथा । गोधुदुह्यमानात्समागत॰ दुग्धात्समागतइत्यादौ समानकालीनत्वभावनी । तेनगोविषयकवर्त्तमानदोहनकालीनगमनानुकूलकृतिमान् । एव गोविषयकातीतदोहनसमानकालीनातीतगमनानुकूलकृतिमानितिबोध ॥

**समानयानकर्म्मा** । पुं॰ सन्धेः प्रभेदे ॥ यथा । तात्कालिकफललाभार्थं सुत्तरकालीनफललाभार्थं वायत्रराजान्तरेणसन्धानंप्रतियानादिकर्मं क्रियते॰ ससमानयानकर्मासन्धिर्ज्ञेय ॥

**समानाधिकरण** । पुं॰ समानविषये ॥

**समानाभिहार** । पुं॰ समानगुणानामिश्रणे ॥ यथा॰ तोयदमुक्तजलबिन्दूनां॰ जलाशयेसमाभिहार यथाक्षीराभिषादिदुग्धपतितानांगव्यदुग्धानाम् ॥

**समानालङ्कृति** । स्त्री॰ अलङ्कारविशेषे ॥ यथा । समानालङ्कृतिर्यौ गोवस्तुनोरनुरूपयोरिति ॥

**समानिका** । स्त्री॰ वर्णवृत्तान्तरे ॥ हारमेकमाद्यदासङ्गलाभवेत्तदा । सप्तवर्णनिर्म्मितासासमानिकामता ॥ यथा । पद्मचारुचञ्चलानीलनीरजस्विषा ॥ आलिमन्मनोहरः॥ शवादमोहितम् ॥ अनुष्टुब्भेदेपि । ग्लौरजौसमानिकातु । यथा । यश्चकारपादपद्ममस्तिहत्तडागस द्म । धी समानिकापरेणनोचिताकमत्सरेण ॥

**समानोदक** । पुं॰ चतुर्दशपुरुषपर्य्यन्तजन्मनामस्मृतिपर्य्यन्तेच ॥ गोत्रजमात्रे ॥

**समानोदर्य्य** । पुं॰ सहोदरे । सोदर्य्ये ॥ समानेउदरेशयितः स्थित । समानोदरेशयितशोचोदात्तइतियत् । विभाषोदरइतिपा

च्छिकत्वात्तादृशीत्व ॥

समाप । पुं॰ देवयजने ॥ समाप्यते ऽस्मिन् । अकाप् इत्यच् ॥

समापकः । त्रि॰ समापनकर्त्तरि ॥ समापयति । णवुल् ॥

समापत्ति । स्त्री॰ यदृच्छया सङ्गतौ ॥

समापनम् । न॰ परिच्छेदे ॥ समाप्तौ ॥ वधे ॥ समाधाने ॥ शब्द । प्राप्ते ॥

समापन्न । त्रि॰ समाप्ते ॥ प्राप्ते ॥ क्लिष्टे ॥ वधे ॥

समापय्य । अ॰ समाप्तिं प्रापय्येत्यर्थे ॥

समापिका । स्त्री॰ वाक्यसमापकक्रियायाम् ॥ तत्र तिङन्ता एव भवन्ति । यथा । देवदत्तो गच्छति । क्वचित् क्तान्तादिपदेनापि वाक्यसमाप्तिः । यथा । नाहमिष्टः प्रियोजने । क्वचित्तव्याद्यन्तक्रियाया अपि वाक्यसमापकत्वम् । यथा । मया कोऽत्र गन्तव्यम् । याश्चाऽन्तिक्रियाऽसमापिकाः तत्र क्त्वाद्यो भवन्ति । यथा । गच्छन्भुङ्क्ते । भुक्त्वा व्रजति । पीत्वा स्वपिति ॥

समापित । त्रि॰ कृतसमापने ॥ यथा । आरब्धं मलमासात् प्राक् यत्कर्म्मनसमापितम् । आगते मलमासे तु तत्समाप्यं न संशयः इति मलमासतत्त्वम् ॥

समाप्त । त्रि॰ समाप्तिगते । समाप्तिविशिष्टे ॥ यथा । समाप्ते यदि जानीयान्मयैतदन्यथा कृतम् । ततस्तदन्यथाभूतं तत एव समापयेदिति तिथ्यादितत्त्वम् ॥

समाप्ति । स्त्री॰ अवसाने ॥ समर्थने ॥ समापनम् । आप्लृ॰ । क्तिः । क्रियाया अभ्यासे ॥ परिसमाप्तौ ॥

समाप्तिका । स्त्री॰ समाप्त्यर्थे ॥

समाप्त्यर्था । स्त्री॰ समस्यायाम् ॥

समाप्य । त्रि॰ समापनीये ॥

समायोगः । पुं॰ संयोगे ॥ समवाये ॥ प्रयोजने ॥ समायोजनम् । युजिर॰ । घञ् ॥ युद्धे॰ । रतौ॰ । सन्धौ॰ । वशीकरणसाधने ॥

समारतः । त्रि॰ उपरते ॥

समारम्भः । पु॰ उपक्रमे । आलारम्भे ॥ यथा । समारम्भा भग्नाः कति कति न वारांस्तव पशो पिपासोस्तुच्छेऽस्मिन् द्रविणमृगतृष्णाम्बुनि वृथा । तथापि प्रत्याशाविरमति न ते ऽद्यापि यतयामनो वर्षेशानि पतमवगिराव घटितमिति ॥ भावे घञ् । निहोर्षम् ॥ समारभ्यते । रभिघञ् । रभेरशब्लिटोरिति नुम् ॥

समारोपितः । त्रि॰ विषयसंयुक्ते ॥ सम्यक् कृतारोपणे । सम्यक्

स्थिते ॥ सम्यक्‌आरोपित ॥

समारोह । पु॰ सम्यगारोहणे । नीचादूर्द्ध्वगमने ॥ सोपाने । समारुह्यतेऽनेन॰ समारोहणम् । समारोहतिवा । रुहे कर्मणि॰ भावे वाघञ् । पचाद्यच्वा ॥

समालम्बी । पु॰ भूतृणे ॥

समालम्भ . । पु॰ विलेपने । कुङ्कुमादिविलेपे ॥ समालम्भनम । डुलभष्‌प्राप्तौ । घञ् । उपसर्गात्खल घञोरितिमुम । घातने ॥

समालम्भनम् । न॰ विलेपे । घातने ॥ सम्यक्‌स्पर्शने ॥

समालिङ्ग । पु॰ समालिङ्गने ॥

समाली । पुं॰ कुसुमाकरे ॥

समावर्त्त । पु॰ विष्णौ । संसारचक्रस्य सम्यगावर्त्तकत्वात्तथा । जननमरणादिरूप संसारचक्रमज्ञजीवान प्रतिसम्यगावर्त्तयन्‌समावर्त्त इत्यर्थ । समाङ्‌पूर्वाद्‌वृतेर्ण्यन्तात्पचाद्यच् । समावर्त्तनम् । वृतु॰ । भावेघञ ॥

समावर्त्तनम् । न॰ साङ्गाधीतवेदस्य गुरोरनुज्ञयागृहागमे । वेदाध्ययनानन्तरगार्हस्थ्याधिकारप्रयोजककर्मणि ॥ सम्पूर्वोवृत्त॰ल्युट ॥

समावाय । पु॰ समुदाये । समूहे ।

समावास । पु॰ स्थाने ॥

समाविष्ट . । त्रि॰ आक्रान्ते ॥

समावृत्त । पुं॰ लब्धानुज्ञे । साङ्गवेदाध्ययनानन्तरत्वमिदानीगृहस्थोभवेतिगार्हस्थ्यायगुरो प्राप्तानुज्ञे ॥ समावर्त्ततेस्म । वृतु॰ । गत्यर्थेतिक्त ॥

समावेदनम् । न॰ निवेदने ॥

समावेश । पु॰ विन्यासे ॥ एकत्रसहावस्थाने ॥

समावेशित . । त्रि॰ सहावस्थिते ॥ प्रविष्टे ॥

समाश । पु॰ सहभोजने ॥

समाश्रय । पु॰ वासस्थाने ॥ सम्यक्॰ आश्रय । सम्यगाधारे । सहाये ॥

समाश्रित . । त्रि॰ सम्यक्‌शरणागते ॥ सम्यक्‌प्रकारेणाश्रित ॥

समाश्वस्त । त्रि॰ सञ्जातविश्वासे ॥

समाश्वास . पुं॰ सम्यगाश्वासे ॥

समास । पुं॰ सङ्‌क्षेपे । समर्थने ॥ ऐकपद्ये । पदयो पदानांवाए कीकृतौ । समसने ॥ समसनम॰ पदयो पदानांवा॰ एकपदीकरणम्‌समास । सङ्क्षेप । भावेघञ । सचानेकपदैक्यम् । सचतुर्द्धा॰ प्रधानार्थस्यचातुर्विध्यात् । तथाचोक्त महाभाष्ये । इहकश्चित्समास : पूर्वपदार्थप्रधान॰ कश्चिदुत्तरपदार्थप्रधान॰ कश्चि

आप्नुवन्ति । समासाद्यते । षद्लृ० । कर्म्मणि यत् ॥

समासार्था । स्त्री० समस्यायाम् । पूरयितुं पदाकाङ्क्षायाम् । कविशक्तिपरीक्षार्थमपूर्णतयैव पठ्यमानायाम् । यथा । शतचन्द्रं नभस्तलमिति । तत्र० दामोदरकराघातविह्वलीकृतचेतसा । दृष्टं चाणूरमल्लेनेत्यादिना० सा० पूर्यते ॥ समासोऽर्थो यस्याः ॥

समासोक्ति । स्त्री० अर्थालङ्कारभेदे ॥ यथा । परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः । प्रकृतार्थप्रतिपादकवाक्येन० श्लिष्टविशेषणमाहात्म्यात् न तु विशेष्यस्य सामर्थ्यादपि० यदप्रकृतस्यार्थस्याभिधानं सा समासोक्ति ॥ उदाहरणम् । लहिऊण तुज्झ बाहुप्फंसं जीए स कोवि उल्लासो । जअलच्छी तुह विरहे ण हुज्जला दुब्बला णं सा ॥ अत्र जयलक्ष्मीशब्दस्य केवलं कान्तावाचकत्वं नास्ति । प्राकृतस्य संस्कृतं तु । लब्ध्वा तव बाहुस्पर्शं यस्याः स कोऽप्युल्लासः । जयलक्ष्मीस्तव विरहे न खलूज्ज्वला दुर्बला ननु सेति ॥ अत्र बाहुस्पर्शलाभप्रयुक्तोल्लासादिसाधारणविशेषणबलाज्जयलक्ष्मीवृत्तान्तोऽनायिकावृत्तान्तरूपतया गम्यत इति समासोक्तिरलङ्कारः ॥

समाहरणम् । न० समाहारे ॥

समाहार । पु० । समुच्चये । संसमुदायकरणे । एकत्रकरणे । बहूनामेकत्र व्यापारेण बुद्ध्या वा पञ्चमूली त्रिभुवनवद्राशीकरणे ॥ द्वन्द्वे ॥ समूहे । संहतिप्रधाने द्वन्द्वविशेषे ॥ यथा छत्रोपानहं वाक्त्वचम् । शमीदृषदमिति ॥ अत्र संहतेरेकत्वादेकवचनं नपुंसकत्वञ्च भवतो ॥ समाहरणम् । हृञ० । घञ् । सम्यगाहारे ॥

समाहित । त्रि० यतात्मनि । अनन्यमनसि । समाहितत्वमेकाग्रमनस्त्वं श्रवणादिषु ॥ समाधिस्थे ॥ उक्तसिद्धान्ते ॥ आहिते ॥ निर्विवादीकृते ॥ प्रतिज्ञाते । संस्कृते । अङ्गीकृते ॥ समाधीयते स्म । क्त । दधातेर्हिः ॥ सम्यगाहितः स्थितो वा ॥ सावधाने ॥ अलङ्कारान्तरे ॥

समाहृत । त्रि० सङ्कलिते ॥

समाहृति । स्त्री० संग्रहे ॥ समाहरणम् । भावे क्तिन् ॥ एककर्तृकाणामनेककर्तृकाणां वा एकाभिप्रायाणां वाक्यानां समाहरणे ॥ संक्षिप्यते संक्षेपेण प्रतिपद्यतेऽनया । क्तिन् ॥

समाह्वय । पुं० आह्वये । सङ्गरे ॥ आख्याने ॥ प्राणिद्यूते । पशुभिः

कल्पयेत्प्राज्ञ सर्वकर्मसुसर्वदे तिमत्स्यपुराणम् ॥ छन्दोगपरिशि ष्टेपि । नाङ्गुष्ठादधिकान्यूनासमि त्स्थूलतयाक्वचित् । नचिमुक्तत्व चार्चैवनसकीटानपाटिता ॥ प्रा देशान्नाधिकानोनानतथास्याद्विशा खिका । नसपर्णानिर्वीर्याहोमे षुचविजानतेति ॥ निषिद्धलक्षणय था । विशीर्णाविदलाह्रस्वावक्रा स्थूलाद्विधाकृता । कृमिदष्टाच दीर्घाचसमिधोनैवकारयेत् ॥ अथ दोषायथा । विशीर्णायु क्षयक्, र्याद्विदलापुत्रनाशिनी । ह्रस्वाना शयतेपत्नींवक्राबन्धुविनाशिनी ॥ कृमिदष्टारोगकरीविद्वेषणकरीद्वि- धा । पशून्मारयतेदीर्घास्थूलाचा र्थविनाशिनीतितन्त्रम् ॥ नवग्र हाणांसमिधोयथा । अर्कःपला शः खदिरस्त्वपामार्गोथपिप्पल. उदुम्बरः शमीदूर्वा, कुशाश्चसमि धःक्रमादिति ॥

समिध । पु॰ असितार्चिषि । अग्नौ ॥

समिन्धनम् । न॰ समिधि ॥

समिर । पु॰ वायौ ॥ ङ॰ हि॰ च न्द्र ॥

समी । स्त्री॰ शम्याम् । बीजगुप्त्या म् ॥ समति । षम॰ । अच् । गौ रादि ॥

समीकम् । न॰ साम्परायिके । युद्धे ॥ समनम् । षम॰ । अनीकादय श्चेतिकन् ॥ सम्यगयनवा । ईमत्या दौ । बाहुलकात्कन् ।

समीक्षम् । न॰ साङ्ख्यशास्त्रे ॥

समीक्षणम् । न॰ सम्यङ्निरूपणे ॥ प्रेक्षणे ॥ सम्यक्प्रकारेणईक्षणं दर्शनम् ॥

समीक्षा । स्त्री॰ तत्त्वे ॥ बुद्धौ ॥ नि भालने । समीक्षणे । दर्शने ॥ मीमांसाशास्त्रे ॥ सम्यगीक्षणमन याऽत्र ॥ ईक्ष॰ । गुरोश्चेत्य । टा प् ॥ यत्ने ॥

समीक्ष्य । त्रि॰ समीक्षणीये । दर्श नीये ॥

समीक्ष्यमाण । त्रि॰ प्रेक्ष्यमाणे ॥

समीच । पु॰ समुद्रे । अम्बुपारे ॥ सम्यञ्चतियस्मिन् ॥ कुण॰ । समी पङ्कृतिषट्दीर्घत्वञ्चधातोः ॥

समीची । स्त्री॰ मृग्याम् । एण्याम् ॥ वन्दनायाम् ॥ टित्वान्ङीप् ॥

समीचीनम् । न॰ सत्ये । ऋते । त थ्ये ॥ त्रि॰ तद्वति ॥ सम्यगेव । विभाषाञ्चेरदिक्स्त्रियामितिख । समः समि ॥ शोभने ॥

समीन । त्रि॰ समाम् । अधीष्टे । भृते । भूते । भाविनि । समाया. खः ॥ मीनसहिते ॥

समीप । त्रि॰ अव्यवहिते । निकटे

क्षतिसुभगाङ्गी तेभाबाऽमीभिरयत नोव्रजतिसुतरादर्पं राज स्तएवतवा कुश्रो ॥ अवसतायोग • उत्क्रोदा हरणं स्वसतायोग ' यथोदितसधू सरो• गलितयौवनाकामिनी• सरोविगतवारिज • सुखमनघर स्ताकृती । प्रभुर्द्धनपरायणः• सत तदुर्गत सज्जनोनृपाङ्गणगत ' खलो• मनसिसप्तशल्यानिमे ॥ अवशष्टमिनिधूसरेशल्ये शल्यान्तरा णीतिशोभनशोभायोग ॥ द्वितीय समुच्चये यथा । सच्चन्यायुगपद्यागुणक्रिया । गुणौचक्रियेगुण क्रिया ' । क्रमेणोदाहरणम् । विदलितसकलारिकुलतवबलमिदम भवदाशुविमलञ्च । प्रबलमुखा निनराधिपमलिनानिचतानिजाता नि ॥ अथमेकपदेतयावियोग प्रियवाचोपगत सुहृ सङ्गोमे । नववारिधरोदयादहोभिभंवितव्यञ्च निरातपत्वरम्ये कालुपस्ततवाह्नि तेष्वकस्मात्सितपङ्कजवक्तोदरश्रि-पञ्च । पतितञ्चमहीपतेन्द्रतेषा वपुषिप्रस्फुटमापदाकटाक्षैः ' ॥ बहूनासमाहारे ॥ खलेकपोतन्याये नबहूनाकार्यसाधने । कारणाना समुद्योग । सद्वितीय समुच्चयः ॥

समुच्छेद । पु• विनाशे ॥

समुच्छ्रय । पुं• विरोधे । वैरे ॥ उन्नतेधे । उन्नती ॥ समुच्छ्राय ' अथ घञ् । श्रिञ्• । एरच् ॥

समुच्छ्राय ' । पु• समुच्छ्रये ॥ सम्यगुच्छ्राय ॥

समुच्छ्रित । त्रि• उच्चे ॥

समुज्झित । त्रि• त्यक्ते ॥ समुज्झि तेस्म । उज्झउत्सर्गे । क्त ॥

समुत्कीर्ण । त्रि• सम्यगुल्लिखिते । विद्धे ॥

समुत्क्रम ' । पु• ऊर्द्ध्वगमने ॥ स म्यगुत्क्रमे ॥

समुत्क्रोश । पुं• कुररपक्षिणि ॥ सम्यमुत्क्रोशति । क्रुश• । अच ॥

समुत्त । त्रि• क्लिन्ने ॥ समुनत्ति । उन्दीक्लेदने । अकर्मकत्वात् कर्त्तरिक्त ः । नुदविदेतिपक्षे नत्वा ऽभाव ' ॥

समुत्थ । त्रि• समुद्भवे ॥ समुत्थिते ॥

समुत्थनम् । न• समुद्योगे ॥ व्याधीनांनिर्णये ॥ ऊर्द्ध्वगमने ॥ सम्यक्प्रकारेणोत्थाने । उठावना• जभाकर्ना• इ• भा• ॥ यथा । इन्द्रध्वजसमुत्थान प्रमादाज्ञात यदि । तदाशान्तिमेवर्षे कार्त्तव्यना राधिपे ' ॥

समुत्थित ' । त्रि• सम्यगुत्थिते ॥

समुत्पतनम् । न• कूर्दने ॥

समुत्पन्न ः । त्रि• समुद्भूते ॥

समुत्पिञ्ज । वि० अत्यन्तव्याकुले ॥ समुत्पिञ्जते । पिजिहिंसायाम् । अच् ॥ पु० भृशमाकुलसैन्ये । पिञ्जले ॥

समुत्सुक । वि० अनुरक्ते ॥ सम्यगुत्कण्ठिते ॥ सम्यगिष्टार्थोद्युक्ते ॥

समुद् । वि० सानन्दे ॥ मुदासहवर्त्तते । ॥

समुदक्त । वि० कूपादेरुद्धृतजलादौ । उद्धृते । समुदच्यतेस्म । अञ्चु० । क्त ॥

समुदय । पु० सङ्घे । गणे । समूहे ॥ सयुगे । रणे । युद्धे ॥ समुद्गमे ॥ समुदीयते० समुदयन्तेवा । इण० । अयगतौवा । एरच्० । पचाद्यच्वा ॥ समेत्योदये ॥ राज्ञांधान्यादिरूपायामुत्पत्तिस्थाने ॥ समुदयन्ति० उत्पद्यन्ते० अस्मादर्थाः । एरच् ॥ दिने । न० लग्ने ॥

समुदागम । पुं० समन्ताज्ज्ञाने ॥

समुदाचार । पुं० अभिप्राये । आशये ॥

समुदाय । पुं० समूहे ॥ युद्धे ॥ समुदायते । अयगतौ । घञ् ॥ पृ० । अच् । समुदयनम । अग्रदानादौ यज्ञवा ॥ पृष्ठस्थायिवले ॥ उद्गमे ॥

समुदित । वि० समुत्पतिते समुन्नते ॥ सम्यक्प्रकारेणकथिते ॥

समुदीरणम् । न० पक्षिणांपरस्परस्यईयागमने

समुद्ग । पु० समुद्गके ॥ समुद्गच्छति । गम्लृ० । अन्येष्वपीतिड ॥ यमकभेदे ॥ अर्द्धाभ्यासः समुद्गः स्यादस्यभेदास्त्रयोमताः ॥ वि० मुदगसहिते ॥

समुद्गक । पुं० सम्पुटके । भूषणाद्याधापने ॥ समुद्गच्छति । गम्लृ० । अन्येष्वपीतिड० । स्वार्थेकन् ॥

समुद्गत । वि० उत्पत्तिप्राप्ते ॥

समुद्गम । पु० ऊर्ध्वंगतौ ॥ उत्पत्तौ ॥

समुद्गयमकम् । न० चित्रकाव्यप्रभेदे ॥ यथा । अयशोभिदुरालोकलोपधामरणाहते ॥ अयशोभिदुरा० लोके० लोपधा०मरणाहते ॥ अस्यार्थः । अय शुभावहोविधिः० अयशोभी० भाग्यवान् । सचासौ दुरालोक० लोकस्त्वितिहं दुःखं दर्शयतीतिविशेषणसमासः० तस्मिन । लोपधामलोपाश्रयः धृपितत्वाद० । अतएवरणाहत० रणार्थीत्यर्थः । लोपधामचासौ० रणाहतश्चतस्मिन्० एवंविधेवीरलोके । अयशोभिदुरा० साम्यमादरनिमित्ता

पकीर्त्तिनिवर्त्तकः॥ उपधा॰ उपाय॰ मरणाहते॰ प्राणत्यागविनेत्यर्थ॰। का॰ नचापीत्यर्थ॥
समुद्गीतम्। चि॰ उच्चैर्गीते॥
समुद्गीर्ण। चि॰ वमिते॥ उत्तोलिते॥ कथिते॥
समुद्धत। त्रि॰ अविनीते॥ समुद्गीर्णे॥ समुद्धन्तिस्म॰ समुद्धन्यतेस्मवा। हन्तोर्गत्यर्थत्वात्कर्त्तरिक्त कर्मणिवा॥
समुद्धरणम्। न॰ उद्धरणे॥ सम्युद्ध्रियते। उद्धरतेल्युट्॰ भावेवा॥ वान्तान्ने॥ उन्नये॥ भुक्तोज्झितोन्मूलितयोः स्यादुद्धरणमुन्नयेवृतिरभसः॥
समुद्धर्त्ता। त्रि॰ उद्धारकर्त्तरि॥ श्रीगुरौ॥ सम्यगनायासेन॰ उत्॰ ऊर्ध्वं सर्वबाधाभ्योऽधिभूतेभ्युद्धृत्यस्य विधर्त्ता॰ धारयिता॥ उन्मूलयितरि॥ यथा॥ पननस्यार्णासमुद्धर्त्तुरितिरघु॥
समुद्धृतः। त्रि॰ समुत्कीर्णे॥ अपनीते॥ उत्थापिते॥ यथा। जलौघमग्नासचराचराधराविषाणकोट्याखिलविश्वमूर्त्तिना। समुद्धृतायेनवराहरूपिणासमेस्वयम्भूर्भगवान्प्रसीदतु॥ सम्यकप्रकारेणउद्धृत॥
समुद्भव। पुं॰ उत्पत्तौ॥ वारवे सम्यगुद्भव॥ समुद्भवत्यस्माद्वा॥ अपादानार्थे॥ भुवोऽदेरप्॥
समुद्भूत। त्रि॰ समुत्पन्ने॥
समुद्र। पुं॰ अम्भोधौ। तत्पर्याया। समुद्रो॰ ब्धिरकूपार॰ पारावार॰ सरित्पति॰ उदन्वानुदधि॰ सिन्धु॰ सरस्वान्॰ सागरो॰ र्णव॰। रत्नाकरो॰ जलनिधि॰ र्यादःपति॰ रपाम्पतिरिति। समुनत्ति॰ उन्दी॰। स्फायीतिरक्॥ चन्द्रोदयेसम्यकउन्दन्ति क्लिद्यन्तिअपोयत्रवा। अपाच्चैवसमुन्देमससमुद्रइतिस्मृतः॥ वायुपुराणम्॥ समीचीना॰ उद्रा॰ जलचरविशेषायस्मिन्निति वा॥ सहमुद्रयामर्यादयावर्त्तते॰ इतिवा॥ परमात्मनि॥ समुत्पद्यभूतानिद्रवन्तिलयंगच्छन्त्यस्मिन्निति व्याख्यानात्॥ सङ्ख्याविशेषे॥ अन्त्याद्यं शतिगुणं समुद्रइति रामायणटीकायांमाहेश्वर्यांव्याख्यानात्॥ ढगणस्यद्वितीयपर्याये। आदिगुरुचिकले॰ऽ।॰। त्रि॰ मुद्रयासहितेपत्रादौ॥
समुद्रकफः। पुं॰ समुद्रफेने॥ समुद्रस्यकफइव॥
समुद्रकान्ता। स्त्री॰ नद्याम्॥ समुद्रस्यकान्ता। समुद्रः कान्तोयस्यावा॥ पृक्कायाम्॥

समुद्रगा । स्त्री॰ नद्याम् ॥

समुद्रगृहम् । न॰ जलयन्त्रालये । फुहारेका घर॰ इ॰ भा॰ वि॰ शेष ॥

समुद्रचुलुक । पु॰ अगस्त्यमुनौ ॥ समुद्रचुलुकोगण्डूषोऽस्य ॥

समुद्रदयिता । स्त्री॰ नद्याम् ॥

समुद्रनवनीतम् । न॰ पीयूषे । चन्द्रे ॥ समुद्रस्यनवनीतमिव ॥

समुद्रनेमि । स्त्री॰ समुद्रमेखलायाम् । भूमौ ॥ समुद्रोनेमिरिवनेमिरस्या ॥

समुद्रफलम् । न॰ अब्धिफले । औषधविशेषे ॥ तद्गुणायथा । फलं समुद्रस्य कटूष्णकारि॰ वातापहं भूतनिरोधकारि । त्रिदोषदावानलदोषहारिकफामयभ्रान्तिनिरोधकारीतिरा॰ नि॰ घण्ट॰ ॥

समुद्रफेन । पु॰ फेने । अब्धिकफे । डिण्डीरे ॥ समुद्रफेनश्चक्षुष्योलेखनः शीतलः सरः । कषायोविषपित्तघ्नः कर्णरुक्कफहृल्लघु ॥

समुद्रमेखला । स्त्री॰ भुवि । पृथ्व्याम् । विश्वम्भरायाम् ॥ स्थिरायाम् ॥ समुद्रोमेखलायस्याः ॥

समुद्रयात्रा । स्त्री॰ पोतेनसमुद्रगमने ॥ समुद्रयात्रादय॰ कलौ निषिद्धायथा । समुद्रयात्रास्वीकारः कमण्डलुविधारणम् । द्विजानामसवर्णासुकन्यासूपयमस्तथा । देवरेणसुतोत्पत्तिर्मधुपर्के पशोर्वधः । मांसादनं तथाश्राद्धे वानप्रस्थाश्रमस्तथा ॥ दत्तायाश्चैव कन्यायाः पुनर्दानं वरस्य च । दीर्घकालं ब्रह्मचर्यं नरमेधाश्वमेधकौ ॥ महाप्रस्थानगमनं गोमेधश्चतथा मखः । इमान्धर्मान्कलियुगे वर्ज्यानाहुर्मनीषिणः ॥ इति बृहन्नारदीयम् । अपिच । एतानिलोकगुप्त्यर्थं कलेरादौमहात्मभिः । निवर्त्तितानिकर्माणि व्यवस्था॰ पूर्वकं बुधैरिति ॥

समुद्रयानम् । न॰ पोते । वहित्रे ॥ यथा । समुद्रयानेरत्नानिमहामूल्यानिसाधुभिः । रत्नपरीक्षकैः सार्द्धमानयिष्ये बहूनिचेतिवराहपुराणम् ॥

समुद्रयायी । त्रि॰ समुद्रवहित्रादिनाद्वीपान्तरगामिनिजने ॥ समुद्रयायीवन्दीवर्त्तिकः कूटकारकः । वृत्तिमनु॰ ॥ समुद्रयायिभिः सार्द्धं सविदःसूर्य्यलिङ्गं तद्वृत्तिवराहपुराणं ॥

समुद्ररसना । स्त्री॰ पृथ्व्याम् ॥ समुद्रोरसनाकाञ्चीयस्याः ॥

समुद्रलवणम् न॰ काञ्चौ । सिन्धु

टे । सामुद्रे ॥ समुद्रस्यलवणम् । समुद्रजलजात लवणं वा ॥
समुद्रवह्नि । पु॰ वाडवे । वडवानले ॥
समुद्रविजय । पु॰ कृष्णार्ह त्पितरि ॥
समुद्रसिन्धुसङ्गम ः । पु॰ । तीर्थ विशेषे ॥
समुद्रसुभगा । स्त्री॰ गङ्गायाम् ॥
समुद्रा । स्त्री॰ शम्यां ॥ शम्या ॥
समुद्रान्तम् । न॰ जातीफले ॥ श्व्याबसाने ॥
समुद्रान्ता । स्त्री॰ तुण्डिकेय्याम् कापास्याम् ॥ समुद्रोन्तोयस्या ॥ यद्दा । मुद्रयासहवर्त्तमानोन्त समीपेयस्या । आच्छादकत्वात् ॥ दुरालभायाम् । यासे । यवासे ॥ समुद्रोन्तोऽस्यस्या । अर्थाद्य च् ॥ समुद्रोन्तोऽस्यावा ॥ मरु श्मालायाम् ॥ पृक्कायाम् ॥ समुद्रोऽस्या ॥
समुद्राम्बरा । स्त्री॰ पृथिव्याम् । अचलायाम् ॥ समुद्रोम्बर वसन यस्याः ॥
समुद्रायणा । स्त्री॰ नद्याम् । सरिति ॥ समुद्रोऽयन गतिर्यस्या ॥
समुद्रार । पु॰ ग्राहविशेषे ॥ सेतुबन्धे ॥ तिमिङ्गिले ॥
समुद्रेक । पु॰ प्रादुर्भावे ॥
समुन्दनम् । न॰ आर्द्रीभावे । क्लेदे । क्लेमे । उनदी॰ ल्युट् ॥
समुन्न । त्रि॰ आर्द्रे । समुनत्ति । उन्दी॰ अकर्मकत्वात् कर्त्तरिक्त । नुदविदेतिपक्षे नत्त्वम् । सम्यगुन्न क्लिन्न वा ॥
समुन्नत । त्रि॰ समुन्नद्धे ॥ सम्भविशेषे । द्र॰ धरणि ॥
समुन्नति । स्त्री॰ समुच्छ्रये । उत्सेधे ॥ अतिवृद्धौ ॥
समुन्नद्ध । त्रि॰ समुन्नते ॥ पण्डितम्मन्ये ॥ गर्विते । दृप्ते ॥ ऊर्ध्वबद्धे ॥ प्रभौ ॥
समुन्नय । पु॰ समुच्छ्रये
समुन्नाह । पु॰ उच्छ्राये ॥
समुपक्रम । पु॰ आरम्भे ॥ समुपक्रमणम् । क्रमु॰ । घञ् ॥
समुपजोषम । अ॰ आनन्दे । कात्स्यार्थे ॥ समुपजोषणम् । जुषीप्रीतिसेवनयो । अम्प्रत्यय ॥
समुपस्थित । त्रि॰ प्राप्ते ॥
समुपेत । त्रि॰ सम्प्राप्ते ॥
समुपेयिवान । त्रि॰ सम्यगुपगते ॥
समुल्लसत् । त्रि॰ सम्यगुल्लासयुक्ते ॥ यथा । दरस्मितसमुल्लसद्दनकान्तिपूरामृतैर्भवानलविभक्तितानमूर्च्छतोनरान् । विदेकमयचन्द्रिकाचयचमत्कृतिं तन्वतीतनोतु ममशतनो सर्वदास्वन्तनोरङ्गना ॥
समुल्लिखन् । त्रि॰ पादादिनाभूमि

सम्पत्‌ ० द्र० । स्त्री० भूतौ ॥ गुणोत्कर्षे ॥ हारभेदे ॥ सम्पद्यतेऽनया वा । पद० । सम्पदादित्वात्‌ क्विप्‌ ॥ अथसम्पद्भवत्यन्ते स्वल्पेकर्मणि कर्मणा । महतश्चिन्तनं सम्पत्तया प्राप्यमहाफलम ॥ हतीयतारायाम्‌ ॥ वासनासन्ततौ शरीरारम्भका पुण्यादिकर्मभिरभिव्यक्तायाम्‌ । सा द्विधा । दैवी० आसुरीति भेदात्‌ । अनयोर्विस्तारस्तु भगवद्गीतायाः षोडशाध्याये यथा । श्रीभगवानुवाच । अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः । दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम्‌ । अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम्‌ । दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम्‌ ॥ तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता । भवन्ति सम्पदं दैवीमभिजातस्य भारत ॥ दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च । अज्ञानञ्चाभिजातस्य पार्थ सम्पदमासुरीम्‌ ॥ दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता । मा शुचः सम्पदं दैवीमभिजातोऽसि पाण्डव ॥ द्वौ भूतसर्गौ लोकेऽस्मिन्‌ दैव आसुर एव च । दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥ प्रवृत्तिञ्च निवृत्तिञ्च जना न विदुरासुराः । न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम्‌ । अपरस्परसम्भूतं किमन्यत्‌ कामहैतुकम्‌ ॥ एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः । प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः । मोहाद्गृहीत्वाऽसद्ग्राहान्‌ प्रवर्त्तन्तेऽशुचिव्रताः ॥ १० ॥ चिन्तामपरिमेयाञ्च प्रलयान्तामुपाश्रिताः । कामोपभोगपरमा एतावदिति निश्चिताः ॥ आशापाशशतैर्बद्धाः कामक्रोधपरायणाः । ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान्‌ ॥ इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथम्‌ । इदमस्तीदमपि मे भविष्यति पुनर्धनम्‌ ॥ असौ मया हतः शत्रुर्हनिष्ये चापरानपि । ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्‌ सुखी ॥ आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया । यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥ अनेकचित्तविभ्रान्ता मोहजालसमावृताः । प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ आत्मसम्भाविताः स्तब्धा धनमानमदान्विताः । यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम्‌ ॥ अहङ्कारं बलं दर्पं कामं क्रोधञ्च संश्रिताः । मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥

तानहं द्विषत ' क्रूरान् संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु । आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि । मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ २० ॥ त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः । कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः । आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥ यः शास्त्रविधिमुत्सृज्य वर्त्तते कामकारतः । न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ । ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्त्तुमिहार्हसि ॥ २४ ॥ इति ॥

सम्पद्म् । न० समेपदयुगे ।

सम्पद्यमान । त्रि० मिलिते ॥

सम्पदा । स्त्री० सम्पत्तौ । नाचारसि ॥

सम्पन्न । त्रि० सम्पत्तिशालिनि । समृद्धे ॥ साधिते ॥ सङ्गते । एकीभूते ॥ विशिष्टे ॥ सम्पन्नरसस्य । पद० । सः । रसाभ्यामितित्वम् ॥

सम्पराय : । पुं० समीके । युद्धे ॥ आपदि ॥ उत्तरकाले ॥ सम्यक् परैत्यस्मिन्निति सम्परायः० परलोकगमनम्० इतिव्याख्याता

॥ सम्परायणम् । इण्० । ८२ स्थ० इणशीङ्गा । घञ् ॥

सम्परायकम् ।
सम्परायिकम् ।) न० युद्धे ॥

सम्परेत । त्रि० मृते ॥

सम्पर्क । पु० मैत्रके ॥ रतौ । मिश्रते ॥ सम्बन्धे । संयोगे ॥

सम्पर्की । त्रि० सम्पर्कविशिष्टे ॥

सम्पश्या । पु० आरग्वधे ॥ सम्यक् पाकि ॥ त्रि० तर्कके । वाचके ॥ धृष्टे ॥ सम्यक्पाकिश्च ॥ सम्यक् पचनम्० सम्यक् पच्यतेऽनेनवा । डुपचष्० । इत्यस्मात् घञ् ॥

सम्पाट । पुं० तर्कौ । पू० म० माला ॥

सम्पात । पु० पक्षिगतिविशेषे । पतने ॥ सम्यक्पतने ॥ सञ्चारे ॥ सम्यक् पतनम् । पतॢ० । घञ् ॥ सम्यक् पतन्त्यस्मिन्नितिव्युत्पत्त्या० कर्मणि च घञ् ॥

सम्पाति । पु० पक्षिराजे । अरुणात्मजे० जटायुषोज्येष्ठभ्रातरि ॥ सम्यक् पाति । पातिरति ।

सम्पातिक । पुं० सम्पाती ॥

सम्पादक : । त्रि० निष्पादके । सम्यक्कर्त्तरि । धनादिसम्पादके ॥

सम्पादनम् । न० निष्पादने । करणे ॥

सम्पादित : । त्रि० अर्जिते ॥ स

स्थिते ॥

सम्पीड । पुं॰ मोटने ॥

सम्पीडनम् । न॰ सम्यक् प्रकारेण व्यथने ॥

सम्पुट । पु॰ कुरुवके ॥ समुद्गके ॥ पेटके ॥ एकजातीयेऽभयमध्यवर्त्तिनि ॥ रतिबन्धविशेषे ॥ यथा । सम्प्रसार्योभयोपाटौ व्याप्तमाकटिलक । भगलिङ्गस्य योगाद्रमते सम्पुटोऽपि स ॥

सम्पुटक । पु॰ समुद्गके । भूषणाद्यावपने । उज्वा॰ क्॰ भा॰ प्र॰ । सम्पुव्यते । पुटस श्लेषणे । कुन् ॥

सम्पूर्ण । पु॰ रागजातिविशेषे ॥ यथा । औडव पञ्चभि प्रोक्त. स्वरै षड्भिस्तु षाडव । सम्पूर्ण सप्तभि प्रोक्तो रागजातिस्त्रिधामता ॥ त्रि॰ न्यूनत्वदोषरहिते । कृत्स्ने । परिपूर्णे ॥ साङ्गे ॥ सम्पूर्यते स्म । पूरी॰ । आप्या । कर्त्तरि॰ कर्म्मणि वा क्त : ॥

सम्पृक्त . । त्रि॰ खचिते । मिश्रिते । सम्बद्धे । कबरे । मिश्रे ॥ संयुक्ते ॥ संसृष्टे । सम्पृच्यते स्म । पृची॰ । क्त ॥

सम्प्रचाल । पु॰ तपोविशेषलब्धसञ्चितज्ञानप्रवाहविशेषे ॥

सम्प्रज्ञात . । पु॰ समाधिप्रभेदे ॥ त्रि॰ सम्यक्प्रकर्षेण ज्ञाते ॥

सम्प्रज्ञातसमाधि । पु॰ सविकल्पकसमाधौ ॥ ब्रह्माहमस्मीति चिन्तयतो॰ यावच्चैतोव्यापृतिस्तावत्सम्प्रज्ञातसमाधि ॥

सम्प्रतापन । पु॰ कुम्भीपाके ॥

सम्प्रति । अ॰ अधुनार्थे ॥ सम्॰ प्रति॰ एतयो समाहारद्वन्द्व ॥ न्याय्ये ॥

सम्प्रति . । पु॰ पूर्वकल्पस्थाऽर्हद्भेदे ॥

सम्प्रतिपत्ति । स्त्री॰ उत्तरविशेषे । साध्यस्य सत्यकथ॰ ॥ शृणु॰ आसियोग प्रत्यर्थीयदि तत्प्रतिपद्यते । सा तु सम्प्रतिपत्ति आच्छाङ्घ्रिविज्ञदाहृता ॥ निश्चये ॥ उत्पत्तौ ॥

सम्प्रतिपन्न । त्रि॰ सम्यग्ज्ञाते ॥

सम्प्रतिष्ठा । स्त्री॰ स्थितौ ॥

सम्प्रतीति . । स्त्री॰ सम्यक्ख्यातौ ॥ सम्यक्ज्ञाने ॥

सम्प्रत्यय । पु॰ आदरे । अङ्गीकारे ॥ ज्ञाने । निश्चये ॥ यथासञ्ज्ञासम्प्रत्ययाय सञ्ज्ञात्वनिश्चयायेतितदर्थ ॥

सम्प्रदाता । त्रि॰ दातरि । सम्प्रदानकर्त्तरि ॥

सम्प्रदानम् । न॰ दानपात्रे । चतुर्थीकारके । त्यागोद्देश्ये ॥ सम्यक्प्रकर्षेण दीयतेऽस्मै तत् । सम्यक्प्रकृष्टदानं वा ॥

प्रसन्नधी ॥ स्मार्तमर्शान्वितोदैवि तद्न्याचारतत्पर । चार्यपचान्वितोदेविनथास्वरूपवेशधृक् ॥ श्रेवष्णो तस्यसङ्गातपुन . स्नानपरायण . । केवलविष्णुतत्त्वज्ञ प्रोक्तोभागवतशिवे ॥ इतिश्रीमक्तिसङ्गमतन्त्रे १ खण्डे ८ पटल . ॥ चतुर्णांतेषां वैष्णवसम्प्रदायभेदा यथा । श्रीमन्नारायणोब्रह्मानारदोव्यासएवच । श्रीलमध्वपद्मनाभोनृहरिर्माधवस्तथा ॥ अक्षोभ्यस्जयतीर्थश्चज्ञानसिन्धुर्महानिधि । विद्यानिधिश्चराजेन्द्रोजयधर्ममुनिस्तथा । पुरुषोत्तमोब्रह्मण्योव्यासतीर्थमुनिस्तथा । श्रीमांल्लक्ष्मीपति श्रीमान्माधवेन्द्रपुरिस्तथा ॥ सम्प्रदायविहीनायेमन्त्रास्तेनिष्फलामता . । अत · क लौभविष्यन्तिचत्वार : सम्प्रदायिन : ॥ श्रीमाध्विरुद्रसनकावैष्णवा · क्षितिपावनाइति ॥ सम्प्रदानम् । रुदाञ् · । घञ · भावइतियुक्त ॥

सम्प्रधारणम् । न· विचारे॥ सम्प्रश्ने ॥

सम्प्रधारणा । स्त्री· उचितानुचितनिर्णये । समर्थने । इदमुचितमेवेति निश्चये ॥ सम्प्रधारणम् । धृञ् · । ण्यन्त : । ण्यासेतियुच् ॥

सम्प्रमोष . । पु · विस्मरणे ॥

सम्प्रयोग . । पु · रते ॥ निधुवने ॥ ॥ अन्विती । सम्बन्धे ॥ कार्मणे । वशीकरणादिकर्मणि ॥ त्रि· प्रार्थिते ॥

सम्प्रयोगी । पु · कामकेलौ । कामे । कामुके । सप्रयोजने ॥

सम्प्रश्न । पु · सप्रधारणे ॥

सम्प्रसाद . । पु · सुषुप्त्यवस्थाने ॥ सम्यक्प्रसीदत्यस्मिन । षद्लृ · । घञ ॥ विट्‌षि ॥ प्राणे ॥

सम्प्रसाधनम् । न· परिचीकरणे ॥ शोभाजनके ॥

सम्प्रहार । पुं· गतौ ॥ युद्धे । रणे सम्प्रहरणम् । हञ् · । घञ् ॥ हनने· इतिधरणि ॥

सम्प्रहृष्ट . । त्रि· पुलकिते । पुलकितगात्रे ॥

सम्प्राप्त । त्रि· समागते ॥ सम्यक्प्रकारेणप्राप्त . ॥

सम्प्राप्ति · । स्त्री· सम्यक्प्रापणे ॥

सम्प्रैष । पुं· नियोगे । विधौ ॥

सम्प्लव · । पु · एकीभावेनेतरेतरघटीभावे ॥ व्यामिश्रणे ॥ महापूरे ॥ वारिपूरे ॥ प्रलये । सङ्क्षोभे । उक्तौ ॥ यथा । मेघ सम्प्लवते ॥ सम्प्लवनम् । प्लुङ् · । च्छेदारव् ॥ सम्प्लवतेवा । पचाद्यच् ॥

सम्प्लवोपल : । पुं· चन्द्रकान्ते ॥

सम्फाल : । पुं· मेषे ॥

सम्फुल्ल : । त्रि· विकचे । विकसिते । प्रफुल्ले ॥ सम्फलति । अप

सम्बल । पुं० न० पाथेये ॥ जले ॥

सम्बाक्ततम् । त्रि० सम्बाकृते । द्वितीयाक्तते ॥ सम्यते । सम्बसम्बन्धे । व्याप्त । खच । सम्बक्रान्तम् । डाजितिकश्चित् ॥

सम्बाध । पुं० सङ्कटे ॥ भगे । योनौ ॥ भये ॥ सम्यक्बाधन्तेऽत्र । बाधृलोडने । हलश्चेतिघञ् ॥ अन्योन्यपीडायाम् ॥ सम्बाधनम् । भावेघञ् वा । सम्बाध्यतेवा । घ अन्तस्यापिविशेषनिम्नत्वम् •सम्बाधमनुवर्त्तन्तइतिभाष्यप्रयोगादिष्यते । सम्बाधं वृन्दपितदभूवतत्र्त्मेतिमाघः ॥

सम्बाधनम् । न० द्वा सदने ॥ शूलाग्रे ॥ द्वारपाले ॥ कृतिर्मेदिनिकर ॥

सम्बुद्ध । त्रि० सम्बुद्ध्यति ॥ अर्थबोधजन्तः । यथा । ज्ञनेनाकाशकल्पेनधर्मान्योगगनोपमान् । ज्ञेयाऽभिन्नेनसम्बुद्धस्तं वन्देद्विपदांवरम् ॥ सञ्जाते । पुं० बुद्धे । समन्तभद्रे । सुगते ॥

सम्बुद्धि । स्त्री० सम्यग्बुद्धौ ॥ सम्बोधनप्रथमायाएकवचने ॥

सम्बोध । पुं० सम्यग्बोधे ॥ सम्बोधने ॥

सम्बोधनम् । न० आमन्त्रणे । अभिमुखीकरणे । अन्यत्रव्यासक्तस्य० कार्यान्तरेनियोजनं यत्राभिमुख्यविधाने ॥ यथा०हेदेवदत्त०हेवटोद्रुतिव्याकरणम् ॥ हेचच० हेलते० हे फल० इत्यादावचेतनेतदुपचार ॥

सम्भक्ति । स्त्री० सम्भजने भज० क्तिन ॥

सम्भली । स्त्री० कुट्टन्याम् ॥ सम्यक् भार्य्यान्यपतिसङ्गं भलते । भलपरिभाषणे । पचाद्यच् । गौरादि ॥

सम्भव । पुं० हेतौ । कारणे ॥ सम्भवत्यस्मात् । अन्तर्भावितण्यर्थत्वात् । अपादाने । ऋदोरप् ॥ उत्पत्तौ ॥ मेलके । आधेयस्याधारानतिरिक्तत्वे । आधार धेयैकरूप्ये । भूय सहच राधीनत्वे ॥ यथ सम्भवतित्यत्र० विद्यासम्भवत०सवस्ततम् । यथा खार्यां द्रोणाढकप्रस्थ द्यागम ॥ विष्णौ ॥ समीचीन भानभक्ष । समीचीनो भवो जन्मास्येति वा । धर्मसंस्थापनार्थाय सम्भवामीतिवचनात् ॥ उत्पन्ने ॥ सम्भवति । भू० । पचाद्यच ॥ सङ्ख्ये ॥ अपाये । अतत्कल्पाद्यदन्तरे ॥

सम्भार । पुं० सम्भृतौ ॥ सङ्ग्रहे । सम्भ्रियते । भृञ् । अकर्त्तरिचेतिघञ् । साधने । उपकरणे ॥ सम्पूर्णत्वे ॥

ज्ञानम सम्यग्ज्ञानम् ॥

सम्यगदर्शनम् । न॰ अप्रयात्मदर्शने । शास्त्रोपपत्तिभ्यामवधारितेऽद्वयात्मदर्शने ॥ क्लेशानस्पदत्वादात्म्यैकत्वबुद्धिरेवसम्यग्दर्शनमित्याहुर्भाष्यकारा ॥

सम्यक् । अ॰ दृढे ॥ प्रशस्तायाम् ॥

सम्यक् । त्रि॰ मनोज्ञे ॥ सङ्गते ॥ सत्यवचने । ऋते ॥ सम्प्रयादिषु न्ये ॥ अर्थेनसहसम्यगञ्चतिसङ्गच्छतयितिसम्यक् । अञ्चु॰ ऋत्विगादिना॰ क्विन् । सम समीतिसम्यादेश ॥

सम्यगव्यय । पुं॰ आयतुरीयाश्वव्यये ॥

सम्राट् । पु॰ राजसूययागकर्त्तरि । राजसूयिनि । चतुरब्धसीमावच्छिन्नायाभूमेरीश्वरे । चक्रवर्त्तिनि । सार्वभौमेनृपवरे ॥ द्वादशराजमण्डलस्येश्वरे ॥ क्रियत्परिमाणायाभूमेराज्ञोनृपान्येभृत्यवदाज्ञयाशास्ति॰ तस्मिन्नृपे । राज्ञआज्ञयाशासके ॥ यथाह येनेष्टराजसूयेन॰ मण्डलस्येश्वरश्च यः शास्तियश्चाज्ञयाराज्ञ स सम्राडित्यमर ॥ सम्यक्॰ राजति ॥ राजृ॰ । क्विप् । मोराजि समः क्वौ ।

सयावसानम् । न॰ तीर्थविशेषे ॥

सयोनि । पु॰ इन्द्रे ॥ त्रि॰ समानयोनौ ॥

सर । पु॰ कटूरे । दध्यग्रे । दध्युत्तरे । दध्नउपरिस्नेहभागे ॥ गतौ ॥ वाणे ॥ लवणे ॥ निर्झरे ॥ नीरे । जले ॥ सरोवरे ॥ त्रि॰ सारके । भेदके ॥ सरति । सृ॰ । अच् । दध्नस्तूपरियोभागो घनः स्नेहसमन्वित । सनेक्षीसरइत्युक्तोद्घनोमण्डस्तुमस्त्विति ॥ सरस्वादुर्गुरुर्बल्योवातघ्नोग्निप्रणाशन सोऽम्लोग्निप्रधमन पित्तश्लेष्मविवर्द्धन ॥

सरकाक । पु॰ हंसे ॥

सरकाकी । स्त्री॰ वरटायाम् । हंस्याम् ।

सरक । पु॰ न॰ शीधुपाने । शीधुपाने ॥ इक्षुशीधुनि ॥ अच्छिन्नाध्वगपङ्क्तौ । अच्छिन्नाध्वगानापङ्क्तिर्यस्मिन । सरक॰ सडक॰ इ॰ भा॰ प्र॰ वर्त्मनि ॥ न॰ गगने । आकाशे ॥ तीर्थविशेषे ॥ सरसि ॥ त्रि॰ गन्तरि । गतिशीले ॥ स्त्रियते । सृङ्गतौ । क्ल आदिभ्य॰ सञ्ज्ञायांवुन् ॥ सरति । सृगतौ । प्रसृत्य ' समभिहारेवुन्॰ वुतिवावुन ॥

सरघा । स्त्री॰ मधुमक्षिकायाम् ॥ रङ्घणम् । रघिगतौ । खनोघचे

तिचित्करणादन्येभ्योऽपीतिघ
ञागमशास्त्रस्यानित्यत्वान्नुम् । सङ्
रघिगत्यावर्त्तते ॥

सरकम् । न० नवनीते ॥

सरजा । स्त्री० मल्लिकायाम् । रज
स्वलायाम् ॥ त्रि० चि० शेष ॥

सरट् । पु० वायौ ॥ वारिदे ॥ सर
घायाम् ॥ सरति । सृ० । सर्त्ते
रटि ॥

सरट । पु० कृकलासे । सरति ।
सृ० । शकादिभ्योऽटन् ॥

सरटि । पु० वायौ ॥ मेघे ॥

सरटु । पु० सरटौ ॥

सरणम् । न० गमने ॥ लोहमले ॥
सरत्यनेन । सृ० । युवक्
शम्येत्यादिना युच् ॥ धावने ॥ भा
वे ल्युट् वा ॥

सरणा । स्त्री० गन्धालिकायाम् ।
प्रसारण्याम् ॥ विस्तृतायाम् ॥ स
रति । सृ० । बाहुलकात् युच्
। टाप् ॥

सरणि । स्त्री० पङ्क्तौ । मार्गे ।
पद्धतौ । पथि ॥ सरत्यनया ।
सृगतौ । अर्त्तिसृधृधमीत्यनि ॥

सरणी । स्त्री० कटसरायाम् ॥ प
थि । पङ्क्तौ ॥ ङीष् ॥ सर
गाद्रौ० इति हिमगिरिप्रसिद्धे निष्पद्य
यानविशेषे ॥

सरण्ड । पुं० धूर्त्ते ॥ सरटे ।
भूषणविशेषे ॥ सरति । सृ० ।
अण्डन्कृसृभृवृञ इत्यण्डन् ॥ का
मुके ॥ खगे ॥

सरण्यु । पु० वारिवाहे ॥ मात
रिश्वनि ॥ सरति । सरति वा ।
सृ० । सृयुवचिभ्योऽन्युजागूजक्नुच
इत्यन्युच् ॥ सरण्युः शीघ्रगामी
तिवेदभाष्यम् ॥ जले ॥

सरत् । पु० तन्तौ ॥ सूत्रे ॥

सरथ । त्रि० रथेनसहवर्त्तमाने ॥

सरद्वान् । पुं० गौतममुनौ ॥

सरपत्रिका । स्त्री० पद्मावर्ते ॥

सरभसम् । त्रि० ससत्वरे ॥

सरमा । स्त्री० कुक्कुर्याम् ॥ देवशुन्या
म् ॥ राक्षसीभेदे । विभीषणपत्न्
याम् ॥ सरति सृ० । बाहुल
कादम : ॥ कश्यपपत्नीविशेषे ।
अमरादौनामात्र ॥ त्रि० श्रो
युते ।

सरयु । पु० पवने । वायौ ॥

सरयु । स्त्री० नदीविशेषे ॥ सरति
। सृ० । सर्त्तेरयु ॥

सरयू । स्त्री० नदीप्रभेदे । सरति
। सृ० । सर्त्तेरयूरित्येके ॥ सरयू
सलिलं दुःखपुष्टिप्रदायकम् ॥

सरल । पु० पीतद्रौ । पूतिकाष्ठे
॥ अस्य गुणाः । सरलो मधुरस्ति
क्तः कटुपाकरसो लघुः । स्निग्धो
ष्णः कर्णकण्ठाक्षिरोगरक्षोहरः :

मृत । कफानिलखेदघ्नकाथा सालच्मीवयापह ॥ इति ॥ देव दारुविशेषे ॥ बुद्धौ ॥ अग्नौ ॥ स रति । स॰ वाहुलकादलच् । यथा दित्वादाकल । वाहुलकाङ्गुष ॥ त्रि॰ उदारे ॥ ऋजौ । अवक्रे ॥ यथा । सरलाविरलायन्ते घनाय लोकलिद्रुमाः ॥ नग्नमीनवपुभ्रा गाचस्मिन् स सारकानने ॥

सरलद्रव । पु॰ हवधूपे । श्रीवेष्टे ॥ सरलस्यदेवदारोः द्रव ॥

सरला । स्त्री॰ सर्वानुभूतौ । त्रिपुटा याम । त्रिवृति । श्वेतत्रिधारेति ख्यातौषधौ ॥ सरति । स॰ । वा हुलकात् कलन् । टाप् ॥

सरलाङ्ग । पुं॰ श्रीवेष्टे ॥

सरलाधिका । स्त्री॰ सोनेय्याम् ॥

सर । न॰ नीरे ॥ तडागे । स ञ्जा नञ्जोभयजलाश्रये ॥ अस्रजलगुणा । सारस लघुत्वाद्यबल्य स्वादुक षायवदिति ॥ देवखातजलाश्रये ॥ सियते । स्गतौ । कर्मण्यसुन् ॥

सरसम् । न॰ सरसि ॥ रसवतिमासे ॥ त्रि॰ रसस युक्ते ॥

सरसम्प्रतम् । न॰ क्षुद्याम् । चि कटे ॥

सरसा । स्त्री॰ द्राक्षायाम् ॥ रसविशि ष्टायाम् ॥

सरसिजम् । न॰ पद्मे ॥ सरसिजात म् । अनजननि॰ जनीप्रादुर्भावेवा । सप्तम्यांजनेर्ड । तत्पुरुषइति॰ ङेरलुक् ॥

सरसी । स्त्री॰ कासारे । सरसि ॥ सियते । स॰ । कर्मण्यसुन् । गौरादित्वान्ङीष् ॥ प्रकृतिच्छ न्द. २१ प्रभेदे ॥ तल्लक्षणोदाह रणे यथा । नजभजजाजरौयदित दामदितासरसीकवीश्वरैः ॥ चि कुरकलापश्चवलकृतप्रमदासुजसद्र सोर्मिषु॰ स्फुटवदनाम्बुजासुविल सद्भुजवालमृणालवल्लिषु । कुचयुग चक्रवाकमिथुनानुगतासुकलाकु तूहली॰ व्यरचयदच्युतोव्रजमृगीन यनासरसीषुविभ्रम ॥

सरसीक । पु॰ सारसपक्षिणि ॥

सरसीरुहम् । न॰ पद्मे । नलिने । सारसे ॥ सरस्यारोहति । रुह॰ । इगुपधेतिक । तत्पुरुषेकृतीत्य लुक ॥

सरस्वान् । पुं॰ सागरे । अर्णवे ॥ नदे । सरोनीर॰ गतिर्वाऽस्त्यस्मि न् । भूम्निमतुप् । तसौमत्वर्थइ तिभत्वान्नपदकार्यम् ॥ त्रि॰ रसि के ॥

सरस्वती । स्त्री॰ वाण्याम् । वाचि ॥ वाग्देव्याम् । पर्यायास्तु । ब्राह्मी तुभारतीभाषागीर्वाग्वाणीसरस्वती ति ॥ अस्याध्यान यथा । वाणीम्

सरितांवरा । स्त्री॰ गङ्गायाम् ॥ यथा । त्वं देवसरितांनाथ त्वं देवि सरितांवरे । उभयोः सङ्गमेजातां स्नामिदुरितानिवैः ॥ इतिगङ्गासागरसङ्गमस्नानमन्त्रः ॥

सरित्पति । पुं॰ समुद्रे । पारावारे । सरितांपति ॥

सरिद्वरा । स्त्री॰ गङ्गायाम् । विष्णुपद्याम् ॥ सरित्सुवरा ॥

सरिन्नाथ । पुं॰ समुद्रे ॥

सरिमा । पुं॰ अनले । वायौ ॥ सरति । सृ॰ । हृभृधृसृस्तृभ्य इमनिच ॥

सरिलम् । न॰ सलिले । जले ॥ रलयोरेकत्वम् ॥

सरिषप । पुं॰ सर्षपे । कटुस्नेहे ।

सरी । स्त्री॰ निर्झरे ॥

सरीसृप । पुं॰ सर्पे । पृदाकौ । आशीविषे ॥ कुटिलं सर्पति । सृप्लृ॰ । नित्यंकौटिल्येगताविति यङ् । पचाद्यच् यङोचिचेतिय ङोलुक् ॥ वृश्चिकराशौ ।

सरीसृपन् । त्रि॰ अतिशयेनचलति ।

सरूप । त्रि॰ सदृशे ॥ समानं रूपमस्य । ज्योतिर्जनपदेतिसमानस्यस ॥

सरोजम् । न॰ अब्जे । पद्मे ॥ सरसिजातम् । जनी॰ सप्तम्यांजनेर्डः । तत्पुरुषेकृत्यबहुलीमितिर्डलुक् ॥

सरोजखण्ड । पुं॰ पद्मवने ॥ सरोजानांसमूहः । कमलादिभ्यखण्डः ॥

सरोजन्म । न॰ पद्मे ॥

सरोजी । पुं॰ ब्रह्मणि । सुरज्येष्ठे ॥ लोकनाथे । बुद्धभेदे ॥

सरोजिनी । स्त्री॰ कमलाकरे । पद्मखण्डे ॥ पद्मे ॥ कासारे ॥ सरोजानिसन्त्यस्याम् । पुष्करादिभ्यादिनि ॥

सरोत्सव । पुं॰ सारसखगे ॥

सरोध । त्रि॰ रुद्धे ॥ रोधेनसहवर्त्तमानः ॥

सरोरुट् । ) पुं॰ अम्बुजे ॥
सरोरुहम् । ) न॰

सरोरुहासन । पुं॰ ब्रह्मणि । कमलासने ॥

सरोवर । पुं॰ पद्माकरे । तडागे ॥

सर्ग । पुं॰ स्वभावे ॥ निर्मोचे ॥ निर्मोचस्त्यागोमोक्षाभावोवा । मोक्षाभावेयथा । इहैवतैर्जितःसर्गोयेषांसाम्येस्थितंमनः ॥ निश्चये ॥ यथा । एतावानस्ययदिसर्गएषतो॰ इति ॥ अध्याये ॥ मोहे ॥ उत्साहे ॥ अनुमतौ ॥ सृज्यते । सृज विसर्गे । कर्मणिघञ् ॥ सृष्टौ ॥ यथा । सर्गश्चप्रतिसर्गश्चेति ॥ कौमारचार्षं प्राजापत्योमानवइत्यादिभेदैः पुराणेषुविस्तरेणोक्तः ॥ द्वैतप्रपञ्चे । स्थूलदेहोत्पत्तौ । अथे

तनसृष्टौ ॥ सर्ग्यन्ते येषुसृष्टव्या : प्राणिनोऽनेतिव्युत्पत्त्या॰ पृथिव्यादिलोका सर्गपद्वाच्याश्च । अव्याकृतगुणक्षोभान्महतस्त्रिवृतोऽहम् । भूतसूक्ष्मेन्द्रियार्थानासम्भव सर्ग उच्यते ॥ इतिश्रीविष्णु भागवतम् ॥

सर्गक्रम । पु॰ प्रकृतेर्महदाद्युत्पत्तिक्रमे ॥ यथा । प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणस्तुषोडशक । तस्मादपिषोडशकात्पञ्चभ्य पञ्चभूतानीति ॥ सर्गस्योत्पत्ते क्रम ॥

सर्गबन्ध । पु॰ महाकाव्ये ॥ सर्गाणांबन्धोयत्र ॥

सर्ज्ज । पु॰ सालवृक्षे । सर्जुभ्रा॰ इतिख्याते ॥ सृजति । सृजेरिगुपधेतिक॰ ॥

सर्ज्जक । पु॰ पीतसाले । आसने । बन्धूकपुष्पे । विजयसार॰ इ॰ भा॰ प्र॰ ख्याते ॥ सृजति । सृजविसर्गे । ण्वुल् । यद्वा । सर्ज्जति । अर्जअर्जने क्वुन् ॥ त्रि॰ सृष्टिकर्त्तरि ॥

सर्ज्जगन्धा । स्त्री॰ रास्नायाम् ॥

सर्ज्जतैलम् । न॰ सर्ज्जनिर्य्यासे । रालतैल इ॰ भा॰ ॥ तैलसर्ज्जरसोद्भूतंविस्फोटव्रणनाशनम् । कुष्ठपामाक्रिमिहरवातश्लेष्मामयापहम् ॥

सर्ज्जनम् । न॰ विसर्ज्जने ॥ सृष्टौ ॥

सर्ज्जनिर्यास । } पु॰ राले । धूनके
सर्ज्जमणि । }

सर्ज्जरस । पु॰ धूनके । यक्षधूपे । सर्ज्जस्यसालस्यरस ॥ बाहुल्याद्विशेषे ॥

सर्ज्जि । } स्त्री॰ } सर्ज्जिकाक्षारे ।
सर्ज्जिका । } } सज्जी॰ इ॰ भा॰ प्र॰ सर्ज्जिकास्यगुणास्तस्याद्विशेषा ह्ल्पगुणवत्॰ । तस्मात॰ यवक्षारात ॥

सर्ज्जिकाक्षार । पु॰ कापोते । सुवर्च्चले । सौवर्चले । रुचके । सज्जी॰ साजी॰ इ॰ भा॰ प्र॰ सर्ज्जिकारजस क्षार । शाकपार्थिवादि । सर्ज्जिकादग्ध्वाक्रियमाण क्षारइत्यर्थ ॥

सर्ज्जिक्षार । पु॰ } सर्ज्जिकाक्षारे ॥
सर्ज्जी । स्त्री॰ }

सर्ज्जू । स्त्री॰ वणिजि । विद्युति । सर्ज्जति । अर्जअर्जने । कृषिचमितनिधनिसर्ज्जिखर्ज्जिभ्यऊ ॥ अभिसारे ॥ हारे ॥

सर्ज्य : । पु॰ सर्ज्जरसे ॥

सर्प्प । पु॰ अहौ । नागेऽर्ध्येपकृष्टे । अश्लेषायां यथा । सर्प्प , पृदाकुभुजगोभुजङ्गोहिर्भुजङ्गम । आशीविषोविषधरश्चक्रीव्याल , सरीसृप ॥ कुण्डलीगूढपाच्चक्षु श्रवा काकोदर फणी । दर्वीकरोदी

थपृष्ठोद्दन्दशूकोविलेशय ॥ उरग पन्नगोभोगीजिह्मग पवनाशनइति ॥ सर्पति । सृपस्ृगतौ । पचाद्यच् ॥ नागकेशरे ॥ समशुरारिघिमल्लेच्छ जातिविशेषे ॥ पद्ममाषस्य द्वितीय भेदे ।८०॥ षष्ठमाषस्य षष्ठप्रभेदे० ॥८८०॥ सर्पणे । गमने ॥

सर्पकङ्कालिका । स्त्री० वृक्षभेदे ॥ सर्पकङ्कालिका० तीक्ष्णा० विषदंष्ट्रा० विषापहेतिपर्याया ॥

सर्पकङ्काली । स्त्री० सहायाम । सर्पकङ्कालिकायाम ।

सर्पगन्धा । स्त्री० अहिभुजि । रक्तपत्रिकायाम ॥ वृक्षविशेषे । कलाकी० सर्पगन्धाचरसनाथपलङ्कषेति पर्याया ॥

सर्पघ्न । पु० सर्पघ्नहनुजौ ॥

सर्पघातिनी । स्त्री० सर्पकङ्कालो भेदे । सर्पसहायाम् । सर्पाङ्गया ॥

सर्पन् । त्रि० गच्छति ॥

सर्पत्यज । पु० नकुले ॥ डू० हे० न्द्र ॥

सर्पदंष्ट्र । पु० दन्तोवच्चे ॥

सर्पदंष्ट्रा । स्त्री० वृश्चिकाल्याम् ॥

सर्पदंष्ट्रिका । स्त्री० अजशृङ्ग्याम् ॥

सर्पदण्डा । स्त्री० सैंहल्याम ॥

सर्पदण्डी । स्त्री० गोरक्ष्यां ॥

सर्पदन्ती । स्त्री० नागदन्त्यां ॥

सर्पदमनी । स्त्री० वन्ध्याकर्कोटक्याम् ॥

सर्पनाशा । स्त्री० सर्पघातिन्याम् ॥

सर्पनिर्मोचन । पु० धूपविशेषे ॥ यथा। कार्पासास्थिभुजङ्गस्खलयानिर्मोचनं भवेत् । सर्पनिर्मोचनोधूप प्रशस्त सततगृहे ॥

सर्पपुष्पी । स्त्री० नागदन्त्याम ॥

सर्पफणज । पु० सर्पफणजात मणौ ॥

सर्पभुज् । पु० मयूरे ॥ सर्पान् भुङ्क्ते । भुज० । क्विप् ॥ द्विमुखाहौ ॥ त्रि० सर्पभक्षके ॥

सर्पराज । पु० अहिराजे । वासुकौ ॥ सर्पाणाराजा । राजाह सखिभ्यष्टच ॥

सर्पलता । स्त्री० नागवल्ल्याम् ॥

सर्पविद्या । स्त्री० गारुडे ॥ सर्पाणाविद्या ॥

सर्पसत्रम् । न० जनमेजयारब्धे सर्पनाशकेयज्ञविशेषे ॥

सर्पसत्री । पु० जनमेजये ॥

सर्पसहा । स्त्री० सर्पघातिन्याम ॥

सर्पसुगन्धा । स्त्री० रास्नायाम् ॥

सर्पहा । पु० नकुले ॥ डू० हे० न्द्र ॥

सर्पाक्षम । न० रुद्राक्षे ॥

सर्पाक्षी । स्त्री० कन्दविशेषे । गन्ध

सर्वकर्त्ता । पुं॰ स्रष्टरि । ब्रह्मणि ॥
सर्वकर्म्मसंन्यास । पु॰ देहादिव्या पाराणामविद्ययात्मन्यध्यारोपितानांविद्ययाबाधे ॥ सर्वकर्म्मणा सम्यङ्न्यासः ॥
सर्व्वकर्म्मीण । त्रि॰ पुरुषे ॥ सर्वकर्माणिव्याप्नोति । ततसर्वादेरिति ख ॥
सर्वकेशी । पु॰ नटे ॥ सर्वकेशोऽस्यास्ति । सर्वादित्वेति॰ इनि ॥
सर्वचार । पु॰ बहुचारे । महाचारे । सावनड्॰ भा॰ प्र॰ । मलबस्त्रविशेषधर्मे ॥
सर्व्वग । पु॰ शङ्करे ॥ ब्रह्मणि । विभौ । आत्मनि ॥ सर्वं गच्छति । गमृख॰ । अन्तात्यन्तेति ड ॥ न॰ सलिले ॥ त्रि॰ सर्वगामिनि ॥
सर्व्वगत । त्रि॰ विभौ ॥ सर्वानुस्यूतसम्भावे ॥ यच्चकिञ्चिज्जगत्यस्मिन्दृश्यतेश्रूयतेपिवा । अन्तर्बहिश्चतत्सर्वंव्याप्यनारायणः स्थितः ॥ सर्वगतत्वं सर्वव्यवधानमात्रमितिव्याख्यातारः । व्यापित्वमितियावत् ॥
सर्वगन्धम् । न॰ कुङ्कुमादिगन्धद्रव्यवृन्दे ॥ यथा । कुङ्कुमागुरुकर्पूरकस्तूरीचन्दनेषु ॥ चतुर्जातकादौ । यथा ॥ चतुर्जातककर्पूरकक्कोलागुरुकुङ्कुमम् । लवङ्गसहितञ्चैवसर्व-

गन्धविनिर्दिशेदिति ॥
सार्व्वगा । स्त्री॰ प्रियङ्गौ ।
सर्व्वग्रन्थ । पु॰ } पिप्पलीमूले ॥
सर्व्वग्रन्थिकम् । न॰ }
सर्व्वङ्कष । त्रि॰ खले ॥ सर्वङ्कषति । कषहिंसायाम् । सर्वकूलाभ्रेतिखच् अरुर्द्विषदितिमुम् ।
सर्वजनीन । } त्रि॰ सार्वजनिके
सर्व्वजनीय । }
॥ सर्वस्मासौजनश्च । पूर्वकालैकेतितत्पुरुष । सर्वजनायहित । सर्वजनाट्ठञ्खञ्च । षष्ठीतत्पुरुषाच्छ॰ छ ॥
सर्व्वजित् । पु॰ वत्सरविशेषे ॥ तत्फलं यथा । उद्यतीशर्वर्षमेघो जलं नैवोपजायते । महार्घं सर्वजिद्वर्षे सर्वमेवबरानने ॥ त्रि॰ सर्वजयकर्त्तरि ॥
सर्व्वजीव । पु॰ ईश्वरे । सर्वान्जीवयति । जीव॰ । अच् ॥
सर्व्वज्ञ । पु॰ शिवे । ईश्वरे ॥ सर्वंजानाति । सर्वविषयावच्छिन्नं तन्यलक्षणज्ञानवानिति । ज्ञा॰ । आतोनुपसर्गेकः ॥ यद्वा । सर्वज्ञायत्यस्मात्मन सर्वस्यापरोक्षत्वात् ॥ यद्वा । सर्वेज्ञायस्मात॰ सर्वज्ञायेनवा ॥ सर्वस्मासौज्ञश्चेतिवा ॥ आनन्दमये ॥ यथा । अशेषप्राणिषु जीवानांवासनास्तवस्थिता । ता

भि क्रोडीकृत सर्वं तेनसर्वबुद्ध इति ॥ तत्र । सौगतमते ऽज्ञानेकार रप्रभूतेकार्यभूतानांसर्वप्राणिबुद्धी नां। सनानिवसन्ति । ताभिर्वासना भि सर्वं जगत । क्रोडीकृतम् । विषयीकृतम । तेनसर्वबुद्धिवास नाग्रहणानोपाधिकत्वेनसर्वज्ञत्वमु च्यतेइत्यर्थ ॥ परमार्थपण्डित ॥ जिनेन्द्रे ॥ बुद्धे । सुगते । त्रि । सकलज्ञातरि ।

सर्वज्ञत्वम् । न । सर्वज्ञतायाम् ॥ परमार्थतोसकलापिचैतन्यस्याध्या सिकसत्वशाखामहारासर्वविभासक तायाम् ।

सर्वज्ञा । स्त्री । दुर्गायाम् । सर्वं ज्ञासर्वेशत्वात्ज्ञानित्वात्ज्ञानि त्युच्यते ॥ इतिदेवीपुराणम् ॥

सर्वज्ञानमिमठ । त्रि । सर्वत्र कर्माणि । ब्रह्माणि । सगुणेनिर्गुणे च । यत ज्ञान त्रिविधम् । प्रमाणत प्रमेयतश्च । प्रयोजनतश्चतत्रमठे । सर्वप्रकारेणायोग्ये ॥

सर्वत पाणिपादम् । न । ब्रह्मणि ॥

सर्वत शुभा । स्त्री । प्रियङ्गुवृक्षे ।

सर्वत श्रुतिमत् । न । ब्रह्मणि ॥

सर्वतन्त्रम् । न । सकल शास्त्रे ॥

सर्वतन्त्रसिद्धान्त । पु । गौतमो क्तसिद्धान्तविशेष ॥ तथाहि । सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृत स र्वतन्त्रसिद्धान्त ॥ अस्यार्थ । सर्वतन्त्राविरुद्ध । सर्वशास्त्राभ्यु पगतइतियावत । वस्तुतोययाश्रु तपदार्थ । अन्यथा । तन्त्रेऽधि कृतइत्यस्यवैयर्थ्यापत्ते । अतएव घ्राणाद्यादेरसद्भूतत्वमपिसर्वतन्त्र सिद्धान्त । मयतन्त्रे । घ्राणतइति स्पष्टार्थं तदर्थं तुनदेयमेवेतिवाच्य म् । मनसइन्द्रियत्वस्यापिसर्वतन्त्र सिद्धान्ततापत्ते । मन्यास्तुसूत्र स्योपलक्षणमात्रत्वात् । वादिप्रति वाद्युभयाभ्युपगत कथानुकूला र्थं सद्भूतिवदन्तीति । २८ ॥

सर्वत । अ । समन्तादर्थे ॥ सर्व स्मात् । पञ्चम्यास्तसिल् ॥

सर्वतापन । पु । कामदेवे ॥ त्रि । सर्वतापके ।

सर्वतिक्ता । स्त्री । काकमाच्याम् ॥

सर्वतीर्थवरहृद । पु । तीर्थवि शेष ॥

सर्वतोभद्र । पु । चित्रकाव्यविशेष ॥ तदुदाहरणम् यथा ।

| स | का | र | ना | ना | र | का | स |
|---|---|---|---|---|---|---|---|
| का | य | सा | द | द | सा | य | का |
| र | सा | ह | वा | वा | ह | सा | र |
| ना | द | वा | द | द | वा | द | ना |

॥ अस्यार्थ

पुन क्रोडयोसिना । सकारा स

रते ॥

सर्व्वपथीण । पु॰ सारथी । सर्वपथान्व्याप्नोति । तत्सर्वादि पथ्यङ्गकर्मपात्रपात्रव्याप्नोतीतिख ॥

सर्व्वपथीन । पु॰ रथे ॥ सर्वपथान्व्याप्नोति । तत्सर्वादेरितिख ।

सर्व्वपात्रीण । पु॰ ओदने ॥ सर्वपात्रं व्याप्नोति । तत्सर्वादेरितिख ॥

सर्व्वपूर्णत्वम् । न॰ सकारे ।

सर्व्वभक्ष । वि॰ सर्व्वभक्षणकर्त्तरि ॥

सर्व्वभक्षा ।) स्त्री॰ गलस्तन्याम् । सर्व्वभक्ष्या ।) छाग्याम् । अजायाम् ॥ इ॰ हे॰ न्द्र : ॥

सर्व्वभूतगुहाशय । पु॰ चिदात्मनि॰ परमेश्वरे ॥ सर्वभूतानांस्थावरजङ्गमानां॰गुहासुबुद्धिषुशेते । अधिकरणेशेतेरित्यच् ॥

सर्व्वभूतप्रणेता । पु॰ लोकात्मनिपरमेश्वरे ॥ यथाह । यांमूर्द्धानंयस्यविप्रावदन्ति॰ खंवैनाभिंचन्द्रसूर्य्यौचनेत्रे । दिशः श्रोत्रेविद्धिपादौक्षितिञ्चसोऽचिन्त्यात्मासर्वभूतप्रणेता । इति ॥

सर्वभूतात्मक । वि॰ प्रत्यगभिन्नेपरमात्मनि ॥

सर्व्वभूतात्मभूतात्मा । पुं॰ आत्मज्ञानिनि ॥ यथा । अजाजडात्मकसर्वमात्मनात्रप्रपश्यति । सएवसर्वभूतात्मभूतात्माप्रोच्यतेबुधैरिति

सर्वभूतत्वात्मभूतस्व॰ आत्मास्वरूपमस्य ॥

सर्वभूताशयस्थित । वि॰ आत्मनि॰ चैतन्यानन्दघनेचिन्मात्रे ॥ सर्वभूतानामाशयेहृद्देशेन्तरयामिरूपेण॰ प्रत्यगात्मरूपेणचस्थितोयः । सएवस ॥

सर्वभृत् । वि॰ नामरूपात्मकस्यजगतो धारके॰ पोषकेच॰ चिदात्मनि॰ ॥ मायया॰ सदात्मना॰ सर्वङ्कल्पित॰ धारयति॰ पोषयतिच॰ निरधिष्ठानभ्रमायोगात् । डुभृञ्धारणपोषणयो । क्विप । तुक् ॥

सर्वमङ्गला । स्त्री॰ दुर्गायाम् ॥ सर्वेभ्य सर्वेषांवामङ्गला ॥ सर्वाणिमङ्गलानियस्याइतिवा ॥ सर्वाणिहृदयस्थानिमङ्गलानिशुभानिच । ददातिचेप्सितांल्लोकेतेनसासर्वमङ्गलेतिदेवीपुराणम् ॥ अपिच । मङ्गलंमोक्षवचनमाशब्दोदातृवाचकः । सर्वान्मोक्षान्याददातिसासर्वमङ्गला ॥ हर्षेसम्पदिकल्याणेमङ्गलपरिकीर्त्तितम् । तान्ददातिचयादेवीसाएवसर्वमङ्गला ॥ इ॰ ब्र॰ वै॰ पु॰ ॥ अन्यच्च । सर्वमङ्गलशब्दश्चसम्पूर्णैश्वर्यवाचक । आकारोदातृवचनस्तस्मात्सासर्वमङ्गला ॥ ॥ इ॰ ब्र॰ वै॰ पु॰ श्रीकृष्णजन्मखण्डे २७ ऽध्याय : ॥

सर्व्ववेशी । पु॰ नर्त्तके । नटे । सर्व्वेषां वेशः सोऽस्यस्य । इनि॰ । सकलवेशधारिणि । बहुरूपी॰ इ॰ भा॰ ॥

सर्व्वव्यापी । त्रि॰ आकाशवत्सकलपदार्थव्यापनशीले ॥ यथा । सर्व्वव्यापिनमात्मानं ज्ञात्वा धीरो न शोचतीति ॥

सर्व्वश । अ॰ सर्व्वप्रकारेणेत्यर्थे ॥

सर्व्वशाखामलम । न॰ नक्षत्रविशेषेषु ॥ यथा । भरणीकृत्तिकापित्र्यविशाखाश्लमभाग्निष । सर्व्वशाखामलं प्रोक्तं व्रतं तत्र विवर्ज्जयेत् ॥

सर्व्वशास्त्रवित् । त्रि॰ महानिर्व्वाणागमज्ञे ॥

सर्व्वशान्तिकृत् । पुं॰ दौष्यन्तौ । शाकुन्तलेये ॥ त्रि॰ सर्व्वशान्तिविधायिनि ॥

सर्व्वसर्गसरणम् । न॰ औषरके ॥

सर्व्वसङ्गत । पुं॰ षष्टिकाधाम् ॥ त्रि॰ सर्व्वप्रिये । सकलसङ्गतियुक्ते ॥

सर्व्वसत्त्वसमुद्भवा । स्त्री॰ प्रावृषि ॥ सर्व्वेषां प्राणिनां समुद्भव उत्पत्तिर्जीवनं तस्य यस्याम् ॥

सर्व्वसन्नहनार्थक । पुं॰ सर्व्वसैन्यसन्नहने । सर्व्वाभिसारे ॥ सर्व्वेषां सन्नहनम्॰ सर्व्वसन्नहनम् । सर्व्वसन्नहनमर्थोयस्य स॰ ॥

सर्व्वसन्नाह । पु॰ सर्व्वात्मनि ॥

सर्व्वसह । पु॰ गुग्गुलौ ॥ त्रि॰ सकलसहिष्णौ ॥

सर्व्वसाक्षी । पु॰ परमात्मनि ॥ सर्व्वेषां शुभाशुभकर्म्मणां॰ साक्षी॰ साक्षाद्द्रष्टा ॥ त्रि॰ सर्व्वविषयद्रष्टरि ॥

सर्व्वसिद्धि । पुं॰ श्रीफले बिल्वे ॥ त्रि॰ सिद्धियुक्ते ॥

सर्व्वसुखप्रद । पु॰ परमात्मनि ॥ भगवति ॥

सर्व्वस्वम् । न॰ समस्तधने ॥

सर्व्वस्वी । पु॰ गोपकन्यायां नापिताज्जाते सङ्करजातौ ॥ त्रि॰ सर्व्वस्वविशिष्टे ॥

सर्व्वहर । त्रि॰ सर्व्वसंहारकारिणि ॥

सर्व्वहितम् । न॰ मरिचे ॥ त्रि॰ सर्व्वेषांहितकारिणि ॥

सर्व्वाकार । त्रि॰ समस्तदेशाद्याकारविशिष्टे॰ भगवति ॥ यथाहुराचार्य्याः । सर्व्वाकारो भगवाननुपाधिसैयेनयेनभावेन । तत्तद्भावमभ॰ त्त्वा चिन्तामणिवत्समर्थ्येतीति ॥ सर्व्वोपादानकारणत्वात् सर्व्वाकारत्वम् ॥

सर्व्वाङ्गम् । न॰ सकलावयवे ॥

सर्व्वाङ्गसुन्दर । पु॰ औषधविशेषे ॥ यथा । रसगन्धकतुल्यांशोभा

सलिकलौति॰ कूलच् । रलयोरैकत्वम् ॥

सलिलम् । न॰ जले ॥ उणादौ नाम्न्यार्यां द्वितीयायां तुष्टौ ॥ सलति॰ गच्छति निम्नदेशम् । सलगतौ । सलिलस्य निमहिभडिभखण्डशखण्ड पिण्डतुण्डकुक्षिभ्य इलच् ॥ सलिलस्य एकदेशादर्गार्गलेद्रष्टव्या । कश्चिद्विशेषोवापिकालिदासोक्तो यथा । अद्याजुर्नोदुम्बरसिन्धुवारापर्णप्रवालातिविशालशाखा । वल्मीकपार्श्वे खुरगाश्रयस्तत्रावम्बुनिर्देश्यमलं समाशु ॥ योषातिशीतलवसत् तृणपुष्पदर्शी साखादु सान्द्रसलिला किलशीघ्रवाही । इत्य विलोक्य सुधामिह कूपवापी कासारकुण्डखननं विदधीत शश्वत् ॥ नीचगतजलदेशमाह । सिन्धुप्रतानमरुकार्पवगीडगशैनिम्नधरान्तरगमम्बुनिसर्गभावात् । धाराङ्गकुण्ठतरुषक्षुविनिस्तृणोर्व्यां तद्वन्नविक्लतिमहुणमाहुरार्याः ॥ शुभजलस्थानमाह । यामादुदीरितहरित्सु शनैश्चभागेर्व्वभमण्डलविभागवतिप्रशस्तम् । वाच्यवनतदिग्गभर्वीन्दुभागे निम्नाद्वभूमितटिनीमगर्दक्शिराभिरिति ॥

सलिलकुन्तल । पुं॰ शैवाले । सलिलकुन्तलइव ॥

सलिलकोष्ठ । पु॰ जलगृहे । अलमंदिरद्व॰ भा॰ प्र॰ ॥

सलिलज । त्रि॰ जलोत्पन्ने ॥ न॰ पद्मे ॥

सलिलनिधि । पु॰ समुद्रे ॥ यथा । पीत्वागस्त्यस्त्वपस्ते दिशिदिशि जलदास्त्व शरण्यो गिरीणां सुतामाता सभाजामरविटपिनाजन्मभूमिस्त्वमेवागाम्भीर्यं किमुताहकत्वयि सलिलनिधेकिन्तुविज्ञापयाम सर्वोपायेन सेवा वरुणमुनिकृपाहष्टथ काङ्क्षणीया । जलानां निधि ॥

सलिलेन्धन । पु॰ वाडवाग्नौ ॥ सलिलमिन्धनं यस्य ।

सलील । त्रि॰ लीलयासहवर्त्तमाने ॥

सलोकता । स्त्री॰ समानलोकतायाम् ॥

सल्लकी । स्त्री॰ गजभक्ष्यायाम् । शल्लक्याम् । सत्क्रत्यलक्यतेऽसावग्नतेगजैः । लक॰ । कुन् । गौरादि ॥

सल्लक्ष्यम् । न॰ प्रत्यगभिन्ने ब्रह्मणि ॥ सत्तल्लक्ष्यञ्चेतितथा ॥

सव । पु॰ यज्ञे ॥ सोमोयत्राभिषूयतेरसार्थं खण्ड्यतेयज्ञाध्वरेसस ॥ सम्मतो ॥ सूयतेसोमोऽत्र । षुञ्॰ । ऋदोरप् ॥ यद्वा । सूयतेऽनेनवा । षूप्रेरणे । अप्॰ घो वा । न॰ जले ॥

सवनम् । न॰ यज्ञस्नाने । सूत्याम्

सः ॥ अभिषवे ॥ अध्वरे ॥ सोमनिर्म्मणे ॥ षुञ् अभिषवे । ल्युट ॥ प्रसवे ॥ पु॰ काले । समये ॥ चन्द्रमास ॥ सवति॰ सुनोति॰ सुवति वा । सुयुरुहबोयुच् ॥

सवया । पुं॰ वयस्ये । स्निग्धे ॥ समानवयोऽस्य । ज्योतिर्जनपदेति समानस्यस ॥

सवर । पु॰ सलिले ॥ शिवे ॥

सवर्ण । त्रि॰ सदृशे । तुल्यवर्णे । समानजातौ ॥ यथा । पाणिग्रहणसंस्कारः सवर्णासु विधीयते॰ इति ॥ समानोवर्णोऽस्य । ज्योतिर्जनपदेति स ॥ तुल्यास्यप्रयत्नं वर्णे ॥

सवर्णा । स्त्री॰ मनिमातरि । छायायाम् ॥

सवर्णाख्यम् । न॰ तीर्थविशेषे ॥

सवहा । स्त्री॰ त्रिवृति ।

सवासक । पुं॰ वर्णवृत्तान्तरे ॥ द्विजगणमादरभगणसुपादर । भणति सवासकमितिगुणनायक ॥ यथा । गिरिवरनन्दिनिदुरितनिकृन्तनि । विहितनतीमयिकुरुकरुणामपि ॥

सविकल्पक । पुं॰ सम्प्रज्ञातसमाधौ ॥ तथाहि । सविकल्पकोनाम ज्ञातृज्ञानादिविकल्पभेदलयानपेक्षयाऽद्वितीयवस्तुनितदाकाराकारितायाश्चित्तवृत्तेरवस्थानम् । तदोदाहरणम् तदामृन्मयगजादिभानेपिमृद्भानवत्॰ द्वैतभानेप्यद्वैतवस्तुभासते॰ इति । तदुक्तम् । दृशिस्वरूपगगनोपमंपरमक्षद्विभात्वजमेकमक्षरम् । अलेपकंसर्वगतयदद्वयंतदेवचाहंसततविमुक्तइति ॥ त्रि॰ सविकल्पमस्तिवैति ॥

सविकार । त्रि॰ विकारमस्तिवैतिस्वाभवात्तादिभुक्तं ॥ विकारैःसहित ॥ कार्य्यमात्रोपादानतया सर्वकार्यतादात्म्यापन्ने ब्रह्मणि ॥

सविकाश । त्रि॰ सप्रकाशे ॥

सविकास : । त्रि॰ विकसितेनसहवर्त्तमाने ॥

सविग्रह । त्रि॰ मूर्त्तिमति ॥

सविता । पुं॰ सूर्य्ये । सर्वभावानांप्रसवितरि ॥ यथाहयाज्ञवल्क्यः । सवितासर्वभूतानांसर्वभावान्प्रसूयते । सवनात्पावनाच्चैवसवितातेनचोच्यतइति ॥ वह्निपुराणेऽपि यथा । धीमद्वंशाद्योविज्ञानप्रदिशुग्युयतिसर्वदा । सर्वार्थभगवान्विष्णुः सवितासतुकीर्त्तितः ॥ सर्वलोकप्रसवनात्सवितासतुकीर्त्तितः । यतस्तद्देवतादेवसावित्रीत्युच्यतेततइति ॥ विष्णुधर्म्मोत्तरेपि । रसानांचतथादानाद्रविरित्यभिधीयते । प्रजानांचप्रसवनात्सवितेत्य-

भिधीयतइति ॥ सवति ॥ सुव ति० कर्माणिलोकान्प्रेरयति । सूप्रेरणे । तृच् । अस्मर्थे ॥

सवितृदैवत । पु० हस्तनक्षत्रे ॥ सवितादैवतयस्य ॥

सवित्रम् । न० प्रसवसाधने ॥ सूयतेनेन । षू० । अर्तिलूधूसूखनेतीत्र: ॥

सवित्रिय । सूर्यसम्बन्धीये ॥

सवित्री । स्त्री० जनन्याम् । तृजन्तात० ङीप् ॥

सविध । त्रि० अन्तिके । निकटे ॥ समानाविधाऽस्य० सहविधयेतिवा ॥ सप्रकारे ॥

सविस्मय । त्रि० आश्चर्ययुक्ते । वीचापन्ने ॥ विस्मयेनसहवर्त्ततइति तथा ॥

सवेश । त्रि० निकटे ॥ वेशान्वितौ समानोवेशोऽस्य०सहदेशेनेतिवा ॥

सव्य । पुं० विष्णौ ॥ त्रि०वामे । प्रतीपे प्रतिकूले । दक्षिणे ॥ सूयते । षू० । अचोयत् ॥ यद्वा । सुनोति । बाहुलकाद्य ॥

सव्यभिचार । पु० हेत्वाभासान्तरे ॥ यथा । अनैकान्तिक: सव्यभिचार: । सत्रिविध: । साधारणाऽसाधारणानुपसंहारिभेदात् ॥

सव्यलीक: । त्रि० सापराधे ॥

सव्यसाची । पुं० अर्जुने । पार्थे ॥ सव्येनवामेनहस्तेनापि०शरान्० सचितुसन्धातुशीलंयस्य । णिनि ॥

सव्येष्ठ । पु० सारथौ ॥ सव्येतिष्ठति । सुपिस्थइतिक । स्थास्थिन्स्थूणामितिष । हलदन्तादित्यलुक् ॥

सव्येष्ठा । पुं० सूते ॥ सारथौ ॥ सव्येवामेतिष्ठति । ष्ठा० । सव्येस्थश्छन्दसीति० क्ट ० डिच । अम्बाम्बेत्यत्र०स्थास्थिन्स्थूणामुपसङ्ख्यानात्षत्वम्० सुषामादित्वाद्वा । हलदन्तादलुक् । सव्येष्ठरौ० सव्येष्ठरइत्यादिरूपाणि ॥

सशल्य । त्रि० शल्ययुक्तेभल्लादौ ॥

सशल्या । स्त्री० नागदन्त्याम् ॥

सश्मश्रु: । स्त्री० श्मश्रुयुक्तस्त्रियाम् । नरमानिन्याम् ॥

ससत्त्व । त्रि० प्राणियुक्ते ॥

ससत्त्वा । स्त्री० गर्भिण्याम् ॥

ससन्देह । पुं० अर्थालङ्कारप्रभेदे ॥ यथा । ससन्देहस्तुभेदोक्तौ० तदनुक्तौचसंशय । भेदोक्तौयथा । अयमार्त्तण्ड: किं सखलुतुरगै: सप्तभिरित: कृशानु: किंसर्वा: प्रसरति दिशोनैषनियतम् कृतान्त: किंसाक्षान्महिषवहनोसाविति चिरं समालोक्याजौत्वांविदधति विकल्पान्नृपतिभटा ॥ भेदोक्ताविस्मिन्नेनिकि

त्यर्थं मियुक्तषयमद्भिनराविसंव्याध मौयुयसाच्चिणोभवत॰ज्वलच्चितारोहणेनपतिदेहेनसहगमनमहकरोमीत्यनुगमनेसङ्कल्प ॥

सहचर । पुं॰ नीलझिण्टाम् ॥ पीतझिण्ट्याम् । पीयाबांसाद॰ भा॰ प्र॰ ॥ त्रि॰ अनुचरे ॥ सहचरति । चर॰ । पचाद्यच् ॥ वयस्ये ॥ प्रतिबन्धकी ॥

सहचरित । त्रि॰ सहानुष्ठिते ॥ सहचारिते ॥

सहचरी । स्त्री॰ नीलझिण्टाम ॥ पीतझिण्टाम् । झिण्टीमात्रे ॥ भार्यायाम् । पत्न्याम् । वयस्यायाम् ॥ सहचरति । चर॰ । पचादौ चरडितिटित्वनिपातनात्॰ङीप् ।

सहज । पुं॰ निसर्गे । स्वभावे ॥ तृतीयभवने ॥ त्रि॰ सहोत्थे । सहसम्भवे । सहोदरे ॥ सहतुल्ये॰ उदरे॰ जात॰ । अमी॰ । अन्येऽपीतिड ॥

सहजन्मा । पुं॰ सोदरे ॥ सहसमाने उदरेजन्मयस्यस : ॥

सहजमित्रम् । न॰ स्वाभाविकेसुहृदि । यथा । अरिमित्रमुदासीनोऽनन्तरस्तत्परं परं । क्रमेणमण्डलं चिन्त्य सामादिभिरुपक्रमै . ॥ अरि : • अत् । मित्रम्॰ सुहृद्॰ । उभयविलक्षण . • उदासीन : । तेचत्रयस्त्रिविधा : । सहजा • कृत्रिमा • प्राकृताश्चेति ॥ सहजमित्रम्॰ भागिनेयपैतृष्वस्रीयमातृष्वस्रीयादिरितिमिताक्षरा ॥

सहजा । स्त्री॰ भगिन्याम् । सहोदरायाम् ॥ प्रकृतिप्रभेदे । आत्मनासहैवजातायाम् ॥ यथापक्ष्यादीनामाकाशगमनादिलक्षणाप्रकृति सहजा ॥ टाप् ॥

सहजात । त्रि॰ सहोदरे ॥ यमजे ॥

सहजारि . । पुं॰ स्वाभाविकेशत्रौ ॥ यथा । सहजारि सापत्न्यपितृव्यतत्पुत्रादिरितिमिताक्षरायामाचाराध्याय . ॥

सहञ्जकम् । न॰ अस्थिसहितेपक्वमांसे । सास्थिरक्तमांसे । हडमासइति प्रसिद्धे ॥ यथा । छागादेर्मांसम् अस्थि कुट्टितखण्डितंपुन । शुद्धमांसविधानेनपचेदेतत्सहञ्जकम् ॥ सहञ्जक गुणयन्थे शुद्धमांसगुणस्मृतमितिभावप्रकाश . ॥

सहदेव । पुं॰ पञ्चमपाण्डवे । माद्रीतनये । नकुलानुजे ॥ जरासंधसुते ॥ त्रि॰ देवेनसहिते ।

सहदेवा । स्त्री॰ बलायाम् ॥ दण्डोत्पले । शारिवौषधौ ॥ मरुदेवायाम् । अर्हन्मातरि ।

सहदेवी । स्त्री॰ महाबलायाम् । पीतपुष्पायाम ॥ यथा । ज्वरंहति

आपयामिसुरेश्वरीमिति ॥
सहस्रनयन : । पुं॰ इन्द्रे ॥ सहस्र नयनान्यस्य ॥
सहस्रनेत्र : । पुं॰ इन्द्रे ॥ विष्णौ । सहस्रनेत्राण्यस्य ॥
सहस्रपत्रम् । न॰ कमले । पद्मे । नलिनी ॥ सहस्रमत्स्यपत्राण्यस्य ॥
सहस्रपात् । पु॰ विष्णौ ॥ सहस्र पादाअस्य । सङ्ख्यासुपूर्वस्येति पादस्यान्तलोप . ॥
सहस्रपाद : । पुं॰ कारण्डे ॥ मार्त्तण्डे ॥ यज्ञपुरुषे । विष्णौ ॥
सहस्रभित् । न॰ कस्तूर्याम् ॥ अम्लवेतसे ॥
सहस्रभुज : । पुं॰ विष्णौ ॥ कार्त्तवीर्यार्जुने ॥
सहस्रभुजा । स्त्री॰ दुर्गायाम् ॥ महाकाल्याम् ॥
सहस्रमरीचि : । पुं॰ सूर्य्ये ॥
सहस्रमूर्द्धा । पुं॰ शङ्करे ॥ विष्णौ ॥ सहस्राणिअपरिमितानि मूर्द्धा नोऽस्य ॥
सहस्रमूली । स्त्री॰ द्रवन्त्यामौषधौ ॥
सहस्रमौलि : । पु॰ विष्णौ ॥ कमले ॥
सहस्ररश्मि : । पुं॰ सूर्य्ये ॥
सहस्रलोचन : । पु॰ इन्द्रे ॥ विष्णौ ॥

सहस्रबाहु : । पुं॰ कार्त्तवीर्य्यार्जुने ॥ बाणासुरे ॥
सहस्रवीर्य्या । स्त्री॰ दूर्वायाम् ॥ सहस्रवीर्याण्यस्या : ॥ महाशतावर्याम् ॥
सहस्रवेधम । न॰ काञ्जिकविशेषे । चुक्रे ॥
सहस्रवेधी । पु॰ अम्लवेतसे । चुक्रे ॥ कस्तूर्य्याम् । न॰ रामठे । हिङ्गुनि । त्रि॰ सहस्रवेधकर्त्तरि ॥ सहस्रं विध्यतिअवश्यमवश्य । विध विधाने । सुप्यजातौणिनि : ॥
सहस्रशिखर : । पुं॰ विन्ध्याचले ॥
सहस्रा । स्त्री॰ अम्बष्ठायाम् ॥
सहस्रांशु : । पु॰ सहस्रतमेभागे ॥
सहस्रांशु : । पु॰ भानौ । रवौ । तपने ॥ सहस्रमंशवोयस्य ॥
सहस्राक्ष : । पुं॰ परमपुरुषे । इन्द्रे ॥ विष्णौ सर्व्वशिवाससाक्षित्वे ॥ सहस्रमक्षीण्यस्य । सहस्राण्यपरिमितान्यक्षीण्यस्या॰ । बहुव्रीहौ सक्थ्यक्ष्णो : स्वाङ्गात्षच् ॥
सहस्रार : । पुं॰ न॰ शिरोवस्थिता वोसुखसहस्रदलकमले ॥
सहस्रार्चि : । पु॰ विष्णौ । सूर्य्ये सहस्राण्यर्चींषि किरणा : । सहस्रा ण्यनन्तान्यर्चींषि विभासोयस्य विश्वरू पधरस्य विष्णोरिति ॥
सहस्री पुं॰ सहस्रसङ्ख्यासैन्ययुक्ते ।

रिणीयते । सहायादेशयम् ॥ सहिष्णुतेश्च । बहु० । सः सम्प्रसारणम् । गुण ॥ त्रि० ऊढेनसहवर्त्तमाने ॥

सहोत्थः । पु० तृतीयभर्त्तरि ॥

सहोदरः । पुं० सहजे । सोदरभ्रातरि ॥ सहउदरेणवर्त्तते । बोपसर्जनस्य ॥ सह० समानम् । उदरयस्येतिवा ॥

सहोरः । त्रि० साधुनि ॥ सहते । षह० । किशोरादयश्चेतिसोरन् ।

सह्यः । पु० मलयाद्रिसमीपवर्त्तिगिरिविशेषे । न० आरोग्ये ॥ साम्ये । त्रि० सहनीये । सोढव्ये । सुमधुरे ॥ सह्यते० सोढुंशक्योवा । षह० । शकिसहोश्चेतियत् ॥ गोदावरीभीमरथीकृष्णावेण्यादिकास्तथा । सह्यपादोद्भवानद्यः स्मृताः पापभयापहाः ॥

सा । स्त्री० लक्ष्म्याम् ॥ दुर्गायाम् ॥

सांयात्रिकः । पुं० पोतवणिजि । वहित्रगामिनिवणिग्जने ॥ संयात्राद्वीपान्तरगमनायसम्भूययात्रासाप्रयोजनमस्य । तदस्यप्रयोजनमिति ठञ् ॥

सांयुगीनः । त्रि० रणोत्सुके । युद्धकुशले ॥ संयुगेरणेसाधुः । प्रतिजनादिभ्यः खञ् ॥

सांराविणम् । अ० न० समन्ताच्छब्दे । हट्टशब्दध्वनौ ॥ संहूतौ ॥

सांवत्सरः । पु० गणके ॥ अस्यलक्षणमाहवराहमिहिरः । तत्रसांवत्सरोऽभिजातः प्रियदर्शनो० विनीतवेशः० सत्यवागनसूयकः० समः० सुसंहितोपचितगात्रसन्धिरविकलश्चारु० करचरणनखनयनचिबुकदशनश्रवणललाटभ्रूत्तमाङ्गोवपुष्मान्गम्भीरोदात्तघोषः० प्रायः शरीराकारानुवर्त्तिनोहिगुणादोषाश्चभवन्ति ॥ १ ॥ तत्रगुणाः शुचिर्दक्षः प्रगल्भोवाग्मीप्रतिभानवान्देशकालवित्सात्त्विकोनपरिषद्भीरुः सहाध्यायिभिरनभिभवनीयः कुशलोऽव्यसनीशान्तिकपौष्टिका-भिचारस्नानविद्याभिज्ञोविबुधार्चनव्रतोपवासनिरतः स्वतन्त्राश्चर्योत्पादितप्रभावः पृष्टाऽभिधाय्यन्यत्रदैवात्ययाद्ग्रहगणितसंहिताहोराग्रन्थार्थवेत्ता ॥ २ विशेषायाराज्ञां सांवत्सरसूत्रेद्रष्टव्याः ॥ संवत्सरंवेत्ति । तदधीतेतद्वेदेत्यण् ॥ न० फले ॥ पर्वणि ॥ सन्धिवेलादिषु० संवत्सरात्फलपर्वणोरितिशैषिकोऽण् ॥

सांवत्सरिकः । त्रि० संवत्सरसम्बन्धिनि ॥ कालाट्ठञितिशैषिकोठञ् ॥ संवत्सरव्याप्यभूते ॥ प्रतिसंवत्सरंकर्त्तव्ये श्राद्धादिकर्म्मणि ॥

लक्ष्मी 'तुल्यार्थसाक्षाच्छब्दयोगे॰ तुल्यार्थैरतुलोपमाभ्यामिति॰ तृतीयाप्रयोगउचित '। साक्षाल्लक्ष्मी रित्यादिप्रथमान्तप्रयोगेतु॰ प्रत्यक्षार्थकएवप्रतिभाति । ॰ लक्ष्म्यासाक्षादिति॰ लक्ष्म्यातुल्येतिवत्॰ लक्ष्मीसाक्षादितिभवतिच

साक्षात्कार । पु॰ इदानीमित्यमेवेत्थ परोक्षज्ञाने ॥ प्रत्यक्षकरणे ॥ साक्षात्करणम् । कृञोघञ् ॥

साक्षी । त्रि॰ प्रत्यक्षदर्शिनि । द्रष्टरि ॥ साक्षादिन्द्रियार्थसन्निकर्षविना वेत्तिपश्यतिप्रकाशयतीति॰ निर्विकारि॰ आत्मनि ॥ स्वप्रकाशज्ञानमात्रस्वरूपोप्यात्माऽविद्योपहित . सन्॰ साक्षीत्युच्यते । यथा हुवार्त्तिककाराः । नर्त्तक्यादिक्रियादु 'धीसाक्षिताकारिकारिणो धीविक्रियासहस्राणांसाक्ष्यतोऽहमविक्रियइति ॥ यथा । नेनस्वरूपबोधेनपश्यतिसर्वमितिसाक्षी । इति व्यवधानमन्तरेणस्वाध्यस्तं सर्वं स्वरूपचैतन्येनपश्यतीत्यर्थं । साक्षाद्द्रष्टरिसंज्ञायामिति॰ इनि ॥ शून्यवादिभिरपिशून्यसिद्धयेसाक्ष्यभ्युपेय॰ किमुतशून्यमितरैरत्याह । प्रत्यक्षसाक्ष्यतिरेकेणनाभावोपिप्रसिद्ध्यति । किमुभावोजगत्यस्मिन्साक्षीचानन्यसिद्धिक. । अभावोपि॰ शून्यमपीत्यर्थ ॥ पुरेपौरान्पश्यन्नरयुवतिनामाकृतिमयान्सुवेशान्स्वर्णालङ्करणकलितांश्चित्रसदृशान् । स्वयंसाक्षीद्रष्टेत्यपिचकलयंस्तै 'सहरमन्मुनिर्व्यामोहं भजति गुरुदीक्षाक्षततम ॥ साक्षाद्द्रष्टरि । सर्वप्राणिनांसाक्षाच्छुभाशुभद्रष्टरि ॥ चेतनत्वेनाविषयत्वेनचसाक्षित्वद्रष्टृत्वम् । चेतनोहिद्रष्टाभवति । यस्मैप्रदर्श्यतेविषय . ससाक्षी ॥ तथालोके॰ अर्थिप्रत्यर्थिनौ॰ विवादविषयंसाक्षिणेदर्शयत । एवप्रकृतिरपिस्वचरितंविषयंपुरुषायदर्शयतीतिपुरुष साक्षी । नचाचेतनोवा॰ विषयोवा॰ शक्योविषयंदर्शयितुमिति॰ चैतन्यादविषयत्वाच्चभवति साक्षी । अतएवद्रष्टापिभवतीति साङ्ख्यविद ॥

साक्ष्यम् । न॰ साक्षिकर्म्मणि ॥ यथा । समक्षदर्शनात्साक्ष्यंश्रवणाच्चैवसिद्ध्यतीतिमनु ॥

साख्यम् । न॰ सख्ये ।

सागर । पुं॰ समुद्रे । अब्धौ । सगरपुत्रै : खातेजलाशये ॥ सगरस्यायम्॰ सगरेणावतारितत्वात् । तस्येदमित्यण् ॥ चौरादिच्छप्युपमयासागरव्यपदेशइतिबुद्धा ॥ मृगविशेषे ॥ दशपद्मस

नयं विवक्ष्यथं संख्यातव्या जीवी॰
ब्रह्म॰ तयोरैक्य॰ तद्बोधोपयोगि
नश्वरत्वादय पदार्था . ॰ तैस
ङ्ख्यायन्ते ॰व्युत्पाद्यन्तेऽस्मिन् ॥
आत्मज्ञाने ॥ शुद्धात्मतत्त्वविज्ञान
साङ्ख्यमित्यभिधीयते इति व्याससमृ
ति ' ॥ ज्ञानशास्त्रे षड्दर्शनान्त
र्गतदर्शनविशेषे । कापिले ॥ यथा
म ' कपिलोनामसिद्धेश 'कालवि
प्लुतम् । प्रोवाचासुरये साङ्ख्यत
त्त्वज्ञानविनिर्णयम् ॥ इति श्रीभा
गवतम् ॥ साङ्ख्य सङ्ख्यात्मक
त्वाच्च कपिलादिभिरुच्यते॰ इ॰ म
त्स्यपुराणम् ॥ सम्यक् ख्यायते प्रका
श्यते वस्तुतत्त्वमनयेति॰ सङ्ख्या स
म्यग्ज्ञानम्॰ तस्यां प्रकाशमानमा
त्मतत्त्वं साङ्ख्यमिमिति श्रीधरस्वा
मी ॥ अपिचाहु । साङ्ख्यं द्विक
पिलमुनिनास सारविमुक्तिकारण
प्रोक्तम् । एता : सप्ततिरार्याभाष्य
ञ्चाप्यत्र गौडपादकृतम् ॥ एतत्प
वित्रमग्र्यंमुनिरासुरयेऽनुकम्पया
प्रददौ । आसुरिरपि पञ्चशिखायते
न च बहुधाकृत तन्त्रम् । शिष्यपरम्प
रयागतमीश्वरकृष्णेन चैतदार्या-
भि । संक्षिप्तमार्यमतिना सम्य
ग्विज्ञाय सिद्धान्तम् ॥ सप्तत्यां कि
लयेऽर्थास्तेऽर्था . कृत्स्नस्य षष्टितन्त्रस्य
। आख्यायिकाविरहिता : परवाद
विवर्जिताश्चापि ॥ इति साङ्ख्य
प्रवचनभाष्यम् । अस्याध्ययने प्रार
म्भ सुश्रमाह कालिदासो यथा । त्रि
शुष्मोऽसौ शुम्भे सद्घृताणां समा
रम्भित साङ्ख्यशास्त्रादिशास्त्रम् ।
मृदुविप्रशम्भूङ्शम्भूङ्युक्तौ द्विनै
च्वेवतद्बोधसिद्धि तनोतीति ॥

साङ्ख्यमतम् । न॰ षष्टितन्त्रादौ ॥
साङ्ख्यानांमतम् ॥ यथा । त्रिगु
ण यत्प्रधानं तत्पुरुषार्थं न हेतुना
। प्रवर्त्तते वासनात्वकृत्स्नं॰ सच्चे
तिकापिला ॥ नान्त 'कारणमेवा
त्मा॰ किन्त्वन्य सर्वगत स्वप्र
काश॰ तस्यभोगापवर्गानुगुण्ये न
हेतुनायत्प्रधानमस्तितदात्मनैव
स्थितमन्त 'करणं तत् सधर्म्मकं प्र
वर्त्तते॰ तदेवम्भुत्वावासनात्वे नो
च्यत इति वदन्तीत्यर्थ ' ॥

साङ्ख्ययोग :। पुं॰ चिन्तनविशेषे ।
निदिध्यासनपूर्वभाविनाश्रवणम
ननरूपेण॰ नित्यानित्यविवेकादि
पूर्वकेण॰ इमेगुणत्रयपरिणामाश्च
नात्मन . सर्वे मिथ्याभूता ' ॰ त
त्साक्षीभूतो नित्यो विमुक्तिर्विका
र सत्य समस्तजडसम्बन्धशून्य आ
त्मा त्वहं 'व वेदान्तवाक्यविचारज
न्ये चिन्तने ॥

साङ्ग :। त्रि॰ अङ्गसहिते ॥ अङ्गेन
अङ्गैर्वासहित ॥

सर्व्वं ॥ यथा । प्रजनार्थंस्त्रिय : स्रष्टा : सन्तानार्थंचमानवा : । तस्मात्साधारणोधर्म्मः श्रुतौपत्न्या सहोदित . ॥ अपिच । अहिंसा सत्यमस्तेयशौचमिन्द्रियसंयम. । दम . क्षमार्जवन्दानसर्वेषांधर्मसाधनमिति ॥ आत्मज्ञानतितिक्षा चधर्म्मः : साधारणोनृपेतिच ॥

साधारणस्त्री० । स्त्री०वेश्यायाम् ॥

साधारणानैकान्तिक । पुं० हेत्वाभासान्तरे । साध्याभाववद्वृत्तौ ॥ यथापर्वतोऽग्निमान् प्रमेयत्वादिति । प्रमेयत्वस्यवह्न्यभाववतिह्रदे विद्यमानत्वात् ॥ साध्यवदन्यवृत्तौ । यथा । शब्दोनित्य • नि स्पर्शत्वात् अपविरुद्धसङ्कीर्णदोष : • उपधेयसङ्करेऽप्युपाधेरसङ्करात् ॥

साधारणी । स्त्री० सदृशायाम् । समानायाम् ॥ कुञ्चिकायामितिहेमचन्द्र : ॥

साधारण्यम् । न० साम्ये ॥ कुञ्चिकायाम् । इतिहेमचन्द्र ॥

साधारिका । स्त्री० घटिकायाम् । नाडिकायां ॥

साधिका । स्त्री० साधनकर्त्र्याम् ॥ सुषुप्तौ ॥ सुप्तसुसाधकेतिहैम : ॥

साधित । त्रि० दापिते । धनादिना यत्नोकृते । धनादिप्रदापिते ॥ प्रदापितधने ॥ साध्यविस्म । साध० । क्त ॥ सिद्ध ॥

साधिमा । पु० साधुत्वे ॥ साधोर्भाव : । इमनिच् ॥

साधिष्ठ . । त्रि० अतिशयेनबाढे अतिदृढे । बाढ्ये ॥ न्याय्ये । शोभनतमे ॥ अयमेषामतिशयेनबाढ : । अतिशायिनेतमविष्ठनाविति ष्ठन् । अन्तिकबाढयोर्नेदसाधौ ॥

साधिष्ठान । त्रि० सौधे । अधिष्ठानेन कूटस्थचैतन्येनसहिते ।

साधीयान् । त्रि० अतिबाढे ॥ अतिशोभने । अतिसाधौ ॥ अयमनयोरतिशयितोबाढ साधुर्वा । द्वित्र चनेतीयसुन्० अतिकशाढयोरिति बाढशब्दस्यसाधादेश : । टेरिति साधोष्टिलोप : ॥

साधु । त्रि० उत्तमकुलोत्पन्ने । अस्य पर्यायायथा । महाकुलकुलीनार्य्य सभ्यसज्जनसाधवइति । वार्धुषिके ॥ चारौ । शोभने । मनोज्ञे । स्वभावसुन्दरे ॥ प्रवीणे । शौर्य्ये ॥ स्वधर्मवर्तिनि ॥ अपकारिष्वप्युपकारशीले ॥ यद्रोहिणि ॥ पुण्यकारिणि ॥ वेदमार्गस्थे ॥ शास्त्रविहितकारिणि ॥ सर्वहिते ॥ नित्यानित्यवस्तुविवेकादिसाधनचतुष्टय सम्पन्ने मुमुक्षौ ॥ कुलधर्माश्रिते ॥

यमनीध्याम् ॥ आतपत्रे ॥ कृष्णम
यपाल .। पाठान्तरे॰ साधुतम
पि ॥

साध्य : । पुं॰ गणदेवताविशेषे ॥
साध्य सिद्धौ । साध॰ । कर्मणो
यत्॰ इतिभावेण्यत् । साऽस्य
स्य । अर्श आद्यच् । साध्याद्वादश
विख्याता . पुराणेषुपुरातनै .।
तेयथा । मनोमन्ताप्राणनरोपा
नोऽपानवस्तथा । नारायणोनरश्चैव
हरिविस्तथाविभु : ॥ प्रभुश्चाद्
शैवैतेसाध्या . प्रोक्ता पुरातनैरिति
॥ विष्कम्भाद्यन्तर्गतयोगविशेषे ॥
तत्रोत्पन्नस्यफल यथा । असाध्यसा
ध्य : किलसाध्यजात : शूरोतिधी
रोविजितारिपक्ष ' । बुद्ध्याज्ञुप्रा
र्थे परिसाधितार्थ . परकृतार्थं
सुतरांविनीत . ॥ स्मरे । कामे ॥
देवे । सुरे ॥ त्रि॰ साधनीये ॥
कष्टोपाय : सुखोपायोद्विविध .
साध्यउच्यते ॥ साधनाभिमते ॥
साध्यतेऽत्र । अनुमाने । यथा ।
प्रतिज्ञादोषनिर्मुक्तं साध्यंसत्कार
णान्वितम् । निश्चित लोकसिद्धस्य
मर्थ पक्षविदोविदु . ॥ साध्यंसाध
नाभिमत पक्ष विदु : । यद्यप्यन्य
त्साध्य व्याप्यम्॰ तद्विविशिष्टधर्मी
पक्षइतिभेद : । तथाप्यत्राक्प्रथ्या
प्यवाद्धिधर्मविशेषविशिष्टस्यपक्षत

याधर्मिणोऽधर्मपदैरेवसाध्यत्वात्
साध्यपक्षयोरभेदाभिधानमितिव्यव
हारतत्त्वम् ॥ व्याप्ये ॥ साध्यते
ऽनेनेतिव्युत्पत्त्यापक्षे ॥ यथा ॰प
र्वतोवह्निमानित्यत्रपर्वत ॥ सा
धयितुंयोग्ये ॥ यथापर्वतोवह्निमा
नित्यत्रवह्नि . साध्य ' ॥ साध्यस्य
वस्तुनोऽभावेसाधने किप्रयोजनम् ॥

साध्यतावच्छेदकम् । न॰ अनुमिति
विधेयांशेभासमानधर्मे ॥

साध्यव्यापकत्वम् । न॰ साध्यसमा
नाधिकरणात्यन्ताभावाप्रतियोगि
त्वे ॥

साध्यसम ' । पुं॰ हेत्वाभासान्तरे ॥
यथाहगोतम । साध्याविशिष्टस्य
साध्यत्वात्साध्यसम . ॥ ४८ ॥
साध्येनवह्न्यादिना॰ अविशिष्ट॰
तुल्यइत्यतआह॰ साध्यत्वादिति॰
साधनीयत्वादित्यर्थ । यथाहि॰
साध्य साधनीय • तथाहेतुरपिचेत्
• साध्यसमइत्युच्यते । अतएवचा
सिद्धइतिव्यवह्रियते । अयञ्चाश्र
यासिद्धिस्वरूपासिद्धिव्याप्यत्वासिद्
धिभेदात्॰ त्रिविध । आश्रयासि
द्धिश्च॰ पक्षेपक्षताच्छेदकाभाव .
। यथाकाञ्चनमय ' पर्वतोवह्निमा
नित्यादौ । स्वरूपासिद्धि ' • प
क्षे हेतुताऽवच्छेदकावच्छिन्नस्याभा
व । यथाह्रदोद्रव्यधूमादित्यादौ

र्युक्तोयशोहर्षप्रदोऽभूत् । कष्टस्क सत्वजोदासीसानन्दोवीरकोरसे ॥ त्रि॰ आह्लादयुक्ते ॥

सानन्दूर । पु॰ तीर्थविशेषे ॥

सानसि । पुं॰ काञ्चने ॥ सनोति षणुदाने । सानसिवर्णसीत्यादि नाअसिप्रत्ययउपधाहस्वश्च ॥ त्रि॰ सम्भजनीये ॥

सानिका । स्त्री॰ वाद्यविशेषे । सनाई॰ इतिलोकप्रसिद्धे ॥ वंशी वाद्ये ॥

सानु । पु॰ न॰ स्त्री । प्रस्थे । पर्वतस्यसमभूभागे ॥ वने ॥ वात्याया म ॥ मार्गे ॥ अग्रे ॥ कोविदे ॥ सनोति । षणु॰ । दूसनिजनी तिञुण् ॥ अर्के ॥ पल्लवे ॥

सानुक्रोश । त्रि॰ सदये ॥

सानुज । पु॰ तुम्बुरुवृक्षे । तीक्ष्णपत्रे ॥ न॰ प्रपौण्डरीके ॥ त्रि॰ अनुजेनसहवर्त्तमाने ॥ सानुजरा ममोर्ह ॥

सानुबन्ध । त्रि॰ सपरिवारे ॥ अविच्छिन्ने । सानुवृत्ते ॥

सानुमान् । पु॰ पर्वते ॥ सानवोऽस्य सन्तीति । मतुप् ॥

सानेयिका । स्त्री॰ सानेय्याम् ॥

सानेयी । स्त्री॰ वंश्याम् ॥ इ॰ श॰ र॰ मा॰ ॥

सान्तपनम् । न॰ कृच्छ्रसान्तपनाभिधव्रतविशेषे ॥ यथा । गोमूत्रगोमयक्षीरदधिसर्पिः कुशोदकम् । एकरात्रोपवासश्चकृच्छ्रं सान्तपनस्मृतम् ॥ गोमूत्रादिषड्द्रव्याण्येकीकृत्यैकस्मिन्नहनिभक्षयेत्॰नान्यत् किञ्चिदद्यात् । अपरदिनेचोपवास इत्येतत्॰सान्तपनकृच्छ्रस्मृतमित्यर्थः ॥ सन्तपति । तप॰ । ल्यु । तस्येदम् । अण् ॥

सान्तर । त्रि॰ विरले ॥ अन्तरेणसहित ॥

सान्त्व । न॰ अत्यर्थमधुरेवाक्ये । कर्णमनःप्रीतिजनके ॥ साम नि । प्रियशब्दार्थप्रदानसम्बन्धादिभिः क्रोधोपशमने । द्रव्यदानादिलुब्धमाभैषीरित्यादिसमाधाने ॥ सान्त्वयति । षान्त्वसामप्रयोगे । चुरादिरदन्तः । एरच्॰घञ्वा ॥ दाक्षिण्ये ॥

सान्त्वनम् । न॰ प्रणये ॥ सान्त्वयते । षान्त्व॰ । ल्युट् ॥

सान्त्वना । स्त्री॰ प्रणये ॥ प्रणयसान्त्वनानेतिकोषान्तरम् ॥ सामनि

सान्त्वनावाद । पुं॰ प्रियवचने ।

सान्दीपनि । पुं॰ मुनिविशेषे ॥ अस्त्रादिविद्याभिज्ञे॰अवन्तिपुरवासिनिकृष्णरामकृष्णयोर्गुरौ । सन्दीपनस्यापत्यम् । अतइञ् ॥

सान्दृष्टिकम् । पुं॰ व्यापारानन्तरं

जायमाने•सद्य • फले । सन्दृष्टेप्र
त्यक्षे भवम् । पथ्यात्मादित्वाट्ठञ्
॥ समानदृष्टिविषये ॥

सान्द्रम् । न॰ वने ॥ त्रि॰ घने । नि
विडे ॥ मृदौ । सह॰ चन्द्रे । च
ट्विन्नि । बाहुलकाद्रक् ॥

सान्द्रपुष्प । पुं॰ विभीतकवृक्षे ।

सान्द्रस्निग्ध । त्रि॰ घनस्निग्धे ।
मेदुरे ॥

सान्धिक । पुं॰ शौण्डिके । त्रि॰
सन्धिकारि ॥

सान्धिवेलम् । न॰ सन्धिवेलायाम् भ
वे ॥ सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् ॥

सान्ध्य । पुं॰ स्वप्ने ॥ सन्धिभवे ॥ स
न्ध्याधारभव : । सन्धिवेलादित्वा
दण् ॥

सान्ध्यकुसुमा । स्त्री॰ त्रिसन्धिपुष्पवृ
क्षे ॥

सान्नहनिक । त्रि॰ योधानां रथसन्ना
हप्रवर्तके ॥ सन्नहनं प्रयोजनमस्य ।
तदस्य प्रयोजनमिति ठञ् ॥

सान्नाय्यम् । न॰ होतव्यद्रव्ये । हवि
षि सम्यङ् नीयते होमार्थमग्निं प्रति
। णीञ् । पाय्यसान्नाय्येति ण्यदा
यादेश सन्नोदीर्घं च निपात्यते ॥

सान्निध्यम् । न॰ नैकट्ये ॥ निकटे ॥
सन्निधिरेव । चतुर्वर्णादित्वात्
स्वार्थे ष्यञ् ॥

सान्निपातिक : । त्रि॰ सन्निपातकरो
गे । सन्निपातप्रशमनङ्गोपनघा
। सन्निपाताच्चेति ठञ् ॥

सान्न्यासिक । पु॰ भिक्षौ । पाराश
रिणि ॥

सान्वय । त्रि॰ सम्बन्धिनि ॥ कुलस
हिते ॥ पुत्रपौत्रादिसहिते ॥ यथा
। योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्र
मम् । स जीवन्नेव शूद्रत्वमाशु गच्छ
ति सान्वय ॥

सापत्न । पु॰ सपत्नीतनये । सपत्न्या
अपत्यम् । शिवादिभ्योऽण् । तत्र स
पत्नेति पाठेपि निर्दिष्टपरिभाष
या॰ सपत्नीशब्दादपि सामान्यवि
वक्षया॰ढकमाधित्वाऽणिति बोध्यम
॥ वैरिपुत्रतनये ॥ तस्यापत्यमित्यण्
• शिवादित्वात् ॥

सापत्नेय । त्रि॰ सपत्न्यास्तनये ॥
सपत्न्या अपत्यम् ॥ स्त्रीभ्यो ढक्

सापत्नी । स्त्री॰ सपत्न्या दुहितरि ॥

सापत्रपा । स्त्री॰ लज्जायाम् ॥

सापराध : । त्रि॰ कृतापराधे ॥

सापिण्ड : । पुं॰ सपिण्डे ॥ प्रज्ञा
दिभ्यश्चेति स्वार्थेऽण् ॥

सापिण्ड्यम् । न॰ सपिण्डतायाम् ॥

साप्तपदीनम् । सख्ये । मित्रत्वे ॥
सप्तभि : पदैरवाप्यते । साप्तप
दीनं सख्यमिति साधु ॥

साफल्यम् । न॰ सफलतायाम् ॥

साभाव्यापत्ति : । स्त्री॰ साम्यप्राप्तौ ॥

सामक । पु॰ तर्कुशाणे ॥ सामाभिज्ञे ॥ सामअधीते॰ वेदवा । क्रमादिभ्योवुन् ॥ न॰ मूलद्रव्ये ॥

सामग । त्रि॰ ब्राह्मणविशेषे । छान्दोगे ॥ सामगायति । गै शब्दे । गापोष्टगितिटक् । टिड्ढाणञ् । तेनस्त्रियांसामगी ॥

सामगर्भ॰ । पु॰ विष्णौ ॥

सामग्री । स्त्री॰ कारणसमूहे ॥ यथा । सामग्रीवैगुण्यफलविरहोव्याप्तिरेवेति तत्त्वमुक्त॰ पदाङ्कदूत ॥ द्रव्ये ॥

सामग्र्यम् । न॰ समुदायत्वे ॥

सामज । पु॰ गजे ॥ कुञ्जरे ॥ त्रि॰ सामोत्थे । सामार्थे ॥

सामञ्जस्यम् । न॰ औचित्ये । युक्तियुक्ते ॥

साम । न॰ सहस्रशाखिपितृदेवताकेवेदविशेषे ॥ गीतिविशिष्टायामृचि ॥ ऋच्यध्यूढं सामोच्यते ॥ वाक्यविशेषस्यार्थागीतौ ॥ सामपदन्तुगीतिमात्रस्याभिधायकमित्यन्यत् । चतुर्णांवेदानांमध्येगानमाधुर्येणातिरमणीयत्त्वाद्विष्णोर्विभूति सामेत्युच्यते । राज्ञांशत्रुवशीकरणोपायविशेषे । सान्त्वे । प्रियवादर्थप्रदानसत्त्वस्थादिभि शत्रौक्रोधोपशमने ॥ यथा । परस्परोपकाराणाद्दर्शनं गुणकीर्त्तनम् । सम्बन्धस्यसमाख्यानमायत्याः सम्प्रकाशनम् ॥ वाचापेशलयासाधुतवाहमितिचार्पणम् इतिसामविधानज्ञैः सामपञ्चविधं स्मृतम् ॥ स्यतिपाप॰ दोष वाऽनेनवा । षोऽन्तकर्म्मणि । सातिभ्यांमनिन्मनिणाविति मनिन् ॥ साऽऽनम् । सामसान्त्वप्रयोगे । बाहुलकात् मनिन्वा ॥ त्रि॰ शोभने । अनवद्ये ॥

सामन । पुं॰ सामवति ॥ सामास्यास्ति । पामादित्वन्न ॥

सामनी । स्त्री॰ पशुबन्धनरज्जौ ॥

सामन्त । पु॰ प्रतिवासिनि । समन्तोन्तएकदेशोस्य । प्रादिभ्योधातुजस्येतिसमासः । समन्तायाःदेशाव्यवहितभूमेरयम् । तस्येदमित्यण् ॥ माण्डलिके ॥ चतुर्दिक्षु ॥ त्रि॰ सहाये ॥

सामन्यः । पु॰ सामविदि ॥ सामसुसाधुः॰ प्रवीणोः॰ योग्योवा । तत्रसाधुरितियत् । येचाभावकर्म्मणोरितिप्रकृतिभावः ॥

सामयिक । त्रि॰ समयोचिते । समयेकार्यकर्त्तरि ॥ समय प्राप्तम् । समयस्तदस्यप्राप्तमितिठञ् ॥ विनयादित्वात्स्वार्थेठग्वा । समयोऽर्थे ॥

सामयोनि । पुं॰ ब्रह्मणि । द्रुहिणे । कुञ्जरे । गजे । त्रि॰ सा

ब्राह्मण क्षत्रियो वैश्य शूद्र सामान्यधर्म्मेति ॥

सामान्यम् । न० जाती ॥ तद्द्विविधम् । यथा । सामान्यं द्विविधं प्रोक्तं परञ्चापरमेव च । द्रव्यादित्रिकवृत्तिस्तु सत्तापरतयोच्यते । परभिन्ना च या जातिः सैवापरतयोच्यते । व्यापकत्वात्परापि स्याद्द्रव्यत्वादपरापि च । द्रव्यत्वादिकजातिस्तु परापरतयोच्यते ॥ इति भाषापरिच्छेदः ॥ तल्लक्षणं यथा । नित्यत्वे सत्यनेकसमवेतत्वमिति । अनेकसमवेतत्वं संयोगादीनामप्यस्ति अत उक्तम् । नित्यत्वे सतीति समवेतत्वं गगनपरिमाणादीनामप्यस्ति अत उक्तमनेकेति । नित्यत्वे सत्यनेकवृत्तिसामान्यमुपेक्ष्य समवेतत्वमुक्तम् । एकव्यक्तिवृत्तिस्तु न जातिः । यतउक्तम् । व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः । रूपहानिरसम्बन्धो जातिबाधकसंग्रहः ॥ एकव्यक्तिकत्वादाकाशत्वं न जातिः । तुल्यवृत्तिकत्वाद्घटत्वकलसत्वं न जातिद्वयम् । सांकर्य्याद्भूतत्वमूर्त्तत्वं न जातिः । अनवस्थाभयात्सामान्यत्वं न जातिः । विशेषस्य व्यावृत्तस्वभावस्वरूपहानिः स्यादतो विशेषत्वं न जातिः । समवायसम्बन्धाभावात्समवायो न जातिः । द्रव्यादित्रिकवृत्तिरिति । परत्वमधिकदेशवृत्तित्वम् अपरत्वमल्पदेशवृत्तित्वम् । सकलजात्यपेक्षयाऽधिकदेशवृत्तित्वात्सत्तायाः परत्वम् । एतद्बोधनाय द्रव्यादीति । तदपेक्षया चान्यासां जातीनामपरत्वम् । परभिन्ना सत्ताभिन्ना । व्यापकत्वात्परापि स्याद्द्रव्यत्वादपरापि च । पृथिवीत्वाद्यपेक्षया व्यापकत्वात् अधिकदेशवृत्तित्वात् द्रव्यत्वं परत्वम् । सत्तापेक्षयाऽल्पदेशवृत्तित्वात् द्रव्यत्वं अपरत्वञ्च । तथाच धर्म्मद्वयसमावेशादुभयमविरुद्धम् । इति मुक्तावली ॥ नित्यमेकमनेकानुगतं सामान्यम् । तच्च द्रव्यगुणकर्म्मवृत्ति । इति तर्कसंग्रहः ॥ सामान्यं गुणसाम्येनाथवस्त्वन्तरैकतेति लक्षणलक्षितोऽलङ्कारविशेषः ॥ यथा । प्रस्तुतस्य यदन्येन गुणसाम्यविवक्षया । ऐकात्म्यं बध्यते योगात् तत्सामान्यमिति स्मृतम् । अतादृशमपि तादृशतया विवक्षितुं यदप्रस्तुतार्थेन सम्पृक्तमपरित्यक्तनिजगुणमेव तदेकात्मतया निबध्यते तत्समानगुणनिबन्धनात् सामान्यम् । उदाहरणम् । मलयजरसविलिप्ततनवो नवहारलताविभूषिता सिततर

समासमृद्धे ॥

साचि । अ॰ अर्द्धे ॥ निन्दायाम ॥ सामयति । षामसान्त्वप्रयोगे । अचट् ॥

सामिधेनी । स्त्री॰ धाय्यायाम् । अग्निज्वालनार्थं ऋचि । ऋक्सामिधेनीधाय्याचयास्यादग्निसमिन्धने ॥ समिधामाधानी । समिधामाधानेषिण्यण । षित्वान्ङीष् । यस्येतिचेतिलोप ॥ समिन्धि ॥

सामिधेनः । पु॰ मन्त्रविशेषे ॥ समिधामाधान । समिधामाधानेषिण्यण् ॥

सामीची । स्त्री॰ वन्दनायाम् ।

सामीप्यम् । न॰ सान्निध्ये । देशकालाभ्यामासन्नतायाम् प्रत्यासत्तौ । अव्यवहितत्वे ॥ समीपमेव । चतुर्वर्णादित्वात्॰ ष्यञ् ॥

सामुद्रम् । न॰ देहलक्षणे ॥ लवणविशेषे । कफके । वर्ष्मरे ॥ अस्यगुणा यथा । सामुद्रं मधुरपाकिसलिलं मधुरगुरु । नात्युष्णं दीपनभेदिसक्षारमविदाहि च ॥ श्लेष्मलं वातनुत्तिक्ष्णमरूक्षं नातिशीतलम् ॥ समुद्रोदके सामुद्रसुदकंक्षारं सर्वदोषप्रकोपणम् ॥ समुद्रफेने ॥ धाराजलप्रभेदे ॥ तत्सद्धारलवणं शुक्लदृष्टिबलापहम् । विस्रसदोषलं तीक्ष्णं सर्वकर्मसुगर्हितम् ॥ सामुद्रन्त्वाश्विनेमासिगुणैर्गाङ्गवदादिशेत् । यतोऽगस्त्यस्यदिव्यर्षेरुदयात् सकलं जलम् ॥ निर्मलं निर्विषं स्वादुशुक्लं स्यादनदोषजम ॥ तत् सामुद्रजलम । आह च । फूत्कारविषवातेननागानांव्योमचारिणाम् । वर्षासुसविषं तोयं दिव्यमप्याश्विनं विना इति ॥ त्रि॰ समुद्रोत्पन्नवस्तुनि ॥ समुद्रे भवम् । तत्रभवइत्यण् ॥

सामुद्रकम् । न॰ समुद्रलवणे ॥ समुद्रोक्तस्त्रीपुंलक्षणग्रन्थे ॥ तीर्थविशेषे ॥ त्रि॰ । स्त्रीपुंसयोश्चिह्नवेत्तरि ॥

सामुद्रिक । त्रि॰ स्त्रीपुंसयोश्चिह्नज्ञे ॥ वेत्तास्त्रीपुंसयोश्चिह्नं सामुद्रिकउदाहृतइतिहारावली ॥ समुद्रसम्बन्धिनि ॥ समुद्रचारिणि ॥

सामूहिक । त्रि॰ सामवायिके ॥ समूहसमवैति । समवायान् समवैतीतिठक् ॥

साम्पराय । पु॰ परलोके ॥ परलोकसाधने । सम्पराय । परलोक॰ तत्प्राप्तिप्रयोजनेशास्त्रीयेसाधनविशेषे ।

साम्परायिकम् । न॰ युद्धे । समीके । समरे ॥ त्रि॰ पारलौकिके ॥ यथा । प्रभुः प्रथमकल्पस्ययोनुकल्पेनवर्त्तते । नसाम्परायिकं तस्य दुर्मतेर्विद्यतेफलम् ॥ पारलौकि

वणमल्लिषि । इमवाम्बरदूते ॥ धाम्रातके ॥ भद्रवलायाम् ॥ न० गन्धभेदे ॥ मलनिर्गमने ॥

सारणि । स्त्री० क्षुद्रनद्याम् ॥ प्रसारण्याम् ॥

सारिणी । स्त्री० प्रसारण्याम् ॥ सूक्ष्मनद्याम् ॥

सारण्ड । पुं० सर्पाण्डे ॥

सारत । पु० मुनौ ॥ त्रि० वर्त्तनसहवर्त्तमाने ॥

सारतरु । पुं० कदलीवृक्षे ॥ कर्म० धा० बहुव्रीहि ॥

सारत । अ० बलतदुत्यर्थे ॥ प्रमुख्यात्सलिल ॥

सारथि । पु० सूते । नियन्तरि ॥ यस्यलक्षणं यथा । निमित्तशकुनज्ञानीहयशिक्षाविशारद । हयायुर्वेदतत्त्वज्ञोभूविभागविशेषवित् ॥ स्वामिभक्तोमहोत्साहः सर्वभाषाप्रियंवद शूरश्चकृतविद्यश्चसारथि परिकीर्त्तितइति ॥ सरणम्रयाम् । इ० । धर्माभावियथ : । सर्वार्थानि तिगच्छिन् ॥

सारथ्यम् । न० सारथेः कर्म प्र० भावेच ॥ पुरोहितादित्वात्यक् ॥

सारद : । त्रि० सारदातरि ॥

सारद्रुम । पुं० खदिरे ॥

सारपाद । पु० धामनिवृक्षे ॥

सारभृत् । त्रि० सारग्राहिणि ॥

सारमिति । स्त्री० वेदे । श्रुतौ । सारस्ययथार्थस्यमिति ॥

सारमूषिका । स्त्री० देवदाल्याम् ॥

सारमेय । पु० कुक्कुरे । सरमायाअपत्यम् । स्त्रीभ्योढक् ॥

सारमेयादन । पुं० नरकविशेषे ॥

सारमेयी । स्त्री० शुन्याम् ॥ ढगन्तात्ङीप ॥

सारलोहम् । न० लोहसारे ॥ कृतिभूरिप्रयोग ॥

सारव । त्रि० सरयूजातवस्तुनि ॥ सरय्वांभव । तत्रभवइत्यण् । टाड्डनायनेतियलोप ॥ स्त्रियां टिड्ढेतिङीपि० सारवी ॥

सारवान् । त्रि० ससारे ॥

सारवती । स्त्री० छन्दोभेदे ॥ यथा । वेदगणयतिहसमत० स्यान्नगुरवन्तगतोयमत । भौयगवमन्त्रप्रथिता० सारवतीकविभि० कथिता ॥ सारविशिष्टार्था ॥

सारस : । पु० खनामप्रसिद्धेपक्षिविशेषे । पुष्करान्ने ॥ अस्यशकुनयथा । दृष्टार्थसिद्धि० सकलासुदिक्षु स्यात्सारसवनृविलोकनेन । श्रुत्वाऽपृष्ठेनिनदनगन्तुसिद्ध्यस्यभोष्टस्यप्रवसस्यात् ॥ वामेनयोषितकुलाभव्कारोयब्द्सयाग्रेन्द्रप्रतीयर्थलब्ध्यै । यसा सारसाभ्यांयुगपद्विराव ' कुतोपि

सालवेष्ट '। पुं॰ धूनके ॥
सालशृङ्गम् । न॰ प्राचीराग्रे॥
सालसार । पु॰ तरौ । हिङ्गुनि ॥
सालिका स्त्री॰ शारिकायाम् ॥ यल॰ । खुल् । ह्रस्वम् ॥
सालोक्यम् । न॰ एकलोकवासे । सलोकतायाम् ॥
साल्किक .। पुं॰ पक्षिविशेषे । गृध्रसके । चुद्रचूडे ॥
साल्व :। पुं॰ देशविशेषे । तद्देशस्थे॰ पुभूम्नि॰ कारकुक्षीयेषु ॥ साल्वास्तुकारकुक्षीयामरवस्तुदशीरकाः इतिहेमचन्द्र '॥ पुं॰ नृपतिविशेषे ॥ न॰ मूलविशेषे ॥ साल्वस्यमूलम् । पुष्पमूलेषुबहुलमित्यणोलुक् ॥ कृत्तिप्रामाण्यात्साल्वशब्दस्यवत्वेपिविल्वादित्वमप्यादित्ववासोध्यम् ॥ त्रि॰ साल्वदेशजे । साल्वेषुभव '। कच्छादिभ्यश्चत्यण् ॥ यथा॰ साल्व पदतिव्रजति ॥
साल्वक । त्रि॰ साल्वदेशजेब्राह्मणादौ ॥ गवि ॥ यवाग्वाम् ॥ साल्वेषुजात । अपदातौसाल्वादिति॰ गोयवाग्वोरेतिवुञ् ॥
साल्वती । स्त्री॰ नाम्बलती ॥
साल्वहा । पु॰ श्रीकृष्णे ॥
साल्वेय :। पुं॰ नृपान्तरे ॥ तस्याऽपत्ये ॥ साल्वेयस्यापत्य॰ राजा। साल्वेयगान्धारिभ्याञ्चेत्यञ् ॥
सावधान .। त्रि॰ समाहितान्तःकरणे ॥ अवधानेनसहवर्त्तमान ॥ सचेतने ॥
सावन । पुं॰ यज्ञकर्मान्ते । यजमाने ॥ प्रचेतसि । वरुणे ॥ दिवसविशेषे । यथा । उदयादुदयंभानो : सावनदिवसस्फुटम् ॥ अपिच । अहोरात्रेणचैकेन सावनोदिवसःस्मृत । इति ।। त्रिं अहिनात्मकेमासि ॥ त्रिंशतासौरदिवसै सावन ' परिकीर्त्तित . । न॰ सवनसम्बन्धिदिने । सोमयागेसवनत्रयस्याहोरात्रसाध्यत्वात् तत्सम्बन्धिदिन सावनमितिमाधवाचार्य्य : ॥
सावयवम् । न॰ व्यक्तौ ॥ अवयवनमवयवोमिथ : सश्लेष : मिश्रण संयोगइतियावत् । अप्राप्तिपूर्विका प्राप्ति ' संयोग तेनसहवर्त्तत इतिसावयवम् । तयाहि॰पृथिव्यादय . परस्पर संयुज्यन्ते॰एवमन्येपि । नतुप्रधानस्यबुद्ध्यादिभि ' संयोगस्तादात्म्यात् । नापिसत्त्वरजस्तमसाम्परस्पर संयोगोऽप्राप्तेरभावात् ॥ त्रि॰अवयवविशिष्टे ॥
सावर '। पुं॰ मृगविशेषे ॥ न॰ तन्मांसे ॥ यथा । मांससावरसम्भूतं माघिसंबहुधाकृते । वेसवारोभवा

सावित्रीव्रतम् । न॰ ज्येष्ठकृष्णचतुर्दश्यां स्त्रीणां कर्त्तव्ये नियमविशेषे । वटसावित्री॰ इ॰ भाषाप्रसिद्धे ॥

सावित्रीसूत्रम् । न॰ यज्ञोपवीते ॥

साशङ्क । त्रि॰ सभये ॥

साशूक । पु॰ कम्बले । इ॰ इारा बली ॥

साश्रुधी । स्त्री॰ श्वश्र्वाम् इ॰ वि॰ शेष ॥

सास । पुं॰ चापविशेषे ॥ असिन धनुषा सह वर्त्तते । तेन सहेति बहुव्रीहि ॥

सासि । त्रि॰ सखड्गे ॥ सहासिना वर्त्तते । तेन सहेति तुल्ययोगइति बहुव्रीहि ॥

सासुसू । पु॰ सबाणे ॥ असुसूभिर्बाणै सहेति ॥

सास्थिन्स्नायुक् । न॰ कांस्ये ॥ इ॰ वि॰ ष ॥

सास्ना । स्त्री॰ गलकम्बले । गवाङ्गलस्थितकम्बलाकृतिमांसे ॥ सस्ति । असस्वपे । रास्नासास्नेति साधु ॥

साहङ्कार । त्रि॰ गर्वयुक्ते ॥

साहचर्य्यम् । न॰ साहित्ये । एकक्रियान्वयित्वे । सामानाधिकरण्ये एकाधिकरणवृत्तित्वे ॥ सहचरस्य भाव । ष्यञ् ॥

साहस । पु॰ अग्निविशेषे ॥ यथा । प्रायश्चित्ते विधुश्चैव पाकयज्ञे तु साहस । लक्षहोमे तु वह्नि स्यात् कोटिहोमे हुताशन. ॥ इति तिथ्यादितत्त्वम् ॥ दमे । दण्डविशेषे ॥ स त्रिविधो यथा । प्रथम साहसस्मृत । मध्यम पञ्चविज्ञेय : सहस्रन्त्वेवचोत्तम ॥ लोभात् सहस्रं दण्ड्यन्तु मोहात्पूर्व्वन्तु साहसम । भयाद्द्वौ मध्यमौ दण्ड्यौ मैत्र्यात्पूर्व्वं चतुर्गुणमिति मिताक्षरा साक्षिप्रकरणे ८ ऽध्याय. ॥ न॰ बलात्कारकृतकार्ये । बलात् समक्ष क्रियमाणे पारुष्यादौ ॥ तथा अमर । सहसा क्रियते कर्म यत्किञ्चिद्बलदर्पितै । तत्साहसमिति प्रोक्तं सहो बलमिहोच्यते । मनुष्यमारणं स्तेयं परदाराभिमर्षणम् । पारुष्यमनृतञ्च साहसं पञ्चधा स्मृतमिति ॥ दुष्कृतकर्म्मणि ॥ अविमृष्यकृतौ । पश्चाद्दोषमनालोच्य करणे ॥ हे षि ॥ औचानपेक्षितकर्म्मणि । सहसैवविभवम् । तत्रभव इत्यण् ॥ धाष्टर्ये

साहसाङ्क । पु॰ विक्रमादित्यभूपतौ ॥ साहसिकि ॥

साहसिक : । पु॰ चौरे । अविचार्यकारिणि ॥ बलेन परदारधनादिग्राहकारिणि ॥ अपराध्नमान कार्यां । यथाहमनु । ऐन्द्रस्थान

त्वचे ॥ हालघीनी॰ छ॰ भा॰ ॥

सिहलस्था । स्त्री॰ सैंहल्याम् ॥ त्रि॰ सिहलदेशवासिनि ॥

सिहलास्थान । पु॰ तालवृक्षसदृशवृक्षविशेषे । पोतफले ॥

सिहलील । पु॰ रतिबन्धविशेषे ॥ यथा । लिङ्गोपरिस्थितानारीभूमौदत्त्वापदद्वयम् हृदयेदत्तहस्ताचसिहलील प्रकीर्त्तित ॥ लिङ्गोपरिस्थितानारीकान्तोरस्थपदद्वया । हृदयेदत्तहस्ताचसिहलीलोप्यसावपि ॥

सिहवाहिनी । स्त्री॰ दुर्गायाम् ॥ यथा । सिहमारुह्यकन्यान्तेनिहतोमहिषोयथा । महिषघ्नीततोदेवीकन्यावैसिहवाहिनी ॥

सिहविक्रान्त । पु॰ अश्वे । हये । त्रि॰ सिहतुल्यविक्रमवति ॥

सिहविन्ना । स्त्री॰ माषपर्ण्याम् ॥

सिंहविलोकितम् । न॰ मात्रावृत्तान्तरे ॥ शृणुसिहविलोकितवृत्तवरं यमकाभरणगणपरधरम् । धरणीपतिमानसमधिकालितच्छलवेदचतुष्कनगणललितम् ॥ यथा । दिवसात्ययसादिततिमिरवनवनजावलिबोधनिसर्गधनम् । धनदेन्दुहुताशनपाणिमितममितस्तु वनतलनमद्दिवसकृतम् ॥ सिहावलोकिते ॥

सिहसंहनन॰ । त्रि॰ वराङ्गरूपोपेते ॥ सिहसंहननसत्यार्थोपिसर्वाङ्गसुन्दरः ॥ सिहस्येवसंहननंदेहोऽस्य । रूढिशब्दोयम् ॥ न॰ सिहस्यसम्यग्वधे ॥

सिहसिन॰ । पु॰ बुद्धार्हत्पितरि ।

सिहा । स्त्री॰ धमन्याम् ॥ नाड्याम् ॥

सिहाणम् । न॰ मण्डूरे । लोहमले ॥ सिहमानयति । अन॰ । कर्म्मण्यण् । पृषोदरादि. ॥

सिंहाधिप । पु॰ सूर्य्ये ॥

सिंहानम् । न॰ मण्डूरे ॥ सिहवदनमिति । अन॰ अच् ॥

सिंहासनम् । न॰ हेममयेराजासने ॥ सिहवदासने ॥ सिहाकारमासनम ॥ सिहस्यासनम्वा ॥ परासनस्थोयेराजायेराजाचनिरासन . सपरैर्हन्यतेसिहैरिवमत्तोगजाधिप. ॥ पु॰ रतिबन्धभेदे । यथा । स्वजङ्घाद्वयवाहूचक्रात्वायेपादद्वयम् । स्तनौधृत्वारमेत्कामीबन्ध सिहासनेमत ॥

सिहास्य । पु॰ वासके ॥ सिहस्याऽस्यमस्य । सिहास्यसदृशपुष्पत्वात् ॥ त्रि॰ सिहसमानमुखे ॥

सिंहिका । स्त्री॰ राहुमातरि ॥ कश्यपस्यगृहिणीतुसिंहिकाराहुवास्तु तनयावजीजनत् । पूर्वजोहरिनिकृत्तकन्धरोदैवतैरवजोनिपातित

सिक्किताभस ः । ) पुं० रार्वीवि
सिक्किताम्नु . । )
भ ग्नुदे ॥ वास्तुप्रुपि ॥

सिक्नो । स्त्री० मात्राप्तत्तान्तरे ॥ यदिगाथातुर्यपद विशतिमात्र यथा विनीभवति । फणिपतिपिङ्गलभ णिततद्विपरीतन्तुं सि क्विनीप्तम् । यथा । पर्याप्ताजलधारोविरमति मचचन्तलोचनेजलधारा । जगमु प्रसाद्माश्चास्तद्पिनमेभवतिजीवि तक्षाशा ॥

सि क्षी । स्त्री० कष्टकार्याम् । वा र्ताकी ॥ वासकी ॥ राङ्गमातरि ॥ क्विनति । क्विसो० पचाद्यच् । पृषोद्रादि । गौरादि ॥ सुवर्णवर्णवराटकी ॥ मुङ्गपर्ण्यां म् ॥

सि क्षीलता । स्त्री० ह्रस्वाम ॥

सि क्षीलता । स्त्री० अर्ध्वोकन्दोभे दे १४ । वसन्ततिलके ।

सिकता । स्त्री० सिकतिसे० देशे ॥ सिकताऽस्त्यस्य । देशेलुबिलचौचे ति० सिकताशर्कराभ्यांसे तिविहि तत्वाद्धोलुप् ॥ रुजि ॥

सिकताः । स्त्री० भूम्नि ॥ वालुका याम् ॥ सिच्यते । सिच्क्षरणे । वाहुकादतच् । पृषोद्रादि ॥

सिकतामयम् । न० वालुकामयदेशे । सैकते ॥ सिकतानांविकारः । मयड्वैतयोर्भाषायामभच्याच्छादन योरितिमयट् ॥

सिकतावान् । त्रि० वालुकावहुलेदेशे सैकते ॥ अश्मप्रायस्दधिके देशे ॥ सिकताऽस्त्यस्य । मतुप् ॥

सिकतिल । त्रि० सिकतावति ॥ सिकताऽस्त्यस्य । देशेलुबिलचौ चेति० इलच् ॥

सिक्त । त्रि० अभिषिक्ते ॥ क्लतसेच ने । सेकाश्रये ॥ सिचि क्त ॥ एकोमुनि कुम्भकुशाग्रहस्तआम्र स्यमूलेसलिलंददाति । आम्रश्चसि क्तः ॥ पितरश्चतृप्ताएकाक्रियाद्व्य र्थकरीप्रसिद्धा ॥

सिक्थ । पु० भक्तपुलाके । ग्रासे ॥ न० मधूच्छिष्टे । मेघ० सिथा० हू० भा० प्र० गोम० द्रूतिच ॥ नो ल्याम् ॥ सिच्यते । सिच्यतेवा । षिच० । पातृतुदिवचिरिचिसिचि भ्यस्थक ॥

सिक्थकम् । न० सिक्थे ॥ स्वार्थेक ॥

सिक्थवर्त्तिका । स्त्री० मधूच्छिष्टव र्त्तिकायाम् । सिक्थदीपे । सिक् थस्यवर्त्तिका ॥

सिङ्घाणम् । न० सिङ्घाणे ॥

सिचा । स्त्री० वस्त्रे ॥

सिचयः । पु० वस्त्रे ॥ जीर्णवस्त्रे ॥

सिध्मन् । त्रि० स्नपयति ॥ षिचेः शतृप्रत्यय ॥

सिञ्चिता। स्त्री॰ पिप्पल्याम् ॥

सित। पु॰ शुक्लपक्षे ॥ अवदाते। गौरवर्णे। बाणे। शरे ॥ न॰ चन्दने ॥ रूप्ये ॥ मूलके ॥ त्रि॰ समाप्ते। अवसिते ॥ शुक्लवर्णविशिष्टे। धवले ॥ बद्धे। बधा॰ कृ॰ भा॰ ॥ ज्ञाते। सोदरेऽस्य। षिञ् बन्धने। क्त। अतिस्य। षो॰ क्त। द्यतिस्यतीत्त्व वा ॥ सिनोतिवा। अस्मिधृषिभ्य क्त ॥ समाप्ते ॥

सितकण्टा। ) सितकण्टारिका ) स्त्री॰ श्वेतकण्टकार्याम् ॥

सितकण्ठ। पुं॰ दात्यूहपक्षिणि ॥

सितकर:। पु॰ चन्द्रे। कर्पूरे ॥

सितकर्णी। स्त्री॰ वासके ॥

सितकुञ्जर:। पुं॰ इन्द्रे ॥ इन्द्रगजे ॥

सितगङ्गा। स्त्री॰ कामरूपप्रसिद्धनदीविशेषे। स्वर्णधायाम् ॥ कू॰ कालिकापुराणम् ॥

सितगुञ्जा। स्त्री॰ श्वेतगुञ्जायाम्। काकपीलौ ॥

सितचिङ्ग। पुं॰ बालुकागडे॰ मत्स्ये ॥

सितच्छत्रम्। न॰ नृपच्छत्रे ॥

सितच्छत्रा। स्त्री॰ शतपुष्पायाम् ॥ सित वद्धधंशुभ्र बाहचमस्ता। ॥

सितच्छत्रित। त्रि॰ श्वेतच्छत्रयुक्ते ॥

सितच्छद। पु॰ हंसे ॥ श्वेतच्छद विशिष्टे ॥ त्रि॰ सिता: शुभ्रा. छदायस्य ॥

सितच्छदा। स्त्री॰ श्वेतदूर्वायाम् ॥

सिततुरग। पु॰ अर्जुनाख्यपाण्डवे ॥

सितदर्भ। पुं॰ श्वेतकुशे ॥

सितदीप्य। पु॰ श्वेतजीरके ॥

सितधातु। पु॰ खटिन्याम् ॥

सितपक्ष। पु॰ हंसे। शुक्लपक्षे ॥ त्रि॰ तद्वति ॥

सितपर्णी। स्त्री॰ अर्कपुष्पिकायाम् ॥

सितपाटलिका। स्त्री॰ काष्ठपाटलायाम् ॥

सितपुङ्खा। स्त्री॰ श्वेतशरपुङ्खायाम् ॥

सितपुष्प:। पु॰ तगरवृक्षे ॥ श्वेतरोहिते ॥ काशे ॥ न॰ कैवर्तीमुस्तके ॥

सितपुष्पा। स्त्री॰ मल्लिकायाम् ॥

सितपुष्पी। स्त्री॰ श्वेतापराजितायाम् ॥ नागदन्त्याम् ॥

सितमरिचम्। न॰ शिग्रुबीजे ॥ शुभ्रमरिचे ॥

सितमाष। पुं॰ राजमाषे ॥

सितरञ्जन:। पु॰ पीतवर्णे ॥

सितरश्मि:। पु॰ चन्द्रे ॥

सितवर्णाभू। पुं॰ पुनर्नवायाम् ॥

सितवाजी । पुं॰ अर्जुने ॥

सितशिंशपा । स्त्री॰ श्वेतशिंशपायाम् ॥

सितशिम्बिक : पु॰ गोधूमे ॥

सितशूरण । पु॰ वनजीर्णे ॥

सितसर्षप । पु॰ रक्तोन्ने । सिद्धार्थे ॥

सितसायका । स्त्री॰ श्वेतशरपुङ्खायाम् ॥

सितसार । पुं॰ शालिञ्चशाके ॥

सितसारक । पु॰ तिन्दुके ॥ शालिञ्चे ॥

सितसिंही । स्त्री॰ श्वेतकण्टकार्याम् ॥

सितसिन्धु । स्त्री॰ गङ्गायाम् ॥

सिता । स्त्री॰ शर्करायाम् ॥ सिनोति । षिञ् बन्धने । अञ्जिसृभ्य क्त । टाप् । शुभ्रवर्णत्वाद्वा ॥ खण्डन्तु सिकताकार सुश्वेत शर्करा सिता । सितासुमधुरारुच्यावात पित्तास्रदाहहृत् ॥ मूर्च्छाछर्दिज्वरातृड्घ्नीसुशीताशुक्रकारिणी ॥ मल्लाम ॥ तेजन्याम ॥ जपायाम् ॥ गिरिजातापराजितायाम ॥ वाकुच्याम् ॥ आयमाणायाम् ॥ मद्ये ॥ पिङ्गायाम् ॥ विदार्याम् ॥ सितकण्टकार्याम् ॥ श्वेतदूर्वायाम ॥ चन्द्रिकायाम् ॥ कुटुम्बिन्याम् ॥ गङ्गायाम् ॥

सितांशु । पु॰ चन्द्रे ॥ कर्पूरे ॥

सितांशुतैलम् । न॰ कर्पूरतैले ॥

सिताखण्ड । पु॰ मधुशर्करायाम् ॥

सिताङ्क । पु॰ वालुकागडमत्स्ये ॥

सिताङ्ग । पुं॰ श्वेतरोहिते ॥

सिताजाजी । स्त्री॰ श्वेतजीरके ।

सितादि । पु॰ गुडे ॥ सिताया आदि ॥

सितानन । पुं॰ गरुडे ॥

सितापाङ्ग । पु॰ मयूरे ॥

सिताब्जम् । न॰ श्वेतकमले ॥

सिताभ । पु॰ कर्पूरे ॥

सिताभ्र पु॰ हिमवालुकायाम् । कर्पूरे ॥ सित श्वेत्य॰ वन्धन वा॰ चन्द्र वा॰ अभ्रति । अभ्रगतौ । कर्मण्यण् ॥ शुक्लत्वात् । सिताभ्रमिववा ॥

सिताभ्रकम् । न॰ कर्पूरे ॥

सिताम्बर । पु॰ श्वेतवस्त्रपरिहितव्रतिनि ॥ त्रि॰ शुक्लवस्त्रवति ॥

सिताम्भोजम् । न॰ शुक्लपद्मे । पुण्डरीके ॥ सित शुक्लञ्चतदम्भोजञ्च ॥

सितार्जक । पु॰ श्वेततुलस्याम् कुठेरके ॥

सितालता । स्त्री॰ श्वेतदूर्वायाम् ॥

सितालर्क । पु॰ श्वेतमन्दारे ॥

सिताखिकटभी । स्त्री॰ शुक्लकिणही हर्षे ॥

सितांबर । पुं॰ सूचीपचकी । श्री बारकी । सितिश्वाराद्भुतिख्यातिशाखि । सुनिषखे ॥

सितावरी । स्त्री॰ वाकुच्याम् ॥

सितासित । पुं॰ बलभद्रे । इला युधे ॥

सिताह्वय । पुं॰ श्वेतशिग्रौ ॥ श्वे तरोहिते ॥

सितेषु । पुं॰ श्वेतैषौ ॥

सितेतरः । पुं॰ कृष्णशाली ॥ कु लत्थे ॥ कृष्णे ॥ त्रि॰ कृष्णवर्ण वति ॥

सितेतरगति । पुं॰ वह्नौ ॥

सितोद । पुं॰ सरोविशेषे ॥ वि पुलाख्यस्याद्रेर्मूर्द्धैभाजाख्यवनत वसितोदकनामसर॰ यदर्कभा न्तिभिरब्जैर्मण्डितसुरैरासेव्यते । तदुक्तम् । वैभाजंवैपुलेमूर्धिसितो दश्चकदोत्तम । देवैर्निषेव्यतेच न्न वामलैरमृतप्रभैरिति ॥ सि तमुदकमस्य । उत्तरपदस्येत्युद काणोदादेश ॥

सितोदक । पुं॰ सिते दे ॥ स्वा र्थेक ॥

सितोदर । पुं॰ कुबेरे ॥

सितोपल । पुं॰ स्फटिके ॥ खि काधातौ ॥ सितास्मनि । मि

श्री॰ चीला॰ कू॰ भाषाप्रसिद्धा ॥

सितोपला । स्त्री॰ शर्करायाम् ॥ शर्कराविकारभेदे । मिश्रीतिलो कप्रसिद्धे ॥ सितोपलासरालघ्वी- वातपित्तहरीहिमा । यथायथाहि नैर्मल्यमधुरत्वंतथातथा ॥ स्नेह लाघवशैत्यानिसरत्वञ्चतथातथा ॥

सिद्ध । पुं॰ व्यासादौ ॥ देवयोनि विशेषे । अणिमादिगुणोपेतेवि श्वावसुप्रभृतौ ॥ विष्कभादियो गान्तरगतयोगविशेषे ॥ तज्जात स्फलयथा । जितेन्द्रिय॰ सर्व कला । निधानोगौरोतिसुरोमधुरो विनीत । सत्योपपन्न कृतभू रिभोगोयत्प्रसूतौकिलसिद्धयोग । इति ॥ गुडे असेधीत् । इति सिद्ध॰ षिधुहिंसासराद्ध्यो॰ । ग त्यर्थाकर्मकेतिकर्त्तरिक्त॰ । सि ध्यतिस्मेति वा । अच् आद्यच् ॥ कृष्णधत्तूरे ॥ व्यवहारे ॥ रे । शब्दशृणोमीत्यादिव्यवहारेप्रसि द्धे । न॰ सैन्धवलवणे ॥ त्रि॰ योगिनि ॥ जन्मनैवविनाप्रय त्नंधर्मज्ञानवैराग्यैश्वर्यातिशय प्राप्ते ॥ पूर्णमनोरथे ॥ अधिग तपरमार्थे । पुष्पभृत्यादिभि सहाये । सम्पन्ने ॥ प्रसिद्धे ॥ नित्ये ॥ यथासिद्धधातौ॰ सौद्ध धापृथिवी॰ सिद्धमाकाशमिति

॥ कार्येष्वपि मत्तते । तथा सिद्धौदनः सिद्धः सूपः सिद्धोऽयं वागिति ॥ मुक्ते ॥ नित्ये । पक्वे ॥ सिद्धतिस्म । सिद्धसरादुधौ । ता ॥ सिद्धि साधनाप्रयोग ॥ सर्वभूताद्यैश्वाधिष्ठाने परमेश्वरे ॥ उत्पत्त्या सत्त्वात्मकाश्च घटादि सिद्धमित्युच्यते । परमात्मा तु सर्वदा सत्त्वस्तत्त्वात्मकप्रमाणाभावादिति नित्यनिष्पन्नरूपत्वान्नित्यसिद्ध उच्यते ॥ सिद्धिर्मोक्षोऽज्ञानतादुभयमीश्वरस्यास्त सिद्धत्वमन्याधीनसिद्धत्वात् सिद्धो वा ॥ सिद्धिविशिष्टे ॥

सिद्धक । पु० शालवृक्षे ॥ सिन्धुवारे ॥

सिद्धकामेश्वरी । स्त्री० कामाख्याया पञ्चमूर्त्यन्तर्गतप्रथममूर्त्तौ ॥

सिद्धकोरल । पुं० कोरलदेशान्तर्गतदेशविशेषे ॥

सिद्धगङ्गा । स्त्री० मन्दाकिन्याम् ॥

सिद्धजलम् । न० काञ्जिके । पक्वतोये ।

सिद्धदेव । पुं० शिवे ।

सिद्धधातु । पु० पारदे ॥

सिद्धपीठ । पु० सिद्धस्थाने ॥ यथा । कामाख्यावलियं दृष्टोमेधा कोटिसङ्ख्यया । महाविद्याश्च कोटि सिद्धपीठ प्रकीर्त्तितः ॥

सिद्धपुरम् । न० भूगोलस्थानविशेषे । तत्त्वोत्तरकुरुवर्षस्य निरक्षदेशस्थिते ॥ यथा । लङ्काकुमध्ये यमकोटिरस्याः प्राक्पश्चिमे रोमकपत्तनञ्च । अधस्ततः सिद्धपुरं सुमेरुः सौम्येऽथ याम्ये वडवानलश्च ॥ कुवृत्तपादान्तरितानि तानि स्थानानि षड्गोलविदो वदन्ति ॥

सिद्धपुरी । स्त्री० सिद्धपुरे ॥

सिद्धपुष्प । पु० करवीरवृक्षे ॥

सिद्धप्रयोजन । पु० गौरसर्षपे ॥ त्रि० लब्धकार्ये ॥ सिद्धप्रयोजनं येन यस्य वा ॥

सिद्धमन्त्र । पु० सिद्धिप्राप्तमन्त्रे ॥

सिद्धमोदक । पु० तवराजीक्षुखण्डे ॥

सिद्धयोगिनी । स्त्री० योगिनीविशेषे ।

सिद्धरस । पु० पारदे । रसे । त्रि० व्याडिप्रभृतिषु । सिद्धधातुरसेषु ॥ सिद्धो रसो येषाम् ॥

सिद्धविद्या । स्त्री० दुर्गायाम् ॥ महाविद्यायां ॥

सिद्धसङ्घ । पु० कपिलादिसिद्धानां समूहे ॥

सिद्धसलिलम् । न० काञ्जिके ॥

सिद्धसाधन । पु० गौरसर्षपे । न० सिद्धस्य वस्तुनः साधने । सा

ध्यवस्थानिश्चयेसर्व्वेप्यनुमाने ॥

सिद्धसिन्धु । स्त्री॰ स्वर्गङ्गायाम् । गङ्गायाम । आकाशगङ्गायाम् ॥ सिद्धानांसिन्धु ॥

सिद्धसेन । पु॰ कार्त्तिकेये ॥

सिद्धसेवित । पु॰ भैरवे ॥ त्रि॰ कपिलादिसिद्धोपासिते ॥

सिद्धा । स्त्री॰ ऋद्ध्याख्यौषधौ ॥ सिद्धिरस्त्यस्याम् । अर्श आद्यच् टाप ॥ योगिनीविशेषे ॥

सिद्धान्तः । पु॰ वस्तुतात्पर्यविषयावधारणे ॥ पूर्वपक्ष निरस्य सिद्धपक्षस्थापने । वादिप्रतिवादिभ्यां निर्णीतेर्थे ॥ सिद्धान्तं लक्षयति गौतमोयथा । तन्त्राधिकरणाभ्युपगमसंस्थिति सिद्धान्तइति ॥ अस्यार्थ । तन्त्र शास्त्र तदेवाधिकरणम्आपकतयायस्य॰ तादृशोयोभ्युपगम॰ तस्यसमीचीनतयाऽसंशयरूपतयास्थिति॰ तथाचशास्त्रितार्थनिश्चय सिद्धान्त. । अत्र चाभ्युपगम्यमानोर्थ सिद्धान्तइति भाष्यम् । अभ्युपगमं सिद्धान्तइति वार्त्तिकटीका । नचानयोर्विरोध शङ्कनीय । आचार्यैं परिहृतत्वात् । तथाचविसूत्रीनिबन्ध । अर्थाभ्युपगमयोर्गुणप्रधानभावस्याविवक्षितत्वात्॰ अर्थोभ्युपगमोऽभ्युपगम्यमानोवार्थ. सिद्धान्त॰ इ नसूत्रभाष्यवार्त्तिकटीकासुनविरोध । अत्रचभाष्यानुसारात्सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगम सिद्धान्तान्तरम . सिद्धान्तइति सूत्रार्थइतितुनयुक्तम अविमसूत्रानुत्थानापत्ते । तंत्रसिद्धान्तत्वेनहयमनुगम्यतत्राधिकरणाभ्युपगमान्यतमसिद्धान्तइतिकश्चित् ॥ २६ ॥ सिद्धान्त विभजते । सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थितीनामर्थान्तरभावात् ॥ २७ ॥ सचतुर्विधइतिशेष । सर्वतन्त्रादिसंस्थितीनामर्थान्तभावात्॰ भेदादित्यर्थ . ॥ २७ ॥ राद्धान्ते ॥ सिद्धोऽन्तोनिश्चयोयस्मिन् ॥ मः विधज्योतिर्ग्रन्थेषु । ब्रह्मसूर्यसोमबृहस्पतिगर्गनारदपराशरपुलस्त्यवशिष्ठसिद्धान्तेषु ॥

सिद्धान्ताचारः । पु॰ वामाचारादुत्तमआचारविशेषे ॥ यथा । आत्मानन्दैवतामस्वायजेद्दैविस्वमानसे । सदाशुद्ध सदाशान्त सिद्धान्ताचारउच्यते॰ इत्याचारभेदतन्त्रम् ॥

सिद्धान्ती । पुं॰ मीमांसके ॥ सिद्धान्तोविद्यतेऽस्य ॥ इनि ॥

सिद्धापगा । स्त्री॰ स्वर्गङ्गायाम् । गङ्गायाम् ॥

सिद्धायिका । स्त्री॰ जिनशासनदेव

ताविशेषे ॥

सिद्धार्थः । पुं॰ विष्णौ ॥ सिद्धो निर्वृत्तो निष्पन्नः काम्यमानोऽर्थोऽस्य । आप्तकामत्वादिति ॥ रचोघ्ने । सितसर्षपे ॥ शाक्यसिंहे । शौद्धोदनौ ॥ हस्तार्हत्पितरि ॥ जिनमहारिष्टौवर्षे ॥ सिद्धार्थोऽस्यास्ति ॥ वत्सरविशेषे । तत्फलं यथा । तोयपूर्णा स्मृता मेघा बहुसस्या च मेदिनी । निष्ठुरा पार्थिवा देवि सिद्धार्थे वत्सरानने ॥ ५२ ॥ त्रि॰ प्रसिद्धार्थे ॥

सिद्धार्था । स्त्री॰ हस्तार्हन्मातरि ॥

सिद्धासनम् । न॰ ब्रह्मणि ॥ सिद्धस्य तत्सर्वभूतादिविश्वाधिष्ठानमव्ययम् । यस्मिन्सिद्धा समाविष्टास्तद्वै सिद्धासनं विदुः ॥ सिद्धस्य तदासनञ्च । सिद्धानामासनं वा । कर्मधारयतत्पुरुषाभ्याम्॰ ब्रह्मवैवर्त्त॰ ॥ योगिनामासनविशेषे ॥ यथा । योनिस्थानकमङ्घ्रिमूलघटितं कृत्वा दृढं विन्यसेन्मेढ्रे पादमथैकमेव हृदये कृत्वा समं विग्रहम् । स्थाणुः संयमितेन्द्रियोऽचलदृशा पश्यन् भ्रुवोरन्तरे तिष्ठेदेतदतीव योगिसुखदं सिद्धासनं प्रोच्यते॰ इति ॥ योनिस्थानकमिति ॥ एकपादमूलालङ्कमूले॰ द्वितीयपादमूलञ्च धृत्यर्थः ॥

सिद्धिः । स्त्री॰ निष्पत्तौ ॥ पादुकायाम् ॥ अन्तर्द्धौ ॥ वृद्धौ ॥ ऋद्धिनामौषधौ ॥ दुर्गायाम् ॥ सम्पत्तौ ॥ योगे ॥ साङ्ख्यानामष्टविधसिद्धौ । यथा ॥ ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः । दानञ्च सिद्धयोऽष्टौ । विहन्यमानकुःखत्रैविध्यात्तद्विघातास्त्रय इति । अमामुख्यास्तिस्रः सिद्धयः । तदुपायतयेतरा गौण्यः । पञ्च सिद्धयः । तास्वपि हेतुहेतुमत्तया व्यवस्थिताः । तत्राध्ययनलक्षणा सिद्धिर्हेतुरेव । मुख्यास्तु हेतुमत्य एव । मध्यमास्तु हेतुहेतुमत्यः ॥ पुष्यसत्त्यादिविषया बुद्धिर्या सिद्धिरसा । पु॰ स्थानमिति॰ प्रकृताऽव्यक्तम्॰ आदिग्रहणात्॰ व्यक्तं च यया बुद्धिर्विज्ञानसा सिद्धिरित्युच्यते ॥ शारदायोगान्तरे ॥ यथावर्गी समगतेलग्ने शुभे वा यमलान्विते । सिद्धिसञ्ज्ञो महायोगो यायिनां सिद्धिदायकः । इति ॥ राज्ञां मन्त्रवसाध्यासु पुरुषार्थलाभात्मिकासु॰ प्रभुसिद्धिमन्त्रसिद्ध्युत्साहसिद्धिषु ॥ सहाया. साधनोपाया विभागो देशकालयोः. विनिपातप्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते ॥ तथाच। कर्मणामारम्भोपायः । पुरुषद्रव्यसम्पत् । देशकालविभागः । विनिपातप्र

संकाशेतिनिशातशन ॥ काण्डे ॥ सिनोति । षिञ् । बन्धने । शुक्लगुणविशिष्टे । तिलक ॥ त्रि० शुक्लगुणविशिष्टे ।

सिनी । स्त्री० शुक्लगुणवत्याम् । श्वेतासितासिनीश्येनीतिव्याडि ॥

सिनीवाली । स्त्री० दृष्टेन्दुकलामावास्याम् ॥ चतुर्दशीयोगाद्दृष्टचन्द्रा सती० अमा० सिनी० वालीपदवाच्या भवति । एनविष्णुनोसह च संतैसालक्ष्मी । तद्योगात्सिनीचन्द्रकला । श्रीत्वादित्यादिनि । सिनीवलति । बल० । कर्मण्यण् । ङीप् ॥ दुर्गायाम् । इ० मे० नी० ॥

सिन्दुक पु० । सिन्दुवारे ॥ स्यन्दते । स्यन्दूप्रस्रवणे । स्यन्दे सम्प्रसारणञ्चेत्यु । बाहुलकात्पधोन । स्वार्थेसञ्ज्ञायांवाकन् ॥ श्वेतनीलपुष्पभेदात्सिन्दुको द्विविधोमत ।

सिन्दुवारः । पुं० निर्गुण्ड्याम् । सिन्दुके । म्योंडी० सम्हालू० बङ्गभा० इ० भा० प्र० ॥ निसिन्दा० नुनकर० इ० गौ० दे० भा० ॥ सिन्दुकमेति० वारयति वा । रयोरनजनादरयेवा । कर्मण्यण् ।

सिन्दूर । पुं० वृक्षविशेषे ॥ न० रक्तवर्णचूर्णविशेषे । नागसम्भवे । सीमन्तके ॥ तद्धारणात्खाम्यायुषोडशविभववतिसयोक्तं कालीखण्डे । हरिद्राकुङ्कुमञ्चैवसिन्दूरकज्जलं तथा । कूर्पासकञ्चताम्बूलमाङ्गल्याभरणंशुभम् ॥ केशसंस्कारकबरीकरकर्णविभूषणम् । भर्तुरायुष्यमिच्छन्तीदूषयेन्न पतिव्रतेति ॥ अस्यपर्यायादयोयथा । सिन्दूररक्तरेणुश्चनागगर्भञ्चसीसजम् । सीसोपधातुः सिन्दूरगुणैस्तत्सीससम्मतम् ॥ संयोगजप्रभावेणतस्याप्यन्येगुणाः स्मृताः । सिन्दूरमुष्णं वीसर्पकुष्ठकण्डूविषापहम् ॥ भग्नसन्धानजननं व्रणशोधनरोपणम् ॥ अस्यशोधनं यथा । दुग्धाब्धियोगतस्तस्यविशुद्धिर्गदिताबुधैरिति ॥ स्यन्दते । स्यन्दू० । स्यन्देः सम्प्रसारणञ्चेत्यूरन् ॥

सिन्दूरकारणम् । न० सीसके ॥

सिन्दूरतिलक । पु० मतङ्गजे । हस्तिनि ॥

सिन्दूरतिलका । स्त्री० सधवायांनार्य्याम् ॥

सिन्दूरपुष्पी । स्त्री० सिन्दूरीतिख्याते पुष्पवृक्षविशेषे । वृक्षपुष्प्याम् । शरपुङ्खायाम् ॥ अस्यागुणाः । कटुत्वम् । तिक्तत्वम् । कषायत्वम् । श्लेष्मवातशिरोर्त्तिभूतनाशित्वम् । चाक्षोप्रियत्वञ्चेति ॥ सिन्दूरवृक्षपुष्पादयोऽपि । प्राकवर्णेतिक्तोम् ।

सिन्दूररस । पुं० रससिन्दूराभिधौषधे ॥

सिन्दूरित । त्रि० सिन्दूरवत्कृते ॥ सिन्दूरवच्छब्दात् तत्करोतीति व्यन्तात् कर्म्मणि क्त । यात्विष्टवज्ञाया त्रु० विन्मतोर्लुक् ॥

सिन्दूरी । स्त्री० रोचन्याम् ॥ रक्तचेलिकायाम् ॥ धातक्याम् ॥ सिन्दूरी विषपित्तास्रतृष्णावान्तिहरी हिमा ॥

सिन्धु । पुं० अब्धौ । समुद्रे ॥ स्यन्दते ॰ आपोऽत्र । स्यन्द ॰ । स्यन्देः सम्प्रसारणं धश्चेत्यु ॥ वमथौ ॥ रामेयभरतायार्पितदेशविशेषे ॥ काश्मीरदेशप्रसिद्धे नदविशेषे ॥ गजमदे ॥ सिन्धुवारवृक्षे ॥ रागविशेषे ॥ श्वेतटङ्कणे ॥

सिन्धु । स्त्री० नद्याम् । सरिति ॥ नदीविशेषे ॥ तज्जलगुणा यथा । शतद्रोर्विपाशायुक्सिन्धुनद्याः सुशीत लघुस्वादु सर्वामयघ्नम् । जलं निर्मलं दीपनं पाचनञ्च प्रदत्ते बलं बुद्धिमेधायुरञ्च ॥

सिन्धुक । पुं० सिन्दुके । निर्गुण्ड्याम् ॥ सिन्धुशब्दात् स्वार्थे संज्ञायां वा कन् । गुणा यथा । सिन्धुकः स्मृतिदस्तिक्तः कषायः कटुको लघुः । केश्योनेत्रहितोहन्ति शूलशोथाममारुतान् ॥ क्रिमिकुष्ठारु

चिश्लेष्मज्वराश्विलापित्तविधा ॥ सिन्धुवारजलजन्तुवातश्लेष्मदरवह्नु ॥ त्रि० सिन्धुजाते ॥ सिन्धूपकराध्याक्षम् ॥

सिन्धुकफ । पुं० समुद्रफेने ॥

सिन्धुप्रभव । पुं० तीर्थविशेषे ॥

सिन्धुरम् । न० श्वेतटङ्कणे ॥

सिन्धुखिल । पुं० सिन्धुदेशे ॥

सिन्धुज । न० सैन्धवलवणे ॥ सिन्धुजातम् ॥ सप्तम्यांजनेर्डः ॥ त्रि० समुद्रजाते ॥

सिन्धुजन्मा । पुं० चन्द्रे ॥ न० सैन्धवलवणे ॥

सिन्धुजा । स्त्री० लक्ष्म्याम् ॥

सिन्धुडा । स्त्री० मालवरागभार्य्यायाम् ॥

सिन्धुनन्दन । चन्द्रे ॥

सिन्धुपुत्र । पुं० चन्द्रे ॥ मर्कटेन्दौ ॥

सिन्धुपुष्पः । पुं० शङ्खे ॥

सिन्धुमन्थजम् । न० सैन्धवलवणे ॥

सिन्धुर । पुं० हस्तिनि ॥

सिन्धुरद्वेषी । पुं० सिंहे ॥

सिन्धुरवदन । पुं० श्रीगणेशे ॥

सिन्धुराज । पुं० समुद्रे ॥

सिन्धुलवणम् । न० सैन्धवे ॥

सिन्धुवार । पुं० उत्तमाश्वे ॥ सिन्धुवारे । निर्गुण्ड्याम् ॥ सिन्धुवारोऽश्विवस्त्रं मत्रणकुष्ठक्षयापहः ॥ सिन्धुवारोति॰ वारयतिवा । इञ्

चाच्छादनेशा । चमंख्याच ॥

सिन्धुवारक । पु॰ सिन्धुवारे ॥

सिन्धुवारित । पुं॰ सिन्धुवारे ॥ त्रि॰ समुद्रेणवारिते ॥

सिन्धुवेषण । पु॰ गम्भार्याम् ॥

सिन्धुसङ्गम । पुं॰ समेदे । सिन्ध्वोः सङ्गमेमेले ॥

सिन्धूत्तमम् । न॰ तीर्थभेदे ॥

सिन्धूद्भवम् । न॰ सैन्धवलवणे । सिन्धुप्रभवोऽस्य ॥

सिन्धूपलम् । न॰ सैन्धवलवणे ॥

सिप्र । पु॰ चन्द्रे । हिमाग्नौ ॥ निदाघसलिले । स्वेदे ॥ न॰ सरोविशेषे ॥ यथोक्तङ्कालिकापुराणे । ततोहिमवतः प्रस्थे प्रतीच्यन्तु पुरस्थच । सिप्रनामसरः पूर्णं दृष्टशुद्धस्फटिकोपमम् (?)सिप्रादयक्षति ॥

सिप्रा । स्त्री॰ नद्यन्तरे ॥ सिप्राख्यात्सरसोयस्मान्निर्गतासामहानदी । अत सिप्रेतितन्नामपुरैवब्रह्मणाकृतमितिकालिकापुराणम् ॥ साचोज्जयिनीदेशेवर्त्तते । तस्याश्चोत्पत्तिः कालिकापुराणे २३ अध्यायेद्रष्टव्या ॥

सिम । त्रि॰ समस्मिन् । सर्वशब्दार्थे ॥ सिनोति । षिञ्॰ । चक्रिसिमुषिभ्य । क्मिदितिमन् ॥

सिम्बा । स्त्री॰ शम्याम् । शिम्बायाम् । बीजगुप्तायाम् ॥ राज॰ द्र॰ भा॰ प्र॰ ॥ फली॰ द्र॰ प्र॰ च ॥ समति । षमवैक्लव्ये । उलुल्वादय इतिसाधु ॥

सिम्बि । स्त्री॰ शिम्बायाम् । सिम्बायाम् ॥ नखनामगन्धद्रव्ये ॥

सिम्बी । स्त्री॰ शिम्ब्याम् ॥

सिर । पुं॰ पिप्पलीमूले ॥

सिरा । स्त्री॰ नाड्याम् । अम्बुवाहिन्यांनाड्याम् । सौर॰ द्र॰ भा॰ प्र॰ सिनोति । षिञ् । बहुलमन्यत्रापीतिरक् ॥

सिराल । पु॰ सिरासन्तते ॥

सिरिण्टिका । स्त्री॰ चन्द्रकण्टकिन्याम् अयञ्चपि । दुराधर्षायाम् ॥

सिलक । पु॰ मलावतीपक्ष्य॰ ऋषिविशेषे ॥

सिल्लकी । स्त्री॰ शल्लकीवृक्षे ॥

सिषाधयिषा । स्त्री॰ साधनेच्छायाम ॥ यथा । सिषाधयिषयाशून्यासिद्धिर्यत्रविद्यते । सपक्षस्तत्रहेत्वस्मानादनुमितिर्भवेत् ॥

सिषिचा । स्त्री॰ सेक्तुमिच्छायाम् ॥

सिसृक्षन् । त्रि॰ स्रष्टुमिच्छति ॥

सिह्लुण्ड । पु॰ स्नुहीवृक्षे ॥ सोतिहुण्डते । हुडिवरणे । पचाद्यच ॥ सिह्लुण्डस्याप्यमपभ्र शत्वेसामो॰ वृषोदरादि ॥ अस्य गुणायथा । सिह्लुण्डोरेचनस्तीक्ष्णोदीपनः कटुकोगुरुः । शूलामाष्ठी

लिङ्गाध्मानकफगुल्मोदरानिलान् उन्मादमेहकुष्ठार्शः शोथमेदोऽश्म पाण्डुता । अथशोथज्वरश्लीहविष दूषीविषहरेत् ॥ उष्णवीर्यम् शीघ्रो रक्तिग्धम्लकटुकलघु । गुल्मिना ञ्कुष्ठिनाह्वापितर्थ वैदूररोगिणा म् ॥ हितमेलविरेकार्थे येचान्ये दो षरोगिणः ॥

सिहुण्डदलम् । न० स्नुहीपत्रे ॥ तत्पत्रगुणायथा । सिहुण्डस्यद लन्तीक्ष्णंदीपन रेचन हरेत् । आ ध्मानाष्ठीलिकागुल्मशूलशोथोदरा णिच ॥

सिह्ल । पुं० तुरुष्कें । पिण्डकें । यावने । लोबान० इ० भा० प्र० ॥ स्निह्यति । स्निहप्रीतौ । घ ञर्भावितप्राक्षर्थः । बाहुलकात् । पृषोदरादि० ॥

सिह्लक । पुं० सिह्ले । नागौरी गूद० इ० भा० लोबान० इ० य वनभाषाप्रसिद्धे ॥ सिह्लक कटु कः स्वादुस्निग्धोष्ण . शुक्रकान्ति कृत् । वृष्य : कण्डूस्वेदकुष्ठज्वर दाहग्रहापह . ॥

सिह्लकी । स्त्री० सल्लक्याम् ॥ सि ल्हे ॥

सिह्लभूमिका । स्त्री० शल्लक्याम् ॥

सिह्लसारः । पुं० तुरुष्के । धूम्र वर्णे । पीतसारे ॥

सीकर । पुं० शीकरे ॥ धनपाला दिमतेदन्त्यादि ॥

सीता । स्त्री० लाङ्गलपद्धतौ । हल रेखायाम् ॥ जनकनन्दिन्याम् । मैथिल्याम् । वैदेह्याम ॥ सीता लाङ्गलपद्धति । तदुत्पन्नत्वात्सी तेतिनिर्दिश्यते ॥ यथा । अथमे कृषत श्च लाङ्गलादुत्थितातत । क्षेत्र शोधयतालब्धानाम्नासीतेति विश्रुतेतिरामायणे ६६ सर्ग ॥ स्वर्गगङ्गायाम् ॥ यथा । पूर्वेणमे लात्सीतातुशैल याच्छन्तरिक्षगा । ततस्र पूर्ववर्षं यभद्राश्वेनैतिसार्णं वम् ॥ सातुभद्राश्ववर्षगङ्गा । य थोक्तं श्रीभागवते ; सीतातुब्रह्मस दनात्केशवाचलादिगिरिशिखरेभ्यो ऽधोऽध प्रसवन्तीगन्धमादनमूर्ध सुपतित्वान्तरेणभद्राश्ववर्षं प्राच्या दिशिक्षारसमुद्रमभिप्रविशतीति ॥ श्रियि ॥ दुर्गायाम् । सत्वाधि देव तायाम् ॥ मदिरायाम् । गङ्गास्रोत सि । काञ्चनमालायाम् ॥ सीयते । षिञ्० । क्त . । पृषोदरादि . ॥

सीताद्रव्यम् । न० कापदकुद्दालादौ ॥

सीतापति । ) पुं० रामचन्द्रे दा
सीतायाः पतिः । ) शरथौ ॥

सीत्कारः । पु० मनुष्याणांसुखानुरा गजशब्दे ॥ यथा । मन्दोगुणानु

रागीत्य । प्रयाद् : सीत्कृत नृपा मितिहेमचन्द्र. ।। दन्तनिष्पीडना यां । सीरितिशब्दे ।।

सीत्कृतम । न० सीत्कारेसुरतध्व नौ ।।

सीत्यम् । न० धान्ये ।। त्रि० हल्ये । हलेनकृष्टेचेत्रे ।। सीतयासमित • सङ्गत • निर्मोन्नतादिरहितङ्कृत • समीकृतमितियावत् । गौ ययोधर्मेतियत् ।।

सीदमान । त्रि० अवसीदति ।।

सीद्यम् । न० आलस्ये ।।

सीधु. । पु० शीधुशब्दार्थे ।।

सीधुगन्ध. । पुं० वकुले ॥

सीधुपुष्प । पुं० कदम्बे ।। वकुले ॥

सीधुपुष्पी स्त्री० धातक्याम् ॥

सीधुरस । पु० आम्रवृक्षे ॥

सीधुसञ्ज्ञ : । पु० वकुलद्रुमे ॥

सीप । पु • तपंणाद्यर्थंताम्रादिनि र्मितेजलपात्रे । अर्घा० कोषा० इ० भा० प्र० ॥

सीम् । अ० सर्वतोभवे ।।

सीमा । स्त्री० आघाटे । मर्यादायाम् । सीमायाम् । ग्रामादीनामवधारितांशभागे । सीम० इ० भा० प्र० ।। स्थितौ ।। चेत्रे । अण्डकोषे ।। सीयते । षिञ • । नामन्सीमन्नि त्यादिनानिपातित. । मनन्तिन ङीप् । सीमानौ० सीमान : • इत्यादि ॥

सीमन्त । पु० सीमन्तोन्नयनसंस्कारे ।। पु • न० केशवेशे । केशरच नाभेदे ।। केशेषुवर्त्मनि । मूर्द्धज मध्यपद्धतौ ।। सीमन्तमस्त्रियांखी याकेशमध्येतुपद्धतिरितिवैजय न्ती । सीम्नोऽन्त । शकन्ध्वादि ।

सीमन्तक. । पु० नरकावासे । यथा । अष्टपञ्चनरकावासा . सीमन्त काद्यश्च० हेमचन्द्र : । न० सि न्दूरे ।

सीमन्तित । त्रि० सीमन्तितोकृते ॥ सीमन्तशब्दात्तत्करोतीतिण्यन्तात्कर्म्मणिक्त. । आ विष्कृतश्चैव० विभ्रमैरालुका ॥

सीमन्तिनी । स्त्री० नार्य्याम् ॥ सो मन्तोऽस्त्यस्या । अतइनि । ना न्तत्वात्ङीप् ।

सीमन्तोन्नयनम् । न० गर्भाधानात् • षष्ठेऽष्टमेवामासिकर्त्तव्ये • संस्का रविशेषे ॥ यथा । मासिषष्ठेऽष्टमेवा पिकुर्य्यात्पुंसवनादिवै । दितौचोन्ने तियोकुर्यात्सीमन्तोन्नयनक्रियां ॥

सीमा । स्त्री • आघाटे । मर्यादायाम । सीमनि । ग्रामादीनामवधारितांशभागे । सीम० इ० भा० प्र० ॥ स्थितौ ॥ चेत्रे । अण्डकोषे ॥ स्त्रि योति० सीयतेवा । षिञ् • । ना मन्सीमन्नित्यादिनानिपातित .

मनङ्कतिनङीप । ङाबुभाभ्यामिति पक्षे ङाप् । सीमे॰ सीमा ॰ डू
भ्यान्दिवेध्यम् ॥ वेलायाम् ॥

सीमाविवाद । पु॰ ग्रामादीनां सीमाविषयके कलहे ॥ सीमाविषयको विवादः सीमाविवादः । सीमा चतुर्विधा । जनपदसीमा॰ ग्रामसीमा॰ क्षेत्रसीमा॰ गृहसीमेति भेदात् ॥

सीमिक । पु॰ वृक्षविशेषे ॥ वाल्मीके ॥ सूक्ष्मकृमिजातौ । वृक्षपत्रविभागकृतिकीटे ॥ स्यमति । स्यमुशब्दे । स्यमे सम्प्रसारणञ्चेति किकन् ॥

सीर । पु॰ अर्के । सूर्ये । हले । लाङ्गले ॥ सिनोति॰ सीयते वा । षिञ्॰ । शुसिचिमीनां दीर्घश्चेति॰ क्रन्॰ दीर्घत्वञ्च ॥

सीरक । पु॰ शिशुमारे ॥ अर्के ॥ हले ॥

सीरध्वज । पुं॰ चन्द्रवंशीयनृपविशेषे ॥

सीरपाणि । पुं॰ बलभद्रे । कालिन्दीभेदने ॥ सीरो लाङ्गलं पाणावस्य ॥

सीराङ्गम् । न॰ कालाधारे ॥

सीरी । पुं॰ बलदेवे ॥

सीलम्ब । पुं॰ मत्स्यविशेषे । सिलिन्दा॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ तद्गुणा यथा । सीलम्बः श्लेष्म लो वृष्यो विपाके मधुरो गुरुः । वातपित्तहरो हृद्य आमवातकरस्तथा ॥

सीवनम् । न॰ सेवने । स्यूतौ । तुन्नवायकर्मणि । सीवना॰ इ॰ भा॰ ॥ षिवुतन्तुसन्ताने । ल्युट् पृषोदरादित्वाद्दीर्घः ॥ षिवुसिव्योर्ल्युटि वा दीर्घ इति स्वामी ॥

सीवनी । स्त्री॰ लिङ्गमध्यस्थ सूत्रे । लिङ्गाधोगुह्यपर्यन्तसीवने ॥

सीसम् । न॰ सीसके । योगेष्टे । नागे । सीसा॰ इ॰ भा॰ प्र॰ धातौ ॥ सिनोति । षिञ्॰ । क्विप् । अनित्यत्वात्तुक । सीं स्यति । षो॰ । आतोऽनुपसर्गे कः । सिच॰ तत्॰ ईसस्य॰ सीसम् ॥ अस्य गुणा यथा सीसं रङ्गगुणं ज्ञेयं विशेषात्मेहनाशनम् ॥ नागस्तु नागशततुल्यबलं ददाति व्याधिं विनाशयति जीवनमातनोति । वह्निं प्रदीपयति कामबलं करोति मृत्युं च नाशयति सन्ततसेवितः सः ॥ पाकेन हीनौ किल वङ्गनागौ कुष्ठानि गुल्मांश्च तथातिकष्टान् । पाण्डुप्रमेहानिलमन्दशोथभगन्दरादीन् कुरुतः प्रभुक्तौ ॥ अनयोः शोधनमारणविधिर्यथा । तस्य साहजिकादोषाः गर्भे च निदर्शिता । शोधनं चापि तस्यैव॰ भिषग्भिर्गदितं पुरा । ताम्बूलरस

म्यष्टशिलालेपात्पुन पुन । हान्यशक्ति . पुटैर्नाशोनिरुत्थभस्मजायते ॥ शिलामन ' शिला । अन्यच्च । अश्वत्थचिञ्चात्वक्चूर्णं चतुर्थांशेननि ' क्षिपेत् । मृत्पात्रे विद्रुतेनागेलोहदर्व्याप्रचालित ॥ यामेकेनभवेद्भस्मतत्तुल्याश्चाम्मन ' शिला । काञ्जिकेनद्वयपिष्ट्वा पचेद्दृढपुटेनच ॥ स्वाङ्गशीतपुन पिष्ट्वाशिलयाकाञ्जिकेनच । पुन पचेच्छरावाभ्यामेवषष्टिपु- टैस्तु'ति ' ॥ अपिच । तैलेतक्रे गवाम्मूत्रे काञ्जिकेचकुलत्थके । चिध विधाविशुद्धि ' स्यात्स्वर्णादीनां समासत ॥ मारणम्पुन । कुण्डनागपत्राणाकुनस्या स्यात्पलार्द्धकम । तण्डुलीयरसैर्यामयाममासारसैस्तथा । सम्मर्द्यचक्रिया ङ्कृत्वावर्मेसशोष्यतम्पुन ' । शरावसम्पुटेकृत्वापचेद्वन्योपलैर्भिषक ॥ एवसप्तपुटैर्नागोभस्मीभवतिनिश्चितम् । हिगुलीयप्रवक्ष्यातप्रमेहानखिलानपीलिवैद्यदर्पण ' ॥

सीसकम् । न० सीसे ॥ स्वार्थेक ॥

सौसपत्रकम् । न० सीसके ॥

सौहुण्ड : । पुं० मुद्गाम् । सिहुण्डे ॥ सौतिहुण्डते । हुण्डिभरणे । पचाद्यच् ॥ सिहतुण्डशाप्रभशो भमितिस्वामी । पृषोदरादि ॥

सु । अ० पूजायाम् ॥ भृशार्थे ॥ निर्भरे । अतिमात्रे ॥ अनुमतौ ॥ कृच्छ्रे ॥ समृद्धौ ॥ अनायासे ॥ सूयते० सवति वा । सुगतौ । क्विपि० तुगभाव० हुर्वा ॥

सुकण्टका । स्त्री घृतकुमार्याम् ॥

सुकण्डु । पुं० कण्डूरोगे ॥

सुकथा । स्त्री० नैमिषारण्याधिष्ठात्री देवतायां ॥

सुकन्द । कशेरुणि ॥ धरणीकन्दे ॥

सुकन्दक । पु० पलाण्डौ ॥ शोभनमतीवशा० कन्दयति० भद्रकस्य जातिभ्रशकरत्वात् । कदिरोदने । अच । स्वार्थेकन । वनलता ॥ धरणीकन्दे ॥ वाराहीकन्दे ॥

सुकन्दी । पु० सूरणे ॥

सुकम् । अ० अतिशये ॥

सुकर ' । वि० सुखकरे । सुखेनकर्तुंशक्ये । सुसाध्ये ॥ ईषद्दु . सुष्विति० भावे० कर्मणिवा० खल्कृच्छ्रार्थे खल ॥ अल्पसाधनैरधिकारम्भोनसुकर ' ॥

सुकरा । स्त्री० सुशीलायाङ्गवि । अचण्डाम् ॥ सुसुखङ्करोति । अच ॥ सुक्रियतेवा । ईषद्दुसुष्विति खल ॥

सुकर्ण । पुं० हस्तिकर्णे ॥ त्रि० शोभनकर्णयुक्ते ॥

सुकर्णक : । पुं० हस्तिकन्दे ॥ वि०

सुन्दरकार्य्यं वति ॥

सुकर्णिका । स्त्री॰ मूषीकपर्ण्याम् ॥

सुकर्णी । स्त्री॰ इन्द्रवारुण्याम् ॥

सुकर्मा । पु॰ विष्कम्भाद्यन्तर्गतयो गविशेषे ॥ तज्जातफलं यथा । परो पकारीकुशल कलासुवर्णधायुक्तो नितरांयशस्वी । प्रसूतिकालेयदिचे त्सुकर्मानर सुकर्माभवतिप्रसि द्धः । देशनाशिल्पिनि । विश्वक र्मणि ॥ त्रि॰ सत्क्रिये । शोभन कर्मकारणशीले ॥

सुकल । त्रि॰ दातृभोक्तरिमानवे । यएकपः ददाति॰ भुङ्क्तेचतच । दाताभोक्ता॰ इ॰ भा॰ प्र॰ ॥ सु कल्पते । कलशब्दसङ्ख्यानयोः । ईषद्दुःखं च्यतिखल् ॥ शोभनाक लायस्येतिवा ॥

सुकल्प । त्रि॰ अतिनिपुणे ॥

सुकाण्ड । पुं॰ कारवेल्ले ॥ त्रि॰ शोभनकाण्डवर्ति॰ वृक्षादौ ॥

सुकाण्डी । स्त्री॰ काण्डीरे । काण्ड वेलइति॰ गौ॰ भा॰ प्र॰ लता याम् ।

सुकाण्डी । पु॰ भ्रमरे ॥

सुकामा । स्त्री॰ त्रायमाणायाम । व लेति॰ बहुलेति॰ गौ॰भा॰प्र॰ ।

सुकाली । पु॰ वशिष्ठात्मजेषु॰ शूद्रा णांपितृषु ॥

सुकालुका । स्त्री॰ डोडीक्षुपे ॥ इ॰ रा॰ ट ॥

सुकाष्ठकम् । न॰ देवकाष्ठे ॥

सुकाष्ठा । ) स्त्री॰ काटल्याम् ॥ का
सुकाष्ठिका । ) ष्ठकदल्याम् ॥ इ॰ रा॰ ट ।

सुकुन्दन । पु॰ बर्वरे ॥

सुकुमार । पु॰ पुण्ड्रेक्षौ । वनचम्प के ॥ चवे ॥ श्यामाके । त्रि॰ कौ मले । मृदौ ॥ सुष्ठुकुमारयति । कु मारक्रीडायाम् । चुरादयन्त॰ । पुंभोतिच : । एरज्वो ॥ यद्वा । सु काम्यते । कामे . बिदुलोपधाया ह्रस्वारन् ॥

सुकुमारक । पुं॰ शालौ ॥ सुन्दरवा लके ॥ न॰ तमालपत्रे ॥

सुकुमारतर । त्रि॰ अतिपेलवे ॥

सुकुमारतरा । स्त्री॰ अतिपेलवायाम् । प्रकृतौ ॥ यथोक्त । प्रकृतेः सुकु मारतरं नकिञ्चिदस्तीतिमेमतिर्भ वति । यादृष्टास्मीतिपुनर्नदर्शन मुपैतिपुरुषस्येति ॥

सुकुमारा । स्त्री॰ कदल्याम् ॥ माल त्याम् ॥ नवमालिकायाम् ॥ ला ल्याम् ॥ पृक्कायाम् ॥ चित्तभि पुष्पे ॥

सुकुमारी । स्त्री॰ नवमालिकायाम् ॥

सुकृत् । त्रि॰ पुण्याढ्ये ॥ धार्मिके ॥ सुष्ठुकृतवान् । डुकृञ् । सु कर्मपापेतिक्रञ क्विप् । तुक् ।

सुकृतम् । न० शुभे । स्वर्गादिप्राप्तौ । पुण्ये ॥ त्रि० सुविहिते । सुविधाने ॥ सुष्ठु कृतम् । प्रादिसमास ॥ सुष्ठु क्रियते स्मेति वा । क्त ॥

सुकृति । स्त्री० सत्कर्मणि ॥ शोभनाकृति ॥

सुकृती । त्रि० पुण्यवति । धन्ये ॥ सुकृतमस्यास्ति । अत इनि ॥

सुकेतुसुता । स्त्री० ताडकायाम् ॥

सुकेशर । पु० बीजपूरे ॥

सुकेशी । स्त्री० अप्सरोविशेषे ॥ त्रि० शोभनकेशयुक्ते ॥

सुकोमल । त्रि० अतिमृदुले ॥ अतिमनोज्ञे ॥

सुकोमला । स्त्री० सिन्दूरीतिप्रसिद्धे पुष्पे ॥

सुकोली । स्त्री० क्षीरकाकोल्याम् ॥

सुकोश ) पु० कोशाम्रे । क्षुद्राम्रे ॥
सुकोशक )

सुखसुप्त । पु० खट्वाङ्गे ॥ इति० इ० चन्द्र ॥

सुखम् । न० आत्मवृत्तिगुणविशेषे ॥ सुहृदि । प्रीतौ ॥ हर्षे । समाहे । आनन्दे । शर्मणि । सर्वेषामनुकूलवेदनीये ॥ स्वर्गे । नाके । वृद्धि ॥ ऋद्धिनामौषधे ॥ जले ॥ न्यायमते० धर्मजन्यो जगत इत्याख्यः ॥ यथ सुखन्तु जगतामेवेष्टाख्य धर्मेण जन्यते । अधर्मजन्यन्तु खं स्यात्प्रतिकूलं सचेतसाम् ॥ तच्च मनोगोचरस्य यथा । मनोग्राह्यं सुखं दुःखमिच्छाद्वेषोमति ' कृतिरितिभा०प०इ० । सुखं चतुर्विंशतिगुणान्तर्गतगुणविशेषः । तत्तु नित्यं जन्यञ्च । नित्यं परमात्मनो विशेषगुणान्तर्वर्ति । जन्यसुखं जीवात्मनोविशेषगुणान्तर्वर्ति । तच्च शुभादृष्टजन्यम्० धनमित्रलाभारोग्यमिष्टान्नपानपुरीषोत्सर्गपुत्रादिजन्मतत्पाणिस्पर्शकान्तासम्भोगादिजन्यञ्च । तच्च दिव्यवस्त्वादिस्वस्वोत्तरोत्पन्नानुभवनाश्यत्वात् । सुखाद्यपरोगेष्वात्मनोमानसवोध । सुखं तदुपायश्चेष्ट ' । बालस्य स्तन्यपानप्रवृत्तौ सुखसाधनत्वज्ञानं हेतु । तच्च सुखञ्चेष्टत्वम् । दुःखजनकागमनादिप्रवृत्तौ सुखोपायोधन तदेवेष्ट • तत्साधनत्वज्ञानमेव हेतु । यागादिप्रवृत्तावपि पारलौकिकसुखसाधनत्वज्ञानं कारणम् • सुखोपायस्वर्गादिरूपेष्टसाधनत्वज्ञानमभिकारणम् । सुखस्य कालावच्छेदात्त्व शरीरावच्छेदात्त्व सुखतोऽव्याप्यवृत्तित्वम्० शरीरैकदेशावच्छेदेनतु ' खसत्त्वेऽप्यन्यदेशावच्छेदेनसुखसत्त्वात्० एकचणावच्छेदेनजीवस्तु खसत्त्वेऽपि०

शैप्यदग्धा कुमिमम । उज्ज्वल ज्योतिषादग्धास्तेयान्तु रमाकृतिमिति । विसर्ज्जनमन्त्रोयथा । यम लोकपरित्यज्यआगतायैमहालये । उज्ज्वलज्योतिषावर्त्मप्रपश्यन्तोव्रजन्तु वै ॥ इति ॥

सुखलुबध । पु॰ देहिनि ॥ यथा । मासलुब्धोयथ मत्स्योलोहशङ्कुनपश्यति । सुखलुब्धस्तथादेहीयमबाधानपश्यतीतिकुलार्णवतन्त्रम ॥

सुखवर्च्चक । पु॰ सर्ज्जिकाक्षारे । सुखवर्चयति । वर्च्च दीप्तौ । क्वुन् ॥

सुखवर्च्चा । पु॰ सर्ज्जिकाक्षारे ॥ सुखेनवर्च्चयेन ।

सुखभास । पु॰ तरसु॰ दू॰ प्र॰ फलविशेषे ।

सुखवासन । पु॰ मुखवासनगन्धद्रव्ये । यथा । मुखवासकरोगन्धश्च मेदौमुखवासन । सुखवासनञ्चकेशुभवासनद्रव्यपीतमव्दरत्नावली ॥

सुखसंवित्ति । स्त्री॰ सुखानुभवे ।

सुखसन्दोह्या स्त्री॰ सहन्याम् । सुव्रतायाम सुखेनसन्दुह्यते । दुह॰ । कर्म्मणिण्यत् ।

सुखा । स्त्री॰ प्रचेतस पुर्य्याम् ॥ अभेदेनसुखवत्त्याम् ॥ शोभनेन्द्रियायाम ॥

सुखाधार । पुं॰ स्वर्गे ॥ त्रि॰ सुखाधारे ॥

सुखायत । पु॰ उत्कृष्टाश्वे । सुशिक्षिताश्वे ॥ यथा । सुखयत शुभमुख सुखचारः सुखायनइतिशब्दमाला ॥

सुखायन । पु॰ उत्कृष्टघोटके ॥ सुखेनअयनगमनयेन ॥

सुखालुका । स्त्री॰ बहुफलव्याम् । जीवन्त्याम् ॥

सुखावती । स्त्री॰ बुद्धशक्तौ ॥

सुखावतीश्वर । पुं॰ बुद्धभेदे ॥

सुखावह । पु॰ भर्त्तरि ॥ त्रि॰ सुखदातरि ॥

सुखाश । पु॰ वरुणे । प्रचेतसि ॥ सुखभोजने ॥ तरम्बुजे । अस्यपर्य्याययथा । स्यात्तालस्त्रिचफल सुखाशोराजतेमिष । लतापनसनाटामौसिदुरितिचक्रागडशेष ।

सुखासनम् । न॰ नरवाह्ययानविशेषे । खासा॰ इ॰ भा॰ प्र॰ ॥ सुखेनआसनयस्मिन् ॥

सुखित । त्रि॰ सुखरूपताङ्गते ॥ सुखसञ्जातमस्य । इतच् ॥

सुखी । त्रि॰ सर्वथानीरोगे ॥ निरायासस्थिते ॥ तृष्णयेविम्भिते ॥ सुखमस्त्यस्य । सुखादिभ्यश्चेति॰ इनि ॥ दु॰ खमूलहिसार सर्वशास्त्रसदु॰ खित । तस्यत्यागं कृतेयेनससुखीनापर प्रिये ।

याम् ॥

सुगन्धभूतृणम् । न० गन्धतृणे ॥

सुगन्धमूला । स्त्री० रास्नायाम् ॥ स्थलपद्मिन्याम् सुगन्धीमूलेव स्या. ॥

सुगन्धा । स्त्री० रास्नायाम् ॥ शोभनो गन्धः । कुगतीतिसमासः । सुगन्धोऽस्यस्याः । अर्शआद्यच् ॥ शल्ल्याम् ॥ गन्धनाल्याम् , वन्ध्याककॊटक्याम् । नाकुलीरास्नायाम् तुलस्याम् ॥ मधुकर्कटिकायाम् ॥ शतपुष्पायाम् ॥ स्वर्णयूथ्याम् ॥ रुद्रजटायाम् ॥ वनमल्लि ॥ सल्लक्याम् ॥ माधव्याम् ॥ तीर्थविशेषे ॥

सुगन्धमलकम् । न० सर्वौषधिभिश्शुष्कामलकत्वग्योगे । यथा । सर्वौषधिसमायुक्ता शुष्कास्त्वामलकस्त्वचः । यद्वात्तद्वाय योग : स्यात् सुगन्धामलकाभिधः ॥ इति राजनिर्घण्ट ॥

सुगन्धि । पुं० शोभनगन्धे । सुरभौ । घ्राणतर्पणे । इष्टगन्धे ॥ तुम्बुरवे । तीक्ष्णगन्धे ॥ परमात्मनि ॥ इति मोक्षधर्मटीकायांनीलकण्ठ ॥ सहकारे । न० एलवालुके । ऐलेये ॥ कुस्तुम्बुरौ । धान्याके ॥ मुस्तके ॥ कशेरुणि ॥ गन्धतृणे ॥ पिप्पलीमूले । त्रि० सुगन्धयुक्ते । शोभनो गन्धोऽस्य । गन्धस्येदुत्पूतिसुसुरभिभ्यइतिसम् ॥ गन्धस्येत्वे तदेकान्तग्रहणं नाद्रियन्तोकाशयः । यथा । काण्डूयत कटभुवङ्करिणोमदेनस्कन् । सुगन्धिमनुलोमवतानगस्येति माघे० सुगन्धिशोभनगन्धमित्ययात् ॥

सुगन्धिक । पुं० सिह्लके । तुरुष्के महाशालौ । गन्धके ॥ न० कह्लारे ॥ पुष्करमूले ॥ गौरसुवर्णे । वौरणे । पत्रशाकविशेषे ॥ सुपर्णे ॥ उशीरे ॥

सुगन्धिकुसुमम् । न० सुगन्धिपुष्पे । पु० पीतकरवीरे ॥ शोभनगन्धवन्ति पुष्पाण्यस्य ॥

सुगन्धिकुसुमा । स्त्री० पृक्कायाम् ॥

सुगन्धिता । स्त्री० सौरभ्ये ॥ शोभनोगन्धोयस्य० तस्यभावः । तल् । टाप् ॥

सुगन्धितैलम् । न० । सुगन्धिजले । कैतकादिपानीये ॥

सुगन्धित्रिफला । स्त्री० जातीफले न० पूगफलेनचसंयुक्तेलवङ्गकलिकाफले ॥

सुगन्धिनी । स्त्री० आरामशीतलायाम् ॥

सुगन्धिमूलम् । न० उशीरे ॥

सुगन्धिमूषिका । स्त्री० छुछुन्दर्याम् ॥

सुगम : । वि॰ सुखेनगमनीयेस्थानादौ ॥ सुखेनगम्यतेप्राप्यते । गमलृ॰ । सुखदुःखोर्विवरण् । यथासुगम . पन्थाः ॥
सुगरम् । न॰ रक्तने । हिंगुले ॥
सुगहन : । वि॰ निविडे ॥
सुगहनावृत्ति . । स्त्री॰ कुम्बायाम् । यज्ञस्थाने॰ श्वसुराद्दिद्द्द्रनिवारणायनिविडवेष्टने ॥ सुगहनावृत्तिरवकाशावृत्ति . ॥
सुगृह । पु॰ चञ्चुसूचीखगे । शोभनगृहे । यथा॰ इ॰ भा॰ प्र॰ ॥ न॰ शोभनालये ॥ त्रि॰ शोभनगृहवति ॥
सुगृहीत . । वि॰ सुन्दरूपेणकृतग्रहणे ॥
सुगृहीतनामा । पुं॰ शुभकाम्ययाग्रात स्मर्तव्ये युधिष्ठिरादौ ॥
सुग्रन्थि । पु॰ ग्रन्थपर्णप्रभेदे । चोरके ॥ शोभना ग्रन्थिरस्मिन ॥
सुग्रीव । पुं॰ कपिपुङ्गवे । सूर्यपुत्रे । किष्किन्धाधिपे । श्रीरामसित्रे ॥ विष्णोरश्वे ॥ देवीप्रतिशुम्भनिशुम्भाभ्यांप्रेषितेदूतविशेषे ॥ इन्द्रे ॥ शिवे ॥ इन्द्रे ॥ राजहंसे ॥ असुरविशेषे ॥ पर्वतविशेषे ॥ अस्त्रविशेषे ॥ नागप्रभेदे ॥ वि॰ शोभनग्रीवायुक्ते ॥
सुग्रीवी । स्त्री॰ कश्यपपत्नीविशेषे ॥

सुग्रीवेश : । पुं॰ श्रीरामचन्द्रे ॥
सुघोष । पुं॰ विष्णौ । नारायणे ॥ शोभनोघोष . शब्दोवेदात्मकोयस्य ॥ नकुलस्यपाण्डवस्यशङ्खे ॥
सुचक्षु । पुं॰ उदुम्बरे ॥ न॰ शोभननेत्रे ॥ वेदान्तजन्यज्ञाने ॥ यथा । एवंविधत्वासकलक्लानामपिस्वात्मानमात्मातनयाविचष्टे । गुर्वकालब्धोपनिषत्सुचक्षुषायेतेतरन्तीवभवानृताम्बुधिम् ॥ वि॰ उत्कृष्टाक्षे ॥ आत्मविदि ॥ शोभनेचक्षुषीयस्य . ॥ सुष्टुशोभनञ्चतच्चक्षुश्चेतिवा ॥
सुचक्षु । पु॰ महाचक्षुषावे ॥
सुचतुर . । वि॰ शोभनानिचत्वारियस्य॰ तस्मिन् ॥ अचतुरविचतुरेत्यादिनासाधुः ॥
सुचरित्र । वि॰ सुशीले ॥ शोभनचरित्रमस्य ॥
सुचरित्रा । स्त्री॰ साध्व्याम् ॥ शोभनचरित्रमस्याः ॥
सुचर्मा । पुं॰ भूर्जवृक्षे वि॰ सुचर्मवति ॥ शोभन चर्मास्य ॥
सुचारु । वि॰ मनोहरे ॥
सुचित्रम् । न॰ शोभनचित्रे ॥
सुचित्रक । पु॰ मत्स्यरङ्गविहङ्गमे ॥ चित्रसर्पे । मातुलाहौ ॥ वि॰ सुन्दरचित्रयुक्ते ॥
सुचित्रबीजा । स्त्री॰ विडङ्गे ॥

सुचिका । स्त्री० चिर्भिटायाम् ॥

सुचिरायुः । पु० सुरे । देवे ॥ मार्कण्डेयादौ ॥ शोभनं चिरायुर्यस्य ॥

सुचुक्रिका । स्त्री० तिन्तिड्याम् ॥

सुचुटी । स्त्री० सन्दंशिकायाम् ॥ इति सन्दंशिकाशब्दार्थे मेदिनिकार ॥

सुचेलम । न० शोभनवस्त्रे ॥ शोभनं चेलम् ॥ त्रि० शोभनवस्त्रवति ॥

सुचेलक । पु० तदस्त्रे । पटे ॥ सुचेलमेव । स्वार्थे कन् ॥ त्रि० तद्वति ॥

सुच्छत्री । स्त्री० शतद्रुसरिति ॥ इ० श०र०मा० ॥

सुजन । पुं० कृपालौ ॥ सदाचारे । साधौ । सज्जने ॥ यथा । दुर्जनस्य हि सङ्गेन सुजनोऽपि विनश्यति । प्रसन्नजलमिष्टापि कर्दमैः कलुषीकृतम् ॥

सुजनता । स्त्री० सौजन्ये ॥

सुजलम् । न० कमले ॥ शोभनं जलम् ॥ त्रि० शोभनजलयुक्ते ॥

सुजल्प । पु० वाक्यविशेषे ॥ यथा । यत्रार्जवात् सगाम्भीर्यं सदैन्यसहचापलम् । सोत्कण्ठश्च हरिः स्पृष्टः स सुजल्पो निगद्यते ॥ इत्युज्ज्वलनीलमणिः ॥

सुजात । त्रि० सुन्दरे

सुजाता । स्त्री० सौराष्ट्रमृत्तिकायाम् । तुवर्याम् ॥

सुजिह्व । पु० हव्यवाहने ॥

सुजीवन्ती । स्त्री० स्वर्णजीवन्त्याम् ॥

सुज्ञ । त्रि० विज्ञे ॥ सुष्ठु शोभनं जानाति । ज्ञा अवबोधने । आतश्चोपसर्गे इति कः ॥

सुज्ञेय । त्रि० सुष्ठु विज्ञेये ॥ सुखेन ज्ञातुं योग्यः । ज्ञा० । अचो यत् । ईद्यति ॥

सुडीनम् । न० पक्षिणः सुकुमारपाते ॥

सुत । पुं० आत्मजे । तनये । पुत्रे ॥ मातृपितृस्वभावस्तत्स्वभावः सुतः कन्या भवति । यथोक्तं वह्निपुराणे । शील सम्भजते पुत्रो मातुस्तातस्य वै सुता । यथाशीला भवेन्माता तथाशीलो भवेत् सुतः । यद्धर्मा वै भवेद् भूमिस्तद्धर्मं सलिलं भवेत् । मातृशीलं वदन्त्येवं पितृशीलगुणेन च । विभिन्नाः सुप्रजाः सर्वाः भवन्ति भवशीलिनामिति । सूयते स्म । सौति वा । षुञ् अभिषवे । षुप्रसवैश्वर्ययोर्वा । क्त । त्रि० पार्थिवे ।

सुतजीवक । पु० पुत्रजीवे ।

सुतनु । स्त्री० नार्याम् । त्रि० सुकृशे ॥ स्वङ्गे ॥

सुतपादिका । स्त्री० हंसपद्याम् । गोधापद्याम् ॥

सुतपा । पुं० सूर्ये ॥ मुनिविशेषे

॥ मुनौ ॥ नरनारायणऋषिभगवति
बदरिकाश्रमेसुश्रीभर्नमनसश्चेन्द्रि
याणाञ्चैकाग्ररूपंतपोऽस्त्येतिसुत
पानरनारायण ॥
सुतराम् । अ० अत्यन्ते । अतिशये
॥ अवधारितार्थप्रतिपादके ॥ य
था । न्यायुविवशावर्णबद्धोनापि
स्मृतोहरि । ददातिमोक्षंसुतरा
किम्पुनर्दत्तभक्त्यनादिति ॥ हिव
चनविभक्त्यर्थादिना०सुशब्दात्तर
प् । किमेत्तिङव्ययेत्यादिनाम्प्रत्य
य । तद्धितश्चासर्वविभक्तिरित्यव्यय
सञ्ज्ञा ॥
सुतश्रेणी । स्त्री० देवदालीलतायाम् ॥
सुतर्दन । पु० ताम्राचे । को
किले ॥
सुतल । पु० अट्टालिकाबन्धे ॥ ना
गलोकप्रभेदे ॥
सुतस्करा । स्त्री० सप्तपुत्रप्रसवाम ॥
सुतश्रेणी । स्त्री० मूषिकपर्ण्याम् ॥
सुतानाम्ने चिरस्था ॥ पुत्रवन्दे ॥
सुता । स्त्री० स्वपत्ये । कन्यायाम्
॥ दुरालभायां ॥
सुतात्मज । पुं० पौत्रे ॥ दौहित्रे
॥ सुतस्यसुतायाश्चात्मज ॥
सुतात्मजा । स्त्री० पौत्र्याम् ॥ दौहि
त्र्याम् ॥ सुतस्यसुतायाश्चात्म
जा ॥
सुतारम् । न० द्वितीयायामृशब्दाख्या

याम्सिद्धौ ॥
सुतारका । स्त्री० बुद्धधर्मासनदेवी
विशेषे ॥
सुतिक्त । पु० भूनिम्बे । किरात
तिक्ते ॥ पर्पटे । पित्तपापडा०
इ० भा० प्र० ॥
सुतिक्तक । पु० पारिभद्रे । भू
निम्बे ॥
सुतिक्ता । स्त्री० कोषातक्याम् । भृ
ङ्गफलिकायाम् ॥
सुतिक्तिका । स्त्री० कोषातक्याम् ॥
सुती । त्रि० पुत्रवति ॥
सुतीक्ष्ण । पु० शिग्रौ ॥ श्वेतशो
भाञ्जने ॥ रामायणप्रसिद्धेमुनि
विशेषे । नाम्नासुतीक्ष्णश्चरितेनदा
न्त ॥ त्रि० अतिशयेनखरे ॥
सुतीर्थकम् । न० । तीर्थविशेषे ॥
सुतुङ्ग । पुं० नारिकेलागमे ॥ श
खायामुत्त्रांशविशेषे । अत्यन्ततुङ्गे
॥ त्रि० अतिशयोच्चे ॥
सुतुष । पुं० कुन्दरे । उखर्वले ।
मृगवत्समेलयविशेषे ॥
सुतेजन । पुं० धन्वङ्गे । धन्वन
वृक्षे ॥
सुतेजा । पु० सुतेजस्त्वगुणविशि
ष्टे दृशौको ॥ स्वर्गे ॥ प्राकृष्णार्थ
विशेषे स्त्री० आदित्यभक्तायाम् ॥
त्रि० तेजसान्विते ॥
सुतेजा । स्त्री० महाज्योतिष्मत्याम् ।

सुत्या । स्त्री॰ अभिषवे । सोमलताकण्डने ॥ अभिषवदिने ॥ सवनम्॰ सूयते सोमोऽस्मिन्॰ अस्यां वा । षुञ् अभिषवे । संज्ञायां समजेति क्यप् ॥

सुत्रामा । पुं॰ गोत्रभिदि । इन्द्रे ॥ सुष्ठु त्रायते॰ पालयति । त्रैङ् पालने । आतो मनिन्॰ सर्वधातुभ्यो मनिन् वा ॥

सुत्वा । पुं॰ अभिषवस्नाने । यज्ञाङ्गस्नानकर्त्तरि ॥ सुतवान् । षुञ्॰ । सुयजोर्ङ्वनिप् । तुक् ॥

सुत्वरी । स्त्री॰ मातरि ॥ ङ्वनिबन्तात्॰ वनोरचेति ङीप् ॥

सुदग्धा । स्त्री॰ दग्धाख्यतृणे । सुदग्धिकायां ॥ मेरुजम्बुद्रुमे ॥

सुदग्धिका । स्त्री॰ कुरुह॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ख्याते । दग्धरुहायाम् । भस्मरोहायाम् ॥

सुदण्ड । पुं॰ वेत्रे ॥

सुदण्डिका । स्त्री॰ गोरक्ष्याम् ॥

सुदन् । त्रि॰ शोभनदन्तविशिष्टे ॥ शोभना दन्ता यस्य । वयसि दन्तस्य दतृ । नुम् ॥

सुदर्भा । स्त्री॰ तृणविशेषे । इक्षुदर्भायाम् ॥

सुदर्शन । पुं॰ । हरेश्चक्रे ॥ चक्रलक्षणं यथा । द्वादशारन्तु षट्कोणं वलयत्रयसंयुतम् । चक्रस्या

तृदश्चियावर्त्तं श्रखश्रीहरे स्म॰ तमिति । जिनानां बलदेवे ॥ ह स्याहँत्पितरि ॥ शोभनं दर्शनमस्य । भर्त्तः सुखेनद्रष्टव्येषा । भाषायां शासियुधिदृशिधृषिमृषिभ्यो युच् ॥ गन्धर्वे ॥ जम्बूद्वीपे ॥ सुदर्शनाकारत्वात् ॥ मेरौ ॥ ऋषौ ॥ राजभेदे ॥ न॰ शक्रनगरे ॥ मदुगमने ॥ त्रि॰ सुदृश्ये ॥

सुदर्शनचूर्णम् । न॰ भावप्रकाशोक्त ज्वररोगस्यौषधविशेषे ॥

सुदर्शनद्वीप । पुं॰ न॰ जम्बुद्वीपे ॥

सुदर्शना । स्त्री॰ आज्ञायाम् ॥ ओषधिप्रभेदे । सोमवल्याम् । इक्षुपत्र्याम् । सुदर्शनगुलञ्चः॰ पञ्चगुलञ्च॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ सुदर्शनाख्यादुरुणाकफशोफास्रवातजित् ॥ मेरुजम्ब्वाम् ॥ सुरोविशेषे ॥

सुदर्शनी । स्त्री॰ अमरावत्याम् ॥

सुदल । पुं॰ क्षीरमोरटे ॥

सुदला । स्त्री॰ तरुण्याम् । गन्धाख्यायाम् । सेवन्त्याम् । शालपर्ण्याम् ॥

सुदान्त । पुं॰ शाक्यमुनिशिष्यविशेषे । त्रि॰ तपःसहे ॥

सुदामा । पुं॰ वारिधरे । मेघे ॥ पर्वतविशेषे ॥ गोपविशेषे समुद्रे ॥ श्वेतद्वीपे । ऐरावते ॥ श्रीकृष्ण

मिर्व्राह्मणविशेषे । चि॰ सुदात रि ॥ सुष्ठुददाति । डुदाञ्॰ । आतोमनिन् ॥

सुदामा । स्त्री॰ नदीविशेषे । टाप् ॥

सुदाय । पु॰ हरणे । अत्यादान काले॰ व्रतभिक्षादौ चदीयमानद्र व्ये। सुष्ठुदीयते । डुदाञ॰ । घञ् । युगागम ॥

सुदारु । पु॰ पारिपात्रकपर्वते ॥ सुदारुःपारिपात्रकइतिहेमचन्द्रः ॥ न॰ शोभनदारुणि ॥

सुदि । अ॰ शुक्लपक्षे ॥

सुदिनम । न॰ शुभदिवसे ॥ चि॰ प्रशस्ते ॥ यथा । सुदिनासुसभा सुकार्यमेतत्प्रविचिन्त्योतविशेषत. स्वयमितिप्रयोग ॥

सुदीर्घ । चि॰ अतिविस्तारे ॥

सुदीर्घघर्मा । स्त्री॰ चसनपर्ण्याम् ॥

सुदीर्घफलिका । स्त्री॰ वार्त्ताकुविशे षे । सिङ्गावैंगन॰ इतिगौ॰ दे॰ भा॰ प्र॰ ॥

सुदीर्घा । स्त्री॰ चीनाकर्कव्याम् ।

सुदुर्दर्श । चि॰ अत्यन्त द्रष्टुमशक्ये ॥ सर्वथादर्शनायोग्ये परमात्मनि ॥ तस्यादृष्टरूपत्वात् ॥

सुदुर्लभ । चि॰ अतिदुष्प्राप्ये । दु खेनापिलब्धुमशक्ये ॥ यथा । बहूनांजन्मनामन्ते ज्ञानवान्माप्र पद्यते । वासुदेव . सर्वमितिसम हात्मासुदुर्लभइति ॥ सुष्ठुतिमा त्र दुर्लभः ॥

सुदुश्चर । चि॰ अतिशयदु खेना चरणीये ॥

सुदुष्कर । चि॰ सर्वथाकर्त्तुमशक्ये ॥ अत्यन्तक्लेशकरे ॥

सुदुस्तर । चि॰ अतिदु खेनतर णीये ॥

सुदूर । चि॰ दूरीरसि । दूरिष्ठे । अतिदूरे ॥ यथा । सुदूरमपिगन्त व्य यवस.हेश्वरोजन ॥

सुदूरपराहत । चि॰ अतिदूरनिरा कृते ॥

सुदृढम् । न॰ अतिदृढे । गाढे ॥ चि॰ तद्वति ॥

सुदृढत्वक् । स्त्री॰ काश्मर्याम् ॥

सुदृक् । चि॰ शोभननेत्रयुक्ते ॥

सुदृश्य । चि॰ सुन्दराकृतौ ॥

सुदेवी । स्त्री॰ नाभेर्भार्य्यायाम् । मेरु जव्याम् ॥

सुदेश । पु॰ मत्स्यदेशे । उत्तमदेशे ।

सुद्युम्न । पु॰ वैवस्वतमनोः पुत्रे ॥ चि॰ बहुधने ॥ अतिबलशालिनि ॥

सुधन्वा । पु॰ विश्वकर्मणि । त्वष्ट रि । नृपविशेषे ॥ चि॰ धन्व नि । प्रौढधानुष्के ॥ शोभन ध नुर्यस्य । धनुषश्छन्दङ ॥

सुधन्वाचार्य्य । पु॰ व्रात्याद्वैश्या त्सवर्णायांजाते॰ जातिविशेषे ।

कारुषे। यथा-इममनु । वैश्वानु
जायदैवाख्यात्सुधन्वाचार्य एवच।
कारुषयविश्वम्नावमनैव स स्वत
एवचेति ॥

सुधर्म । पुं० जिनगणाधिपविशेषे ॥

सुधर्मा। त्रि० धर्मशालिनि ॥ कु
टुम्बिनि ॥

सुधर्मा। स्त्री० देवसभायाम्। शो
भनोधर्म्मोयस्याम् । धर्माद्निच्के
वलात्। डाबुभाभ्यामितिपक्षे
टाप्। अनोबहुव्रीहेरितिङीब्न।
सुधर्म० सुधर्म्माङ्गत्यादि। डाब
भावे । सुधर्माणौ० सुधर्माणइ
त्यादि ॥

सुधा। स्त्री० पीयूषे । अमृते।
मद्ये । सुरायाम् ॥ सुखेनधी
यते । धेट पाने । आतश्चोपस
र्गेइतिकर्मण्यङ् । लेपने । सुराया
म् । मूर्व्वायाम् ॥ स्नुह्याम् ॥
गङ्गेष्टकायाम् ॥ गङ्गायाम् ॥
शालपर्ण्याम् ॥ विद्युति ॥ गु
डूच्याम ॥ जले ॥ तोये ॥
रसे ॥ धात्र्याम् ॥ आमलक्या
म् । पुष्परसे । मधुनि ॥ ह
रीतक्याम् ॥ सुष्ठु दधातिपुष्णा
ति । डुधाञ् । क्विप ॥

सुधांशु । पुं० इन्दौ । चन्द्रे ॥
सुधायुक्ताअंशवोयस्य ॥

सुधांशुतैलम्। न० कर्पूरतैले।

सुधांशुरत्नम्। न० मौक्तिके ॥ मु
क्ताफले ॥

सुधाकर । पु० चन्द्रे ।

सुधाक्षार । पु० सौधमूर्ध्नि । चू
ना० इ० भा० प्र० ॥ सुधाचारो
ऽस्त्यसद्मस्य प्राकोष्ठे विहार
थ ॥

सुधाङ्ग । पु० चन्द्रमसि ॥

सुधाजीवी । पु० पलगण्डे । लेप
के । राज० ह० भा० ॥ सुधयाले
पनेनजीवति० तच्छील णिनि ॥

सुधाधार । पुं० चन्द्र । इन्दौ ।
अमृतपात्रे ॥ सुधाया आधार ॥

सुधानिधि । पु० चन्द्रे ।

सुधाभुक् । पु० गीर्वाणे । देवे ॥
सुधांभुङ्क्ते । भुज० । क्विप ॥

सुधामय । पु० सौधे । राजसदने
त्रि० अमृतात्मके ॥

सुधामोदक । पु० यवासशर्करा
याम् ॥

सुधामोदकज । पु० तवराजोऽख
ण्डे ॥

सुधावर्षी । पु० विधातरि । विश्वसृ
जि । बुद्धभेदे ।

सुधावास । पु० चन्द्रे ॥ न० त्रपु
षि ॥

सुधास्रवा । स्त्री० त्रपुष्याम् ॥

सुधासंयोग । पुं० अमृतसिद्धियो
गे । यथा । हस्तार्कवर्ज्ज्ये०

जवं निजवं निजचं ष्कमोद्· दा समारे । प्रमंयम् । भवेद्य्धि ष्णम्रधिष्णं · वधिष्ण्य मनोचेत दे व सुधास प्रयोग ॥

सुधासिन्धु । पु · अमृतार्णवे ॥

सुधासूति । पुं · चन्द्रे ॥ यथा । प्रदीपज्वालाभिर्दिवसकरनीराजन विधि . · सुधासूतेश्चन्द्रोपलजल कणैरर्घ्यघटना । स्वकीयैरम्भोभि सलिलनिधिसौहित्यकरणं · त्वदी याभिर्वाग्भिस्तवजननि वाचास्तुति रियमिति ॥ मलि । वश्ते ॥ पद्मे ॥

सुधास्रवा । स्त्री · अधोजिह्विकाया म् । गलशुण्डिकायाम् । घण्टि कायाम् । रुद्रानाढ्याम् ॥ रुद रन्तिकायाम् ॥

सुधाहर ।) पु · गरुडे ॥ देवे ।
सुधाहृत् ।)

सुधित । पुं · स्त्री · सुधितौ । प रमौ ॥

सुधी । पु · विदुषि । सति । कों विदे । पण्डिते । न्यायशीलमो क्षार्थयान्ते ॥ सुष्ठुध्यायति । ध्यै · । ध्यायते , क्विपिसम्प्रसारणम ॥ स्त्री · सुन्दरबुद्धौ ॥ सुष्ठुधी वि · शोभनबुद्धियुक्ते ॥

सुधूप . । पु · सरलद्रवे ॥

सुधूम्य । पु · स्वादुनामगन्धद्रव्ये ॥

सुधोद्भव . । पु · धन्वन्तरौ । दिवो द्भवे ॥

सुधोद्भवा । स्त्री · हरीतक्याम् ॥

सुनन्द । पु · श्रीकृष्णस्य पार्षदविशेषे ॥ द्वादशविधराजगृहान्तर्गतगृहवि शेषे ॥ यथादेव्यंराज्ञ खहस्तमानि नैकपञ्चाशहस्त परिणाहेचत्वारि शद्धस्तम ॥ यथा । यथावैवोच्यते मान तस्य तेनैवकल्पना । राज्ञ खहस्तमेकस्तु दीर्घे सर्वत्र निवि त ॥ चायामेन सुनन्द . स्याद्राज हस्ते चतुर्दशभि . । परिणाहे चतुर्भि श्राजहस्ते प्रतिष्ठित . ॥ यस्या धिदेवता भीमा रत्नतोभावसुन्दराम् द्वारार्थे वि प्रतिष्ठा कर्तव्यावाहुता निच ॥ स्फाटिकैश्च सकला यं प्रसाधका . । अतस्थित्वासमतोपा ल सुचिर पातिमेदिनोमितियु क्तिकल्पतरु ॥ दैर्घ्ये ५१ प्रस्थे ४० ॥ न · कलभन्मुसले ॥

सुनन्दा । स्त्री · रोचनायाम् ॥ उ मायाम् ॥ कृष्णायाम् ॥ जनन्या म् ॥ उमासखीभेदे ॥ अर्कपत्रोक्ष वे । वृषिरमूल · कृ · गौ · दे · भा · प्र · ॥

सुनन्दिनी । स्त्री · मञ्जुभाषिणीछ न्दसि ॥

सुनयन पु · मृगे ॥ वि · शोभननेत्र युक्ते ॥ शोभनेनयनेयस्य . ॥

सुनयना । स्त्री · नार्याम् ॥

सुरेन्द्राधिपः । पुं॰ अगर्थे । ss ॥
सुनाकृत । पुं॰ कर्पूरकी ॥ ह॰ म॰ चन्द्रिका ॥
सुनाम । पुं॰ मैनाकाचले ॥
सुनामद्वादशी । स्त्री॰ द्वादशमासी यद्वादशीकर्तव्यव्रतविशेषे ॥
सुनारः । पुं॰ शुनीस्तन्ये ॥ सर्पाण्डे ॥ चटके । कलविङ्के ॥
सुनाल । पुं॰ उशीरे ॥ लामज्जके ॥
सुनालक । पुं॰ बकवृक्षे ॥ वि॰ सुन्दरनालयुक्ते ॥
सुनासिका । स्त्री॰ काकनासायाम् ॥ शोभननासायाम् ॥ वि॰ तद्युक्ते ॥
सुनासीर । पुं॰ इन्द्रे ॥ नासते । वासयन्ते । बाहुलकादीरन् । सु ष्ठु नासीरसेनामुखम्॰ नासीराव सेरावायस्यसः ॥
सुनिर्य्यासा । स्त्री॰ जिङ्गिन्याम् ॥
सुनिश्चित । पुं॰ बुद्धविशेषे ॥
सुनिषण्णम् । न॰ सुनिषण्णकशाके । चाङ्गेरीचिकासदृशे॰ चौपतिया॰ हू॰ प्र॰ जलप्रभवशाके । चतुष्पत्र्याम् ॥ वस्तुतायथा । चाङ्गेरीसदृश पत्रैश्चतुर्दलह्रतीरित । श्रीवारकाद्विनिर्दिशेच्चतुष्पत्रीति चोच्यते ॥ सुनिषण्णोहिमोग्राही मोहदोषत्रयापहः । अविदाहीलघुः स्वादु कषायोरूक्षदीपनः ॥ ह्यो वृष्योरुच्योज्वरश्वासमेहकुष्ठभ्रमप्रणुत् ॥ सितावरशाके । श्रीवारके ॥ वि॰ सूपविष्टे ॥
सुनिषण्णकम् । न॰ शाकविशेषे । सितुन्ने । सुनिषण्णके ॥
सुनीति । स्त्री॰ ध्रुवमातरि ॥ शोभननये ॥ वि॰ शोभननीतियुक्ते ॥
सुनीथ । वि॰ धर्मशीलके ॥ नीतिमति ॥ पु॰ बटौ ॥ ब्राह्मणे ॥ सुष्ठु नयति । णीञ्॰ । क्थनिकुषि नीरम्यादिनाक्थन् ॥
सुनीथा । स्त्री॰ मृत्योः कन्यायाम् । वेणस्यमातरि ॥
सुनील । पु॰ नीलरत्ने ॥ दाडिमे ॥ सुन्दरनीलवर्णे ॥ न॰ लामज्जके ॥
सुनीलक । पुं॰ नीलरत्ने ॥ नीलासने ॥ दाडिमे । नीलभृङ्गराजे ॥ न॰ नीरलाञ्जने ॥
सुनीला । स्त्री॰ तृणविशेषे । चणिकायाम् । गोदुग्धायाम् ॥ अतस्याम् ॥ विष्णुक्रान्तायाम् ॥ अपराजिते ॥
सुनीलिका । स्त्री॰ सुनीलायाम् ॥
सुनेपाली । स्त्री॰ विस्तृतखर्जूरिका प्रभेदे ॥ तल्लक्षणयथा । सुनेपाली सुस्वादुर्धावल्लिशोनकलापसा । सुनेपालीश्रमभ्रान्तिदाहमूर्च्छासपित्तहृत् । सुनेमासीतिलोके ॥

सुपथ्या । स्त्री० श्वेतचिल्ल्याम् ॥

सुपद्म । पुं० व्याकरणविशेषे ॥ पु० न० शोभनारविन्दे ॥

सुपद्मा स्त्री० वचायाम् ॥

सुपर्ण । पु० पन्नगाशने । गरुडे ॥ शनशमयत्वात्० शोभनेपर्णेयस्य स । स्वर्णचूडे । चाषे ॥ कृत मालके । राजवृक्षे ॥ सुष्ठुपर्णा न्यस्य ॥ भगवतिवासुदेवे ॥ शोभनानिपर्णानिच्छन्दांसि० संसार तरुरूपियोस्य प्रवर्त्तपक्षेऽद्रिवि शेषे ॥ श्येनप्रभेदे ॥ वेगवानल्प विग्रहः सुपर्णइतिव्याख्यातारः ॥ सप्तपर्णे ॥

सुपर्णक । पु० आरग्वधे सप्तच्छन्द वृक्षे ॥ गरुडे ॥

सुपर्णकेतु । पु० विष्णौ ॥

सुपर्णा । स्त्री० कमलिन्याम् ॥ वि नतायाम् ॥

सुपर्णाख्य । पु० नागकेशरे । तीर्थ विशेषे । यथा । उत्पलाचसुपर्णा ख्ये । इति ॥

सुपर्णिका । स्त्री० स्वर्णजीवन्त्याम् ॥ पलाश्याम् ॥ वाकुच्याम् ॥ रेणुका याम् ॥ शालपर्ण्याम् ॥

सुपर्णी । स्त्री० कमलिन्याम् ॥ वि नतायाम् ॥

सुपर्णीतनय । पु० गरुडे । तार्क्ष्ये ॥

सुपर्व्वा । पुं० सुमनसि । देवे । सुरे ॥ सुष्ठुपर्वअमावास्यादिचरित म्० अक्षुण्यादिर्यस्य उत्सवोवा यस्य ॥ शरे ॥ वंशे ॥ पर्वणि ॥ धूमे ॥

सुपर्व्वा । स्त्री० श्वेतदूर्वायाम् ॥

सुपर्व्वाङ्गना । स्त्री० देवललनायाम । यथा । सुपर्व्वाङ्गनागानगम्भीरता नखनतृलच्छाशैवाविपश्चीरवेण । श्रवणत्कण्ठिणीनादपूर्णेनतूर्णसुलि नाम्नसम्पूर्णघूर्णाजरीभि ॥

सुपाकिनी । स्त्री० गन्धपत्रायाम् ॥

सुपाक्यम् । न० विडलवणे ॥

सुपात्रम् । न० दानयोग्यव्यक्तौ शोभनभाजने ॥ त्रि० उत्तमपा त्रयुक्ते ।

सुपान । त्रि० पानयोग्ये ॥ सुखेनपी यते । पा० । कर्मणिल्युट ॥

सुपार्श्व । पु० प्लक्षवृक्षे ॥ हस्त हृदे । सम्पाति पुत्रे । पर्वतविशे षे । पञ्चाशत्सहस्रयोजनोच्छ्राये० अरुणवर्णमेरोः सौम्यदिशि० त स्यदक्षिणस्यां० विष्कम्भशैले ॥ तत्रसहस्रयोजनोन्नतिमांश्चोधपा दपोऽस्ति ॥

सुपार्श्वक । पु० गर्दभाण्डे । क न्दराले । कपीतने । प्लक्षे । पी लव० पीलख्य० निर्गो० गै ष्ठो० पू० प्र० हक्ष ॥ शोभनम्० पार्श्वमस्य ॥ भाव्यर्हद्विशेषे ।

सुपिङ्गला । स्त्री॰ जीवन्त्याम ॥ ज्योतिष्मत्यां ॥

सुपीतम । न॰गर्ज्जरे ॥

सुपुट । पु॰ कोलकन्दे ॥ विष्णुकन्दे ॥

सुपुत्रिका । स्त्री॰ लताविशेषे । जतुकायाम् । जतुकार्याम् । तिर्यक्फलायाम् ॥

सुपुष्करा । स्त्री॰ स्थलपद्मिन्याम् ।

सुपुष्प । पु॰ राजतरुण्याम् ॥ हरिद्रौ । शिरीषे ॥ रक्तपुष्पके । पारिजातमदार॰ इ॰ गौ॰ दे॰भा॰ प्र॰ ॥ न॰ लवङ्गे ॥ प्रपौण्डरीके ॥ तूले । तूदे । पोक्षुंद्पिप्पलाभिधे ॥ स्त्रीणारजसि ॥ आढ्ल्यें ॥

सुपुष्पिका । स्त्री॰ पाटलायाम् ॥ जीर्णदारुणि ॥

सुपुष्पी । स्त्री॰ श्वेतापराजितायाम ॥ कदल्याम् ॥ जीर्णफलज्याम् । जीर्णदारुणि ॥ द्रोणपुष्प्याम् ॥ मिश्रेयायाम् ॥ शतपुष्प्याम ॥

सुपूर । पु॰ बीजपूरे ॥

सुपूरक । पु॰ बकपुष्पवृक्षे ॥

सुपूर्व्वप्रवेश: । पु॰ यात्रानिवृत्त्यनन्तरक गृहप्रवेशे ॥ यात्रावसानेतु सुपूर्व्वसंज्ञ ॥

सुपेशल । त्रि॰ अतिरम्ये । सुन्दरे ॥

सुपेशा । त्रि॰ सुकुमारे । कोमले ॥ सुरूपे ॥

सुप्तम् । न॰ साधिकायाम् । सुषुप्तौ ॥ त्रि॰ निद्रिते । निद्राण । शयितेसूता॰ इ॰ भा॰ ॥ अथवी। धनेविधिनिषेधीयथा । क्षुधितस्तृषित कामीविद्यार्थीक्षुधिवाच्यक: । भाण्डारोचप्रवासीचसप्तसुप्तान् प्रबोधयेत् ॥ मक्षिकाभ्रमरीसर्पो राजाबालकस्तथा । परश्वापिच मूर्खश्वसप्तसुप्तान्नबोधयेत्इति ॥ स्वापितेस्म । निष्वप्शये । क्त । सम्प्रसारणम ॥

सुप्तघातक । त्रि॰ दशैरे । हिंस्रे ॥ इ॰ चि॰ ष॰ ॥

सुप्तजन । पु॰ अर्द्धरात्रे ॥ निद्रितेजने ॥

सुप्तज्ञानम् । न॰ सुप्तविज्ञाने । स्वप्ने ॥

सुप्ति । स्त्री॰ स्पर्शाज्ञतारुजि ॥ विश्रम्भे ॥ शयने । निद्रायाम । स्वापे विज्ञानविरतौ ॥ अथा खेविध्यमुक्तं यथा । आहारादिविभेदेन॰ सात्विकीराजसीतथा । तामसीतिविधासुप्ति . सापराम्भ्यते विधा ॥ सुखमस्वाप्समद्यावधु ' खमस्वापसमद्यनु । पाठमूढोस्म

शोभनम् । वाक्यमुनिवरै र्भाते सन्दिग्धे य सुभाषितमिति

सुभिक्ष । त्रि॰ सुलभभक्षद्रव्ये ॥ सुलभभैक्ष्ययुक्तकालादौ ॥

सुभिक्षा । स्त्री॰ धातकीपुष्पाम् ॥ शोभनायाम् ॥ भिक्षायाम् ॥ त्रि॰ लब्धान्ने ॥ सुष्ठु भिक्ष्यते॰ । भिक्षयाच्ञादौ । घञ् ॥

सुभीरव । पु॰ पलाशवृक्षे ॥

सुभू । त्रि॰ सुजन्मनि ॥

सुभूता स्त्री॰ चैलोक्यात्मन , कौशलोद्गभागे ॥ भूतिमद्भिरीश्वरकुबेरादिभिरधिष्ठितत्वात् ॥

सुभूतिक । पु॰ बिल्ववृक्षे ॥

सुभूम । पु॰ कार्त्तवीर्ये ॥

सुभृशम् । अ॰ बाढमित्यर्थे ॥

सुभ्राता । त्रि॰ स्निग्धे भ्रातरि । शोभन स्निग्धोभ्रातायस्यस । नद्यृतश्चेतिकप तुनभवति । वन्दिते भ्रतुरितिनिषेधात् ॥

सुभ्रू । स्त्री॰ योषिति ॥ त्रि॰ शोभनभ्रूविशिष्टे ॥

सुमम् । न॰ पुष्पे ॥

सुमङ्गलम् । न॰ पुष्पादिद्रव्ये ॥ त्रि॰ सदाचारे ॥ अतिशयश्चमवति ॥

सुमङ्गला । स्त्री॰ वायसोल्याम् । षण्मातरि ॥

सुमत : । त्रि॰ अनुमते । सुन्दरज्ञानविषये ॥

सुमति । पु॰ भरतात्मजे ॥ हस्तार्द्धिशेषे । भूताङ्गविशेषे ॥ स्त्री॰ शोभनमतौ विष्णुयशस पत्न्याम् । कल्किमातरि ॥ त्रि॰ सुबुद्धौ । निपुणे ।

सुमदन । पु॰ आम्रवृक्षे ॥

सुमदात्मजा । स्त्री॰ स्वर्गानन्दायाम् । अप्सरसि ॥

सुमधुर : । पु॰ जीवशाके ॥ न॰ अत्यर्थमधुरवाक्ये । सान्त्वे ॥ त्रि॰ अतिशयमधुररसयुक्ते ॥

सुमन । पु॰ गोधूमे ॥ सुष्ठु मन्यते । मनज्ञाने , अच् । धत्तूरे । त्रि॰ मनोहरे

सुमनःपत्रिका । स्त्री॰ जातीपत्त्याम् जावित्री॰ इ॰ भा॰ प्र॰ ।

सुमनःफलम् । न॰ जातीफले ॥ पु॰ कपित्थवृक्षे

सुमनाः । पु॰ देवे । सुरे ॥ धीरे । पण्डिते ॥ शोभनमनोयस्य ॥ पूतीकरञ्जे । महाकरञ्जे ॥ निम्बे ॥ गोधूमे ॥ देवप्रायेषाप्रभूमि ॥ त्रि॰ प्रसन्नमनसि ॥

सुमना । स्त्री॰ सुमनस स्त्री॰ भूम्नि॰ पुष्पे । सुमना पुष्पमालत्यो : स्त्रियांसितिमेदिन्यादेरेकत्वम् । वैश्य समयानसुमनाद्रवव्यनोयेतिद्यकोतस्य ॥ स्त्रिय : सुमनस :

पुष्पम्प्रसूनङ्कुसुमसुमनिच्यमरो
क्तेः । भूम्निस्त्रिय सुमनसश्चति
रत्नकोशः । बहुत्वमपि ॥ सुष्ठुम
न्यतेऽभि. । मन० । असुन् ॥
यद्वा । शोभनमनोऽस्याम् ॥ अतप
त्याम ॥

सुमन । न० पुष्पे ॥ पुष्प सुमन
कुसुममितिनाममाला । अप्रस्थाव्ये
ऽपि दृश्यते सुमनसोऽतिप्रयोगश्चाऽक्तो
बध्येऽनुकूल । क्लीबत्वञ्छान्दस
मित्यन्ये ॥

सुमना । स्त्री० मालत्याम् । जातीपु
ष्पवृक्षे । चर्म्मलीतिभाषाप्रसिद्धे
सुमनायाबपमाणीतिसुश्रुतेदर्श
नाद्धावत्यापि ॥

सुमनोरज । न० परागे ॥ सुमनसा
रज ॥

सुमन्तु । पु० मुनिविशेषे । अथर्वा
ङ्गिरसानुधारकोव्यासशिष्ये ॥

सुमन्त्र । पु० कल्किदेवस्यज्येष्ठ
भ्रातरि ॥ यथा कल्कोर्ज्येष्ठास्त्रय.
शूरा कविप्राज्ञसुमन्त्रका । ता
तमातृप्रियकरागुरुविप्रप्रतिष्ठिता
इतिकल्किपु० २ऽ०अ ॥ दशरथ
भूपतेः सारथौ ॥

सुमन्त्रा । स्त्री० दुर्गायाम् ॥

सुमर्ष्य. । त्रि० सुसहे ॥ सुखे
नमृष्यते । कृष० । भाषाऽऽशा
सियुधीत्यादिनाखलर्थे युच ॥

सुमालतिका । स्त्री० वर्णवृत्तविशेषे
॥ यद्वाजगणद्विभवेद्भलघु । म
णोवितमोतिसुमालतिकेति ॥ य
था । मनोजशरैर्यविषमातरैण । अ
वादिनतेनभवद्दयितेन ॥

सुमित्र । पु० ईश्वरे ॥ सुष्ठुमि
त्र जीवपक्षिण सखा ॥ दशाङ्
नृपतेरि । कृष्णकुवशीयइष्टहता
न्वयेसुरथराजपुत्रे ॥ न० द्विते ॥

सुमित्रभू । पु० जिनचक्रवर्त्तिवि
शेषे । सगरे ॥

सुमित्रा । स्त्री० लक्ष्मणशत्रुघ्नयोर्ज
नन्याम । दशरथराजपत्न्याम् ।
लक्ष्मणप्रसाम् ॥

सुमित्रानन्दवर्द्धन. । पु० लक्ष्मणे ॥
सुमित्रायाआनन्दं वर्द्धयति । नन्द्या
दित्वाल्लयु ॥

सुमुख । पु० गरुडात्मजे ॥ नाग
विशेषे ॥ शाकभेदे ॥ पण्डिते ॥
ऐरण्डे ॥ वनबर्बरिकायाम् ॥ बर्बरि
सितार्जके ॥ प्रागुदक्षिणपश्चिमद्वा
रगृहे ॥ भगवतिवासुदेवे ॥ शोभ
नमुखमस्य ॥ न० नखक्षतविशेषे
॥ उत्तमास्ये ॥ त्रि० पण्डिते । म
नोज्ञे । सुन्दरे ॥ सुन्दराननविशि
ष्टे । सुन्दरवदने ॥

सुमुखा । स्त्री० तार्क्ष्यवध्वाम् ॥

सुमुखी । स्त्री० देव्यन्तरे ॥ तार्क्ष्यव
ध्वाम् । त्रिष्टुपछन्दो ११ भेदे ॥

नजजलगैर्गदितासुमुखी । यथा । तरणिसुतातटकुञ्जगृहेवदनविधुस्मितदीधितिभिः । तिमिरमुदस्य मुखंसुमुखीहरिमवलोक्यचुचुम्बचिरम् ॥ सुन्दरवदनायाम् ॥ स्वाङ्गाच्चोपसर्जनादसंयोगोपधादितिङीष् ॥

सुमुष्टि । पु॰ विषमुष्टिक्षुपे । डोडिकायाम् ॥

सुमूल । पु॰ श्वेतशोभाञ्जने ॥

सुमूलकम् । न॰ गर्जरे ॥

सुमूला । स्त्री॰ शालपर्ण्याम् ॥ पृश्निपर्ण्यां ॥

सुमेखल । पु॰ मुञ्जे ॥ त्रि॰ शोभनमेखलायुक्ते ॥

सुमेधा । स्त्री॰ ज्योतिष्मत्याम् । त्रि॰ सुबुद्धौ । विदुषि । शोभना मेधाप्रज्ञायस्य । नित्यमसिच् प्रजामेधयोरित्यसिचसमासान्तः ॥

सुमेरु । पु॰ पर्वतविशेषे । मेरौ । हेमाद्रौ । रत्नसानौ । सुरालये । मिनोतिक्षिपति॰ उच्चत्वाज्ज्योतींषि । डुमिञ्प्रक्षेपणे । मिपीभ्यांरु । सुमेरुरित्युपसर्गान्तरनिरूप्यर्थम् ॥

सुम्नम् । न॰ सुखे ।

सुम्भलुरठ । पु॰ कर्पूरके ॥

सुम्भ । पु॰ देशविशेषे ॥ असुरभेदे ।

सुम्यम । न॰ रत्नौ ॥ सुपूजितमौयसे । मोङ गच्याम । एरच् । वा हुलकाद्यण ॥ सुमेपुष्पे साधुर्वा । तत्रसाधुरितियत् ॥

सुयन्त्रित । त्रि॰ आत्मीयनियमिते विप्रादौ ॥

सुयामुन । पुं॰ वत्सराजे । प्रासादे ॥ अद्रिविशेषे ॥ अच्युते । श्रीकृष्णे ॥ शोभनायमुनासम्बन्धिन परिवेष्टारोऽस्य ॥ यामुना परिवेष्टार पद्मासनादय शोभनायस्येतिवा ॥

सुयोजित । त्रि॰ नियुक्ते ॥

सुयोधन । पु॰ दुर्योधने ॥ सुखेन युध्यतेसुयोधन । भाषायांशासियुधिदृशिधृषिभ्योयुच् ॥

सुर । पु॰ अमरे । निर्जरे । देवे । सुरति । षुरप्रसवैश्वर्ययो । तुदादि । इगुपधेतिक ॥ यद्वा । क्षीरसमुद्रोत्थासुरा॰ साचस्ति॰ अर्शआद्यच् ॥ सुरापरिग्रहाद्वासुर । तथाचार्षेरामायणे । वरुणस्यनत: कन्यावारुणी रघुनन्दन । उत्पपातरसात्तस्मान्मार्गमाणापरिग्रहम् ॥ १६ ॥ दिते पुत्रानतारामजगृहुर्वरुणात्मजाम् । अदितेस्तुसुताप्रीतास्तामगृह्णन्तवै सुरा ॥ २७ ॥ सुरापरिग्रहाद्देवा । सुराइत्यभिविश्रुता । अपरिग्रहणात्तस्यादैतेया

ष्टासुरास्तथैवाथ रामायणे आदि
काण्डे अमृतोत्पत्तिनामनिषट् च
त्वारिंशदध्याये प्रोक्ता । शोभन
राजते । राजूटोषो । अन्येभ्योऽपि
तिष्ठ । यद्वा । सुनोति । षुञ् ।
। सुप्रधाराधभ्य क्रन ॥

सुरक । पु॰ वह्निविशेषे । सुरावर्त्तो ऽग्नि । सुराया आच्छादितिकन ।

सुरकोन्द्रदर्पापहा । स्त्री॰ गङ्गायाम् ॥ यथा । भगीरथप्रयासुगा सुरकबीन्द्रदर्पापहा महेशमुकुटप्रभा गिरिशिर पताकासिता । सुरासुरनरोरगैरजभवाच्युतैः संस्तुता विमुक्तिफलदायिनी भगवती शिवं राजते ॥ इति काशीपुराणे ३४ ऽध्याय ॥

सुरकाक । पु॰ विश्वकर्मणि ॥

सुरक्तता । स्त्री॰ गुडूच्याम् ॥

सुरक्त । पु॰ रक्तचन्दने । त्रि॰ मधुरकण्ठे ॥ अत्यन्तानुरक्ते । शोभनरागयुक्ते ।

सुरक्तक । पु॰ कोशाम्रे । स्वर्णगैरिके ।

सुरगण । पुं॰ इन्द्रादिदेवगणे ॥

सुरगण्ड । पु॰ रोगविशेषे । वरगण्डे ॥

सुरगुरु । पु॰ वृहस्पतौ ॥

सुरग्रामणी । पु॰ इन्द्रे ॥

सुरङ्ग । पु॰ नागरङ्गे ॥ भूमौगुप्तमार्गात्मकेगते विशेषे ॥ न॰ पत्तङ्गे । वक्रम्॰ इ॰ भाषा॰ प्र॰ । हिङ्गुलि ॥

सुरङ्गकृत । पु॰ खनकादितिकेतिचा सप्रथितेभूमौगुप्तमार्गकर्त्तरि ॥

सुरङ्गदम् । न॰ पतङ्गे ॥

सुरङ्गधातु । पु॰ गैरिके ॥

सुरङ्गयुक् । पु॰ सुरङ्गयापहर्त्तरि । कुशलिके ॥

सुरङ्गा । स्त्री॰ लताविशेषे । कैवर्त्तिकायाम् । दुग्धारुहायाम् ॥ तिर्यग्भूखाते । सन्धौ । सीध॰ इ॰ सुरङ्ग॰ इतिचभाषाप्रसिद्धे ॥ सुबहुरज्यतेऽस्याम् रजसा । रञ्जरागे । इलर्थेतिघञ् । घञि॰ रितिकुत्व ॥

सुरङ्गिका । स्त्री॰ मूर्वायां ॥

सुरङ्गी । स्त्री॰ काकनासायाम् ॥ रक्तशोभाञ्जने॰ इति रत्नमाला ॥

सुरजफल । पु॰ पनसवृक्षे ॥

सुरजनी । स्त्री॰ रात्रौ ॥

सुरज्येष्ठ । पु॰ ब्रह्मणि ॥ सुराणामसुरेषुवाज्येष्ठ ॥

सुरञ्जन । पु॰ गोपदले । गुवाकवृक्षे ॥

सुरतम् । न॰ निधुवने । मैथुने ॥ सुरत द्विविधम् ॰ बाह्यमाभ्यन्तरञ्च । तत्र बाह्यं प्रेक्षणभाषणाश्लेषचुम्बनाद्यनेकविधम् । आभ्यन्तरञ्चासनादिभेदेनापि ॥ त्रि॰ दया

युक्तौ । धर्मिरती ॥

सुरतकृटक पु॰ रतकीलि ॥ ॥

सुरतताली । स्त्री॰ दूत्याम् ॥ शिर, स्त्रजि ॥

सुरतरङ्गिणी । स्त्री॰ गङ्गायाम् ॥ यथा । धातावतजरैवहिमानीसे व्यतासुरतरङ्गिणीसदा । कृष्णा वतांनिगुधानकलयन्तोजीवनेषुल घवज्ज्वनुरागम ॥

सुरतरु । पु॰ देवतरौ । अश्वत्थ द्रुमे ॥

सुरता । स्त्री॰ देवत्वे ॥ देवतायाम ॥ पूर्वभावितल् । अपरत्वदेवा ललिता॰ देवशब्दोर्थपर ॥ यद्वा । सुराणासमूह । गजसहाया भ्यांचेतिवाचिके॰ चकारादन्यत्रा पितल् ॥

सुरतोषक । पु॰ कौस्तुभमणौ ॥ त्रि॰ देवप्रीतिकारके ॥

सुरथ । स्वारोचिषेऽन्तरेचैत्रश्चासमु ह्वविन्ध्यपतिश्चरे ॥ सचचन्द्रवंशीय । यथोक्तंब्रह्मवैवर्ते । ग्रोनारायण उवाच । धर्मिष्ठब्रह्मणः पुत्रस्तु पुत्रोनिशाकर । सचक्रत्वाराजसू यश्चिजराजेश्वभूवह । गुरुपत्न्या स्तारायातस्मभूवबुधसुत । बुध पुत्रश्चचैतस्मात्पुत्रःसुरथश्चस्मृत ॥

सुरदारु । न॰ देवदारुणि ।

सुरदीर्घिका । स्त्री॰ मन्दाकिन्याम् विश्वगङ्गायाम । सुराणांदीर्घिका ॰ वापीव ॥

सुरदुन्दुभि । स्त्री॰ तुलस्याम् ॥ पु॰ रा॰ वट ॥

सुरद्रुम । पु॰ मन्दारादिदेवतरौ ॥ सुराणांद्रुम ॥ देवनले ॥

सुरद्विट । पु॰ असुरे । पूर्वदेवे ॥ सुरान्द्वेष्टि । द्विषअप्रीतौ । स त्सूद्विषद्रुहदुहेत्यादिनाक्विप् ॥

सुरधनु । न॰ इन्द्रायुधे । शक्रधनु षि ।

सुरधूप । पु॰ धूनके ॥

सुरनदी । स्त्री॰ गङ्गायाम् ॥

सुरनन्दा । ) सुरनन्दिका । ) स्त्री॰ नदीविशेषे ॥

सुरनायक । पु॰ इन्द्रे ॥

सुरनाल । पु॰ देवनाले । नलो त्तमे ।

सुरनिम्नगा । स्त्री॰ गङ्गायाम् ॥ सुराणांनिम्नगा । स्तुभ्रादि ॥

सुरनिर्गन्धम् । न॰ पत्रके ॥

सुरपति । पु॰ इन्द्रे । बलारातौ सुराणांपति ॥ आदिगुरुर्विकल्पे ॰ ऽ । ॰ ॥ प्रथम लघुश्चतुर्थप्रभे दे॰ ऽ । ऽ ॰ ॥

सुरपत्तनम् । न॰ स्वर्गे ॥

सुरपथम् । न॰ व्योम्नि ॥

सुरपर्णम् । न॰ देवपर्णे ॥

सुरपर्णिक । पु॰ सुरपुन्नागे ॥

सुरपर्णिका । स्त्री० पुन्नागे ॥

सुरपर्णी । स्त्री० पलाश्याम्

सुरपादप । पु० कल्पवृक्षे ॥

सुरपुन्नाग । पु० पुन्नागभेदे । न० मेरौ ।

सुरपुरी । स्त्री० अमरावत्याम ॥

सुरप्रिय । पु० अगस्त्यवृक्षे ॥

सुरप्रिया । स्त्री० जात्याम् ॥ स्वर्णरम्भायाम् ॥

सुरभि । पु० चम्पके ॥ वसन्ते ॥ जातीफले ॥ सुगन्धौ ॥ चैत्रमासे ॥ कणगुग्गुलौ ॥ धूनके ॥ कदम्बवृक्षे ॥ वकुलद्रुमे ॥ गन्धतृणे ॥ शमीवृक्षे ॥ न० स्वर्णे ॥ गन्धोपले । गन्धपाषाणे ॥ साधुगन्धे ॥ सुन्दरे ॥ स्त्री० शल्लकीभौषधौ । गजभक्षायाम् ॥ मातृभिदि ॥ सुरायाम् ॥ गवि । रुद्रजटायाम् ॥ नवमालिकायाम् । नवाल्याम् ॥ जात्याम् । अपेतराक्षस्याम् । तुलस्याम् ॥ वर्वरीतुलस्याम् ॥ छायायाम् । मेदिन्याम् ॥ सुरायाम् । गवांमातरि ॥ यथा । गवामधिष्ठातृदेवीगवामाद्यागवांप्रसूः । गवां प्रधान सुरभि गोलोकेसासमुद्भवा ॥ त्रि० सुगन्धौ ॥ कान्ते । शोभने ॥ विख्याते ॥ सचिवे ॥ धीरे ॥ सुष्ठु रभते० रभ्यतेवा० सुष्ठु रभस रभसयुक्ताभवन्त्यनया । रभ

रामर्थे । सर्वधातुभ्यइन् । आगमानित्यत्वान्नुम् ॥

सुरभिका । स्त्री० स्वर्णकदल्याम् ॥

सुरभिगन्धा । स्त्री० मालत्याम् । भवेत्तो० इ० भा० प्र०

सुरभिगन्धि । त्रि० शोभनगन्धविशिष्टे । सुरभिर्गन्धोयस्य । गन्धस्येदुत पूतिसुसुरभिभ्य ॥

सुरभित । त्रि० वासिते ॥

सुरभित्रिफला । स्त्री० सुगन्धित्रिफलायाम् ॥

सुरभित्वक् । स्त्री० एलायाम् ॥

सुरभिदारु । पु० सरलवृक्षे ।

सुरभिपत्रा । स्त्री० जम्ब्वाम् ॥ राजजम्बूवृक्षे ॥

सुरभिवल्कलम् । न० गुडत्वचि ॥

सुरभिस्रवा । स्त्री० शल्लक्याम् ॥

सुरभी । स्त्री० आमोदमाने ॥ सुरभौ । गवाप्रसवा ॥

सुरभीरसा । स्त्री० शल्लकीवृक्षे ॥

सुरभूरुह । पु० देवदारुणि ॥ कल्पवृक्षादौ ॥

सुरमृत्तिका । स्त्री० तुवर्याम् । काक्ष्याम् । सौराष्ट्रमृत्तिकायाम् । फटकरी० इ० भा० ॥

सुरमेदा । स्त्री० महामेदायाम् ॥

सुरराज । पु० इन्द्रे । सुराणाराजा । टच् ॥

सुरर्षि । पु० नारदादौ ॥ नारदा

श्वा सुरर्षयस्तत्पर । सुराणामेव आदित्पुनस्त्वहितरस्य ॥ सप्तैसमासीषा ॥ ब्रह्मर्षिदेवर्षिराजर्षिमहर्षिपरमर्षिकाण्डर्षिश्रुतर्षिभेदात् सप्तप्रकाराश्चषय । तत्रनारदादा सुरर्षय ॥

सुरलता । स्त्री॰ महाज्योतिष्मत्याम्

सुरला । स्त्री॰ पुरन्दरायाम् । गङ्गायाम् ॥

सुरलोक । पु॰ द्यवि । दिवि । स्वर्गे ॥ सुराणालोक ॥

सुरवर्त्म । न॰ खे । आकाशे ॥ सुराणावर्त्म । सुरानभूमिस्पृशोऽमरी गगनेन ॥

सुरवल्लभा । स्त्री॰ श्वेतदूर्वायाम् ।

सुरवल्ली । स्त्री॰ तुलस्याम् ॥

सुरवैरी । ) पुं॰ असुरे । दानवे ॥
सुरशत्रु । )

सुरशाखी । पुं॰ कल्पवृक्षे ॥

सुरश्रेष्ठ । पु॰ ब्रह्मर्षि ॥

सुरश्रेष्ठा । स्त्री॰ ब्राह्म्याम् ॥

सुरस । पु॰ मोचरसे ॥ सिन्धुवारे ॥ न॰ पर्णासे ॥ बोले ॥ त्वचे ॥ टालचीनीतिभा॰ प्र॰ वल्कले ॥ गन्धतृणे ॥ त्रि॰ स्वादौ ॥ शोभनोरसोऽस्य ॥

सुरसख । पु॰ इन्द्रसचिवे ॥ गन्धर्वे ॥

सुरसद्म । न॰ स्वर्गे ॥

सुरसम्भवा । स्त्री॰ आदित्यभक्तायाम् ॥

सुरसरित् । स्त्री॰ गङ्गायाम् ॥

सुरसर्षप । पु॰ देवसर्षपे ॥

सुरसा । स्त्री॰ रास्नायाम् ॥ नागमातरि ॥ तुलसीदेवायाम् । वर्वरीतुलस्याम् ॥ तुलस्याम् । पर्णासे ॥ सुरसाश्रीतुपर्णासि । इति शब्दरत्नावली ॥ पर्णासितुनपुंसकमितिमुद्राङ्कितामेदिनी । पर्णासिपुनपुंसकमितिहस्तलिखितामेदिनी । सुरसस्तुत्रिषुस्वादौपर्णासिननपुंसकमितिचकस्याञ्चिन्मेदिन्यांपाठ : पर्णासेसुरसास्त्रियामितितुवक्तव्य ॥ ब्राह्म्याम ॥ महाशतावर्याम् ॥ कपित्थपर्ण्याम् ॥ मिश्रेयायाम् ॥ काश्मीरप्रसिद्धायांगन्धफलाख्यामितिभावप्रकाश ॥ भारतवर्षस्थनदीप्रभेदे ॥ धृतिछन्द १९ प्रभेदे ॥ सौभौयौमौगुरुकेनस्वरमुनिकरणैरादसुरसाम् । यथा । कामक्रीडासक्तौमधुसमयसमारम्भरभसात्कालिन्दीकूलकुञ्जे विहरणकुतुकाकृष्टहृदय । गोविन्दौवल्लवीनामधररसमुधाम प्राप्यसुरसांशङ्केपीयूषपानप्रचयकृतसुखव्यसनरदसी ॥ शोभनोरसोऽस्या ॥

सुरसाष्ट : । पुं॰ इयगणविशेषे ॥

पञ्चम ॥ ततोधेनुशतदद्याद्ब्राह्मणानांस्वभोजनम । इतिगारुडे २२६ अध्याय । सत्यानेशुक्रशापोयथा । सुरापानाद्ध्वनामप्राप यित्वासञ्जानाथस्वैवमस्यातिघोर- म् । दृष्ट्वाकचस्यापितथाविरूप पीत तथासुरयामोहितेन ॥ समन्युरुत्थाय महानुभावस्तदोशनाविप्रहितचिकी र्षुः । काव्य स्वयवाक्यमिदञ्जगादसु रापानम्प्रतिवैजातशङ्क ॥ योब्रा ह्मणोद्यप्रभृतीहकश्चिन्मोहात्सुरां पास्यतीमन्दबुद्धि । अपेतधर्माब्रह्म हाचैवसस्मादस्मिन्लोकेगर्हितस्यात्परेच ॥ मयाचेमांविप्रधर्मोक्ति सीमांमर्यादांवैस्थापितांसर्वलोके मन्तोविप्राः शुश्रुवांसोगुरूणांदेवा दैत्याश्चोपशृण्वन्तुसर्वे ॥ इतिमा त्स्ये २५ऽध्याय. ॥ ब्राह्मणक्षत्रिय विशांत्रिविधसुरापानप्रायश्चित्तादि यथा । सुरापीत्वाद्विजोमोहादग्नि वर्णांसुरामपिबेत् । तयासकायेनि र्दग्धे मुच्यतेकिल्बिषात्तत ॥ गो मूत्रमग्निवर्णंवापिबेदुदकमेववा । पयो घृतवामरणाद्गोशकृद्रसमेववा ॥ कणान्वाभक्षयेदब्दम्पिण्याकंवा सकृन्निशि । सुरापानापनुत्यर्थं वा लवासावटीध्वजी ॥ सुरावैमलम न्नानाम्पाप्मा चमलमुच्यते । त स्माद्ब्राह्मणराजन्यौवैश्यश्चनसुरांपि



बेत् ॥ गौडीपैष्टीचमाध्वीचविज्ञे याचत्रिविधासुरा । यथैवैकातथास र्वानपातव्याद्विजोत्तमैः ॥ यक्ष रक्ष पिशाचान्नं मद्यमांससुरास वम् । तदब्राह्मणेननात्तव्यं देवानाम श्नताहवि ॥ अमेध्येवापतेन्मत्तो वैदिकंवाप्युदाहरेत् । अकार्यम न्यत्कुर्याद्वाब्राह्मणोमदमोहित ॥ यस्यकायगतम्ब्रह्ममद्येनाप्लाव्य तेसकृत् । तस्यव्यपैतिब्राह्मण्य शूद्रत्वञ्चसगच्छति ॥ एषाविचित्रा भिहितासुरापानस्यनिष्कृतिरिति मानवे ११ऽध्याय ॥ अथाहेश्वर कुलार्णवे । पेयमद्यपलञ्चखाद्य समालोक्यप्रियामुखम् । कृत्वा चरण जप्य परप्राणम्परम्पदम् ॥ गुरुकारुण्यसुलभमोहमण्डकुलदर्शन म् । त्वमत्तएवजानान्तनेतरेभुक्ति मुक्तिदम ॥ गुरूपदेशरहितामद्या न्माद्यवशेचन । मोहयन्तिजनान कांशित्स्वयम्पूर्वविमोहिता ॥ दुराचारपरा केचिद्दृश्यन्तेहि पामराः । यथाभूताभवेत्स्वामोसे वका स्युस्तथाविधा ॥ बहव कौलिकधर्मंमिथ्याज्ञानविडम्बका । स्वबुद्ध्याकल्पयन्तीत्थं पारम पर्यं विवर्जिता ॥ मद्यपानेनमनुजा यदिसिद्धिलभन्तिचेत् । मद्यपान रता सर्वे सिद्धि यान्तुसमीहिताम ॥

मांसभक्षणमात्रेणयदिपुण्यागतिर्भवेत् । लोकेमांसाशिन सर्वे पुण्यवन्तोभवन्तिच ॥ स्त्रीसम्भोगेनदेवेशियदिमोक्षं व्रजन्तिवै । सर्वेऽपि जन्तवोलोकेमुक्ताः स्युः स्त्रीनिषेवणा ॥ कुलमार्गोमहादेविनमयानिन्दितः क्वचित । आचाररहितायेतु निन्दितास्तेनचेतरे ॥ अन्यथाकौलिकोधर्म्मोह्याचारः कथितोमया । विचरन्त्यन्यथादेविमूढाः पण्डितमानिनः ॥ कृपाणधारागमनाद्व्याघ्रकण्ठावलम्बनात् । भुजङ्गधारणान्नूनमशक्यं कुलवर्त्तनम् ॥ यथापानन्तुदेवेशिसुरापानं तदुच्यते । तन्महापातकंज्ञेयं वेदादिषुनिरूपितम् ॥ अनाघ्रेयमनालोक्यमस्पृश्यञ्चाप्यपेयकम् । मद्यमांसपशूनांतुकौलिकानांमहत्फलम् ॥ अमेध्यानिद्विजातीनांमद्यान्येकादशैवतु । द्वादशन्तुसुरामद्यं सर्वेषामधमंस्मृतम् ॥ सुरावैमलमन्नानाम्पाप्माचमलमुच्यते । तस्माद्ब्राह्मणराजन्यौवैश्यश्चनसुरांपिबेत् ॥ सुरादर्शनमात्रेणकुर्य्यात्सूर्य्यविलोकनम् । तत्सम्मार्ज्जनमात्रेणप्राणायामत्रयञ्चरेत् ॥ आजानुभ्यांभवेत्स्नानं नाभ्यन्त्युपवसेदह । ऊर्द्धं नाभेस्त्रिरात्रन्तुमद्यस्पर्शने विधि ॥ सुरापाणे कामकृते ज्वलन्तीं तां विनिक्षिपेत् । मुखे तया विनिर्दग्धोमृतः शुद्धिमवाप्नुयात् ॥ मद्यमांसादिदोषस्य प्रायश्चित्तमितिस्मृतम् । अविधानेनयोहन्यादात्मार्थं प्राणिनं प्रिये ॥ निवसेन्नरके घोरेदिनानिपशुरोमभिः सम्मितानि दुराचारस्तिर्य्यग्योनिषुजायते ॥ अनुमन्ताविशसितानिहन्ताक्रयविक्रयी । संस्कर्त्ताचोपहर्त्ताच खादकश्चाष्टघातकाः ॥ धनेनक्रयिकोहन्ति खादकश्चोपभोगतः । घातकोवधबन्धाभ्यामित्येषत्रिविधोवधः ॥ मांसस्यदर्शनं कृत्वासुरादर्शनवच्चरेत् । तस्माद्विधिनामद्यमांसं सेवेतनक्वचित् ॥ विधिवत्सेवितेदेवितरसात्वंप्रसीदसि । नाथयच्चविधानञ्च सर्व्वमेतद्वरानने ॥ तथाऽप्यविधानेनच्छेदयेन्नकदाचन । विधिमार्गाद्विजवाविभूत्वा पापैर्लिप्यते ॥ बहुनाऽत्र किमुक्तेनसारमेकंशृणुप्रिये । जीवन्मुक्तिसुखोपायः कुलशास्त्रेषुगोपितः ॥ जीवन्मुक्तो फल देवि ज्ञानकर्म्मसमीरणम । कुलज्ञोऽप्यूर्द्ध्वं वित्प्राज्ञ जनस्तत्वादनुत्तम ॥ कुलशास्त्राणिसर्व्वाणिमयैवोक्तानिपार्वति । प्रमाणानिनसन्देहो नहन्तव्यानिहेतुभिः ॥ देवताभ्यः पितृभ्यश्चमधुवाताऋतायते । स्वा

दण्डेनशुद्ध्यति ॥ अपिच । वीरघातीतथापापीवीराणांस्त्रीगमस्तथा । स्तेयीमहापातकिनस्तत्संसर्गीचपञ्चम ॥ कुलवर्त्मकुलद्रव्यंकुलसाधकमेवच । येनिन्दन्तिदुरात्मानस्तेगच्छन्त्यधमांगतिम् ॥ नृत्यन्तिरुद्रडाकिन्योनृत्यन्तिरुद्रभैरवा । मांसास्थिचर्वणानन्दाःसुराक्षीबहिषानृणाम् ॥ दयालवःसत्यशीला सदापरहितेप्रिया । तान्गर्हयन्तोनरकान्निष्कृतियान्तिनक्वचित्त्विति ॥ सुरामांसादिभिर्देवीगङ्गापिसुप्रसीदति । अत्रप्रमाणंसीताया वाक्यसुस्पष्टमुच्यते । तथाहि । मध्यन्तुसमनुप्राप्यभागीरथ्यास्त्वऽनिन्दिता । वैदेहीप्राञ्जलिर्भूत्वातांनदीमिदमब्रवीत् । पुत्रोदशरथस्यायंमहाराजस्यधीमत । निदेशपालयत्वेनंगङ्गेत्वदभिरक्षित । चतुर्दशहिवर्षाणिसमग्राण्युष्यकानने । भ्रात्रासहमयाचैवपुनःप्रत्यागमिष्यति ॥ ततस्त्वांदेविसुभगेक्षेमेणपुनरागताय । यक्ष्येप्रमुदितागङ्गेसर्वकामप्रदायिनि ॥ त्वंहित्रिपथगेदेविब्रह्मलोकंसमीक्षसे । भार्याचोदधिराजस्यलोकेऽस्मिन्सम्प्रदृश्यसे ॥ सात्वांदेविनमस्यामिप्रशंसामिचशोभने । प्राप्तराज्येनरव्याघ्रेशिवेनपुनरागते ॥ गवांशतसहस्राणिवस्त्राण्यन्नंचशोभने । ब्राह्मणेभ्य प्रदास्यामितवप्रियचिकीर्षया ॥ सुराघटसहस्रेणमांसभूतौदनेनच । यक्ष्येत्वांप्रयतादेविपुरींपुनरुपागता ॥ यानित्वत्तीरवासीनिदैवतानिचसन्तिहि । तानिसर्वाणियक्ष्यामितीर्थान्यायतनानिच ॥ पुनरेवमहाबाहुर्मयाभ्रात्रासहानघ । अयोध्यांवनवासात्तुप्रविशत्वनघोऽनघे ॥ तथासम्भाष्यमाणासासीतागङ्गामनिन्दिता । दक्षिणादक्षिणन्तीरंक्षिप्रमेवाभ्युपागमत् ॥ इत्यार्षेरामायणेअयोध्याकाण्डेद्विपञ्चाशत्सर्ग ॥ पुनश्च । कालिन्दीमध्यमायातासीतात्वेनामवन्दत । स्वस्तिदेवितरामित्वांपारयेन्मेपतिर्व्रतम् ॥ यक्ष्येत्वांगोसहस्रेणसुराघटशतेनच । स्वस्तिप्रत्यागतेरामेपुरीमिक्ष्वाकुपालिताम् ॥ कालिन्दीमथसीतातुयाचमानाकृताञ्जलि । तीरमेवाभिसम्प्राप्तादक्षिणावरद-र्शिनी ॥ इत्यार्षेरामायणेअयोध्याकाण्डेपञ्चपञ्चाशत्सर्ग ॥

सुराकर । पुं॰ नारिकेलद्रुमे ॥ मद्योत्पत्तिस्थाने ॥ यथा । आकरा॰ शुचय, सर्वेवर्जयित्वासुराकरम् ॥

सुराग्र्यम् । न॰ अमृतेसुराणामग्र्य

श्रेष्ठम् ॥

सुराङ्गना । स्त्री॰ देवपत्न्याम् ॥ अप्सरसु ॥

सुराचार्य्य । पुं॰ बृहस्पतौ ॥ सुराणामाचार्य्यः ॥

सुराजक । पुं॰ भृङ्गराजे ॥

सुराजा । पुं॰ शोभननृपे ॥

सुराजीवी । पुं॰ शौण्डिके ॥

सुरानन्द । पुं॰ हरौ ॥ सुरान् आनन्दयत्यमृतप्रदानेनेति तथा । कौ ते सुरया॰सुरायां वानन्दो स्य ॥

सुराप । त्रि॰ मद्यपे । सुरापानकर्त्तरि ॥ सुरां पिबति । पा॰ । गापोष्टगित्यत्र॰पिबते · सुराशीध्वो रितिवाच्यं । टित्वात्स्त्रिशाडीप् । सुरापी ॥ अन्नशब्दात् तेयच्चि सुराप प्रपावदन्नकः । सुवर्णहारी गुनखौ दुश्चर्मा गुरुतल्पग ॥

सुरापगा । स्त्री॰ गङ्गायाम् ॥

सुरापाणम् । न॰ मद्यपाने ॥ सुराया पानम् अनद्देशे ॥ वाभावकरणयोरितिपक्षे णत्वम् ॥

सुरापाणा । पुं॰ भूमि॰प्राच्येषु । पूर्वदेशस्थेषु ॥ पीयतइतिपानम् । कर्मणिल्युट् । सुरापानं येषाम् । पानन्देशे॰ इ॰णत्वम् ॥

सुरापानम् । न॰ सुरापीथे । मद्यपाने ॥ सुरायाः पानम् । वाभावकरणयोरितिपक्षे णत्वाभाव प्राप्तौ ञ्जिह्मतावेदनिन्दाकौटसाक्ष्य सुहृद्वध । गर्हितानाद्ययोर्जग्धि, सुरापानसमानिषट् ॥

सुराभाग । पुं॰ सुरायां । सुरायाश्चभागे ॥

सुरामण्ड । पुं॰ सुरायाश्चभागे । कारोत्तरे ॥ सुरायामण्डः ॥

सुरारि । पुं॰ दैत्ये ॥ सुराणाम् अरिः ॥

सुरारिहा । )<br>सुरारिहन्ता । ) पुं॰ विष्णौ । श्रीहरौ ॥ सुरारीन्हन्ति ॥ सुरारीघातका ॥

सुरार्हम् । न॰ हरिचन्दने ॥

सुरालय । पुं॰ सुमेरुपर्वते ॥ स्वर्गे । सुराणामालय ॥ सुरायानिलये ॥

सुराश्रय । पुं॰ इन्द्रे ॥

सुराष्ट्र : । पुं॰ देशविशेषे । सूरत॰ इ॰ भा॰ प्र॰ ॥ शोभनोपवर्त्तने ॥

सुराष्ट्रज । पुं॰ कृष्णमुद्गे ॥ विषविशेषे ॥ न॰ तुवरिकायाम् । सौराष्ट्रमृदि ॥ सुराष्ट्रेजातम् जनो॰ । सप्तम्याञ्जनेर्ड ॥ त्रि॰ तद्देशजाते ॥

सुराष्ट्रजा । स्त्री॰ तुवरिकायाम् । सौराष्ट्राम् ॥ टाप् ॥

सुराह्व । पुं॰ देवदारुणि ॥ मरुवके ॥ हरिद्रुवर्ण ॥

सुरी । स्त्री० देवाङ्गनायाम पुर सुरीणामभवोवमानवी ॥

सुरुङ्ग । पु० शोभाङ्गे ॥

सुरुङ्गा । स्त्री० सुरुङ्गायाम् । सन्धिलायाम् । सन्धौ । सौंध० इ० प्र० खातविशेषे ॥

सुरुङ्गाहि । पु० सन्धिचौरे । कुजम्भिले ॥

सुरुक् । त्रि० अतिकमनीये ॥

सुरूप । त्रि० शोभनरूपयुक्ते । सुन्दरे । रुचिरे । मनोज्ञे । मनोरमे । शोभनं रूपं यस्य ॥ विदुषि । विपश्चिति । न० तूले ॥

सुरूपा । स्त्री० भार्य्याम् । शालपर्ण्याम ॥ सुन्दर्याम । रुचिरायाम् । मनोरमायाम । शोभनरूपयस्या ॥

सुरूहक । पु० गर्दभाश्वे । इ० ई० चन्द्र ॥

सुरेज्य । पु० वृहस्पतौ ॥

सुरेज्या । स्त्री० तुलस्याम् ॥

सुरेन्द्र । पु० इन्द्रे ॥

सुरेन्द्रजित् । पु० गरुडे ॥ सुरेन्द्रं जयति । जि० । क्विप् । तुक् ॥ इन्द्रजिति ॥

सुरेभ । पु० देवहस्तिनि ॥ शोभनशब्दे । न० रङ्गे । मृदङ्गे ॥

सुरेपट । पु० रामपूगे मुनिपूगे ॥

सुरेश । पु० भगवति । विष्णौ ॥ शिवे ॥ सुराणामीश स्वामी ।

सुरेशलोक । पु० ब्रह्मलोके ॥ यथा । नयचवै कुरुठकथासुधापगानसा धवोभागवतास्तदाश्रयाः । नयच यज्ञेशमहामहोत्सवाः सुरेशलोको पिनवैससेव्यतामितिदेवीभागवत ॥

सुरेश्वर । पु० इन्द्रे ॥ शिवे । ग रुडाचार्यशिष्यविशेषे । वार्त्तिककारे ॥

सुरेश्वरी । स्त्री० दुर्गायाम् । मन्दाकिन्याम् ॥ सुराणामीश्वरी ॥

सुरेष्ट । पुं० वकवृक्षे । शिवमल्लाम् ॥ शाले ॥ सुरपुन्नागे ॥

सुरेष्टा । स्त्री० ब्राह्म्याम् ॥

सुरोत्तम । पु० सूर्य्ये ॥ त्रि० देवश्रेष्ठे ॥

सुरोत्तर । पुं० चन्दने ॥

सुरोद । पु० सुरासिन्धौ । सुरासमुद्रे ॥ सुरा० उदकं यस्य । उत्तरपदस्य उदकस्योदादेशः ॥

सुलक्षण । त्रि० शोभनलक्षणविशिष्टे ॥

सुलक्षणा । स्त्री० उमाया सखीविशेषे ॥

सुलभ । पुं० विष्णौ ॥ यथा । पत्रं पुष्पं फलं तोयमक्रीतलभ्यं पुरुषैः सदा । भक्त्या सुलभ्ये पुरुषे पुराणे मुक्त्यै किमर्थं क्रियते प्रयत्न इति महाभारतम् ॥ त्रि० अनायासप्राप्ये । सुखेनलभ्यते० इति । ईष

दु सुष्ठितिलभे : खल् ॥

सुलभा । स्त्री॰ तुलस्याम् ॥ धूम्रपत्रायाम् ॥ माषपर्ण्याम् ॥

सुललाट । त्रि॰ शोभनभालविशिष्टे । ललाटेयस्यदृश्यन्तेचतुस्त्रिद्व्येकरेखिकाः। आयुःशतचतुर्लेखासौभाग्यविशिष्टे ॥

सुललितम् । न॰ मात्रावृत्तविशेषे ॥ द्विजवरयुगमिहरचयविलघुकगणमथकलय । सुललितकलितरसपदिसरसिजमुखिभवतियदि । अगलितविदितसुललितमितिवरकविपतिरितिवदति ॥ यथा । प्रविचल कुवलयनयनजलनिधिकृतवरशयन । दितितनयनिवहदमनशमनविविधभयशमन । मयिवरमुपनयसुचिरमभिनवजलधररुचिर ॥ त्रि॰ अतिसुभगे ॥ सुकोमले ॥

सुलेखा । स्त्री॰ दुर्गायाम् ॥

सुलोचन । पुं॰ धृतराष्ट्रपुत्रे ॥ शोभनलोचन नयन॰ म्लान वाच्य ॥ मृगे । हरिणे ॥ त्रि॰ शोभननेत्रविशिष्टे ॥ शोभनेलोचनेयस्य ॥

सुलोचना । स्त्री॰ सुमेधायाम् ॥ माधवराजपत्न्याम् ॥

सुलोमशा । स्त्री॰ काकजङ्घायाम् ॥ त्रि॰ शोभनलोमयुते ॥

सुलोमा । स्त्री॰ मांसच्छदायाम् ॥ ताम्रवल्याम् ॥

सुलोहकम् । न॰ पित्तले ॥

सुलोहित । पुं॰ सुन्दररक्तवर्णे ॥ त्रि॰ तद्वति ॥

सुलोहिता । स्त्री॰ अग्निजिह्वाविशेषे ॥

सुवक्त्र । पुं॰ वनबर्बर्याम् ॥ न॰ सुन्दराननें । त्रि॰ तद्वति ॥

सुवचनम् । न॰ सुप्रलापे । शोभनोक्तौ ॥ शोभन वचनम् ॥

सुवचा । त्रि॰ वाग्मिनि ॥ सुष्ठु वक्ति । वच॰ । सर्वधातुभ्योऽसुन् ॥ यद्वा । मिथुनेऽसि । उपसर्गविशिष्टोधातुर्मिथुनम् । तत्रासुनोपवादोऽसि । स्वरेभेदः ॥

सुवदन । पुं॰ श्रीगणेशे । शोभनवदनमस्य ॥ त्रि॰ सुन्दराननवति ॥ न॰ शोभनानने ॥

सुवदना । स्त्री॰ सुन्दराननविशिष्टायानार्याम् ॥ अतिच्छन्द २॰ प्रभेदे ॥ ज्ञेयासप्ताश्वषड्भिर्मरभनययुताभ्लौग सुवदना ॥ यथा । प्रत्याहृत्येन्द्रियाणित्वदितरविषयाण्यासायनयना॰ त्वाध्यायन्तीनिकुञ्जे परतरपुरुष हर्षोत्थपुलका । आनन्दाश्रुप्लुताक्षीवसतिसुवदना योगैकरसिका॰ कामारिर्न्यक्कृतकामानतुनरकरिपोराधामममसखी ॥ सुष्ठुशोभन वदनयस्याः । सा ॥

सुवन । पु॰ दिवानाथे । सूर्ये ॥ व ह्नौ ॥ सूति॰ सूयतेवा । सुष्प्रायि गर्भविमोचने । भूसूधूभ्रस्जिभ्य श्छन्दसीतिक्यन् ॥

सुवया . । स्त्री॰ प्रौढायाम् ॥

सुवर्च्चक । पु॰ सर्ज्जिकाक्षारे ॥

सुवर्च्चला । स्त्री॰ सूर्यपत्नीविशेषे । भक्ष्यायाम् । अतस्याम् ॥ ब्राह्मया म् ॥ आदित्यभक्तायाम् । हुलहु ल॰ ह॰ प्र॰ शाके ॥ अस्यागुणा यथा । सुवर्च्चाहिमारुक्षाखाहु पाकरसागुरु । अपित्तलाकटु क्षाराविष्टम्भकफवातजित् ॥ अ न्यातिक्ताकषायोष्णासराक्षालघु कटु । निहन्तिकफपित्तास्त्रश्वा सकासारुचिज्वरान् ॥ विस्फोटकु ष्ठमेहास्रयोनिरुक्कृमिपाण्डुता ॥

सुवर्च्चा । त्रि॰ दीप्तमति ॥ अति तेजस्विनि । शोभनवर्च्चोयशस. ॥

सुवर्च्चिक । पु॰ सर्ज्जिकाक्षारे ॥

सुवर्च्चिका । स्त्री॰ जतुकायाम् । त रुवल्क्याम् । जतुकायाम् । नि शाख्यायाम ॥ सर्ज्जिकाप्रभेदे । सौरा॰ ह॰ भा॰ प्र॰ ॥ सुवर्च्चि कासर्ज्जिकावद्बोद्धव्यागुणतोजनै ॥

सुवर्च्ची । स्त्री॰ सर्ज्जिकाक्षारे ॥

सुवर्ण . । पु॰ स्वर्णकर्षे । बिस्तौ । हेमाद्रौ । हेम॰ षोडशसुमाषिषु ॥ षोडशभिर्माषैः ; घरिमितिप्रसि माषविशेषे ॥ सुवर्णाली ॥ सुव र्णनामनिर्यन्त्रे ॥ धत्तूरे ॥ लङ्का द्वीपवत्॰ समुद्रान्तर्वर्त्तिनिद्वी पविशेषे ॥ कर्णगुग्गुलौ ॥ न॰ सोना॰ ह॰ भा॰ प्र॰ धातुश्रे ष्ठे । तत्पर्य्यायायथा । स्वर्णसुव र्णकनक हिरण्य हेमहाटकम् । तपनीयशातकुम्भ गाङ्गेयभर्मकर्बु रम् ॥ चामीकरजातरूपमहारज तकाञ्चने । रुक्म कार्त्तस्वरजाम्बू नदमष्टापदोस्त्रियामिति ॥ तद्यथा र्यन्त्सर्वदेवतात्मकत्वञ्चोक्त रामाय ण॰ महाभारतेचपरशुरामप्रतिव शिष्ठवाक्यम् । सर्वरत्नानिनिर्म थ्यतेजोराशिसमुत्थितम् । सुवर्ण मेभ्योविप्रेन्द्ररत्नंपरमनुत्तमम् ॥ एतस्मात्कारणाद्देवगन्धर्वोरगरा क्ष साः । मनुष्याश्चपिशाचाश्चप्रयता धारयन्तितत् ॥ तथा । तस्मात्स र्वपवित्रेभ्य पवित्रंपरमस्मृतम् ॥ तथा । अग्निर्वैसकलादेवा . सु वर्णञ्चतदात्मकम । तस्मात्सुव र्णंददतादत्ता स्युः सर्वदेवता । तस्मात्प्रदिनधार्यम् । अक्षोत्प त्तिर्वत्रि॰ गुणाश्चस्वर्णेद्रष्टव्या ॥ कृष्णागुरुणि ॥ हरिचन्दने ॥ स्व र्णगैरिके ॥ वित्ते । धने ॥ नाग केशरे ॥ पु॰ न॰ हेमाद्रौ । प्रयो तिरिङ्गिकापरिमितिस्वर्णे ॥ त्रि॰

उत्कृष्टवर्णे ॥ शोभनोवर्णः सु
तिवांसुष्टुवर्णयतिवा । वर्णवर्णने ।
चुरा ण । एरच् ।

सुवर्णक । पु॰ आरग्वधवृक्षे ॥
पुष्पे शोभनोवर्णोऽस्य ॥ न॰
पित्तले ॥

सुवर्णकदली । स्त्री॰ कनकमोचा
याम् । चम्पकरम्भायाम् । चम्पा
केला॰ इ॰ भा॰ प्र॰ ॥

सुवर्णकार । पु॰ स्वर्णकारे ॥

सुवर्णकेतकी । स्त्री॰ हेमकेतक्याम् ॥

सुवर्णगैरिकम् न॰ गैरिकप्रभेदे ।
स्वर्णधातौ । सुरक्तके । सन्ध्याभ्रे ।
सोनोमाटी॰ पीलागेरु॰ इ॰ भा॰
प्र॰ ॥ सुवर्णगैरिकन्त्वन्यत्ततोर
क्ततरं हितत् । ततोगैरिकात् ॥
अस्यगुणा । गैरिकं मधुरं शीत
कषाय व्रणरोपणम् । विस्फोटा
र्शोऽग्निदाहघ्नवरं स्वर्णादिकं शुभ
म् ॥

सुवर्णनकुली । स्त्री॰ महाज्योतिष्म
त्याम् ॥

सुवर्णपुष्प । पु॰ राजतरुण्याम् ॥

सुवर्णप्रसरम् । न॰ एलबालुके ॥

सुवर्णमाक्षिकम् । न॰ स्वर्णमाक्षि
के ॥

सुवर्णयूथी । स्त्री॰ सुगन्धायाम् ।
हेमपुष्पिकायाम् । सोनजुही॰इ॰
भा॰ प्र॰ ॥

सुवर्णवणिक् । पु॰ अम्बष्ठाद्वैश्यक
न्यायां जाते वर्णसङ्करजातिविशेषे ।
कश्चिद्वणिग्विशेषस्त सर्गात्स्वर्णका
रेण । स्वर्णचौर्यादिदोषेण पति
तो ब्रह्मशापतः ॥

सुवर्णवर्ण । पु॰ विष्णौ । त्रि॰
स्वर्णवर्णे ॥ सुवर्णस्येव वर्णोऽस्य ॥

सुवर्णवर्णा । स्त्री॰ काञ्चन्याम् । ह
रिद्रायाम् ॥

सुवर्णबिन्दु । पु॰ विष्णौ हरौ ॥
बिन्दवोऽवयवा सुवर्णसदृशा अस्य
॥ शोभन वर्णमक्षरम्॰ बिन्दुश्च
यस्मिन्मन्त्रे तदात्मकोवा ॥

सुवर्णा । स्त्री॰ स्वर्णक्षीर्याम् ॥ ह
रिद्रायाम् ॥ वाह्यालके ॥

सुवर्णाह्व । पु॰ नागकेशरे । धत्तू
रे ॥

सुवर्णी । स्त्री॰ आखुपर्ण्याम् ॥

सुवर्त्तुलम । न॰ कालिङ्गे ॥

सुवल्लि । स्त्री॰ सोमराज्याम् ॥
शोभनावल्लिरस्याः ॥

सुवल्ली । स्त्री॰ सोमराज्याम ॥ क
टव्याम् ॥

सुवसन्त । पु॰ मधूत्सवे चैत्राद
क्षाम ॥

सुवसन्तक । पु॰ वासन्त्याम् ।
मदनोत्सवे ॥

सुवह । त्रि॰ सुखवाह्ये ॥ सुखेन
वहति । वह॰ । पचाद्यच् ॥ पु॰

वायौ प्रभेदे ॥

सुवहा । स्त्री० गोधापद्याम् ॥ सुष्ठु वहत्यामोदम् । वह० । अच् । टाप् ॥ शल्लकीद्रुमे ॥ एलापर्ण्याम् । तुलस्याम् ॥ वीणायाम् ॥ रास्नायाम् ॥ शेफालिकायाम् ॥ त्रिवृतायाम् ॥ नीलसिन्धुवारके ॥ रुद्रजटायाम् । हंसपद्याम् ॥ मुसल्याम् ॥

सुवास । पुं० शोभनगन्धे ॥ उत्तमनिवासे ॥

सुवासा । त्रि० । निर्मलवाससि ॥

सुवासिनी । स्त्री० ऊढानूढवयःस्त्रियाम् । चिरण्ट्याम् ॥ सुष्ठु अतीव वसति पितृगेहे० तच्छीला । सुप्य जाताविति णिनि । यदोक्तं च नार्थवे । विवाहिताप्यदेवेषिवाला एवकुमारिका । सुवासिन्योमहाप्रौढा । संशयोनास्तिसुव्रते । इति ॥

सुविक्रम । पु० सुष्ठु पादविन्यासे ॥ विक्रमस्य सौष्ठवनामगजसिंहादिगतिसदृशत्वम् ॥ त्रि० तद्वति ॥

सुविज्ञ । त्रि० अतिनिपुणे ॥

सुविज्ञेय । त्रि० सम्यग्ज्ञातुं शक्ये ॥

सुविदत्रम् । न० कुटुम्बे ॥ सुष्ठु वेत्ति । विदज्ञाने । सुविदे कत्र ॥

सुविदित । त्रि० प्रख्याते ॥

सुविधि । पु० उत्तमविधाने ॥ अर्हद्विशेषे ॥

सुविनीत । त्रि० अतिविनयविशिष्टे

सुविनीता । स्त्री० सुकरायाम् ॥

सुवीजम् । न० खसखसे । त्रि० साधुवीजे ॥

सुवीर । पु० देशविशेषे । त्रि० सुष्ठुवीरे ॥ शोभनाविविधादूरागतयोऽस्य ॥ शोभनवीर्यान्विते ॥

सुवीरकम् । न० सौवीराञ्जने । पु० एकवीरवृक्षे ॥

सुवीरजम् । न० सौवीराञ्जने । सुवीरेजातम् । जनी० । ड ॥

सुवीराम्लम् । न० काञ्जिके । सुवीरेषु० अभिषुतमम्लम् । शाकपार्थिवादि० ॥

सुवीर्य्यम् । न० बदरे ॥ उत्तमवीर्ये । त्रि० तद्वति ॥

सुवीर्य्या स्त्री० नाडीहिङ्गुनि ॥ वनकार्पास्याम् ॥ महाशतावर्य्याम् ॥

सुवृत्त । पु० शूरणे ॥ त्रि० सदाचारनिष्ठे । सुष्ठुवर्त्तुले । परिवर्त्तुले ॥

सुवृत्ता । स्त्री० काकलीद्राक्षायाम् ॥ शतपत्र्याम् ॥

सुवृष्टि । स्त्री० सम्यक्हितशोभनवर्षे ॥

सुवेगा । स्त्री० महाज्योतिष्मत्याम् ॥

सुवेल । पुं० त्रिकूटाचले ॥ त्रि०

ते : क्रमु : ॥

सुषम । त्रि० चारौ । रुचिरे । शोभने । सुन्दरे ॥ समे ॥ सुशोभन सम सर्वमस्य । सुविनिर्दुर्भ्यं इति ष . ॥

सुषमा । स्त्री० परमायांशोभायाम् । अनन्तशोभायाम् ॥ जिनानाङ्कालभेदे ॥ वर्णवृत्तविशेषे ॥ कर्णौद्यघु : कर्णौभगणा , शिशिरुचाप्यर्थरणा . । यस्यांभविताबाशिपरमासे भासुषमाद्योव्यत्सुषमा ॥ यथा । राधीनयनैर्विलोकलहंमिवान् मदविह्निलीकुरुते । धन्यारमणीसर्वसुहृदु ' खसुखवत्सांम्नमनुते ॥ शोभन सम सर्वमनया । सुविनिर्दुर्भ्य : सुपिसूतिसमादृति षत्वम् ॥

सुषवी । स्त्री० कारव्याम् । कृष्णजीरके ॥ जीरके ॥ कारवेल्ले ॥ सुखं सुवति । षूप्रेरणे । अच् । गौरादि । उपसर्गात्सुनोतीतिषत्वम् ॥ सुषवणा वा । चदेरप । सीरूयशा . । पिप्पल्यादि ' ॥ चुद्रकारवेल्ले ॥ इतिराजनिर्घण्ट ॥

सुषि , । स्त्री० छिद्रे ॥ सुषुष्यति । षो० । उपसर्गेषो ' विदिलिषाइ कुञ्चात्क्रि ' ॥

सुषिरम् । न० विवरे । विले । छिद्रे सुषिरे ॥ सुषिरस्त्वस्य । अर्शआदि

सुष्कामघोर ' ।

सुषीम । पुं० सर्पविशेषे ॥ चन्द्रकान्तमणौ ॥ वि० शिशिरे । शीतस्पर्शयुक्ते ॥ चारौ । रम्ये । मनोज्ञे सुष्ठुसीमामर्यादायस्य । सुषामादिषु चेतिषत्वम् ॥

सुषुप्त ' । पु० न० स्वप्नान्ते ॥ सुषुप्तास्वतमोऽज्ञान'बीज स्वप्नप्रबोधयो . ॥ सुषुप्त्यवस्थायाम् ॥ यथा । शोकागरैवधिरनुसुधाधर्मिंर्थोर्थान् भुङ्क्ते समस्तकरणै० इन्द्रितत्सहवान् । स्वप्ने० सुषुप्तउपसइरते० सएक स्मृत्यन्वयाचिगुणवृत्ति हगिन्द्रियेश । इ० शोभा० ११ स्क० ११ ऽध्याय ' ॥ वि० सुषुप्तियुक्ते ॥

सुषुप्तस्थान ' । पु० प्राज्ञे ॥ सुषुप्तस्थानमस्य ॥

सुषुप्ति . । स्त्री० सर्वोपरमावस्थायाम् । अहं किमपिनजानामिसुखेनमयानिद्राऽनुभूतेत्येव प्रकारेसत्वप्रधानेऽज्ञाने ॥ तज्ञानामान्तरङ्कारणशरीरम० आनन्दमयकोषश्चेति ॥ सर्व्वंसृष्टसूक्ष्मोपाधि कारणोपाधौलीनत्व सुषुप्तिरूमितितल्लक्षणम् ॥ शोभनासुप्ति . सुषुप्ति ॥

सुषुप्सु । वि० स्वप्नमिच्छौ ॥ स्वपि . सन्नन्तादुप्रत्यय । कदविद्रेत्या

दिनासन किस्वादविस्वपीठ्यादि नासम्प्रसारणम् ॥

सुषुम्णा । स्त्री० नाडीविशेषे ॥ साच । इडापिलङ्गयोर्मध्ये वर्त्तमाना० पृष्ठवंशान्तर्गतानाडी० सुषुम्णेत्युच्यते ॥ शोभन सुम्न सुखं यस्याम् ॥ पृ० ॥

सुषेण । पु० करमर्द्दे ॥ विष्णौ ॥ सुग्रीवश्वैद्ये ॥ ताराया वालिभार्यायाः पितरि ॥ वेतसे ॥ शोभना सेनायस्य । एतिसंज्ञायामगादिति षत्वम् । रषाभ्यामिति णत्वम् ॥

सुषेणिका । स्त्री० कृष्णत्रिवृतायाम् ॥ सुष्ठु सेनयति । सेनाशब्दात्० सत्यापपाशेतिणिच । पचाद्यच् । एतिसंज्ञायामगादिति षत्वम् । णत्वम् । स्वार्थे कन् ॥

सुषेणी । स्त्री० त्रिवृति ॥

सुषोमा । स्त्री० नदीभेदे ॥

सुष्ठु । अ० प्रशंसने ॥ अत्यर्थे ॥ सुतिष्ठति० सुस्थाने वा । ष्ठा० । अपदुस्सुषुस्थ इतिकु । सुषामादित्वात् षत्वम् ॥

सुसंयत । त्रि० कृतसंयमे । यथाविधिसंयमविशिष्टे ॥

सुसंवृत । त्रि० सिद्धे ॥ अतिनिगूढे । आचारनिर्हारविहारयोगाः सुसंवृताधर्म्मविदा तु कार्य्याः ॥

सुसंस्कृत । त्रि० घृतादिनानाद्रव्येणप्रयत्नेन सुपक्वे व्यञ्जनादौ । प्रयत्ने ॥ सुष्ठु संस्क्रियतेस्म । कर्म्मणि क्त । सम्परिभ्यामितिसुट् ॥

सुसंस्थान । त्रि० शोभनाकृतौ ॥

सुसंध्या । स्त्री० जनकभार्यायाम् ॥

सुसम्पत्०द् । स्त्री० परभागे ॥

सुसम्भृत । त्रि० अलङ्कृते ॥

सुसह । त्रि० दुःसहभिन्ने ॥

सुसाध्य । त्रि० सुकरे ॥

सुसार । पु० रक्तखदिरे ॥ मणिविशेषे ॥ त्रि० अतिशयसारवति ॥ शोभन सारोऽस्य ॥

सुसारवत् । न० स्फाटिके ॥

सुसिकता । स्त्री० शर्करायाम् ॥ शोभनवालुकायाम् ॥

सुसीमा । स्त्री० साधुसीम्नि ॥ हस्तीहंस्मातरि ॥

सुसेव । त्रि० सुष्ठु सेवितु योग्य ॥

सुस्थ । त्रि० नीरोगे । स्वस्थे ॥

सुस्थता । स्त्री० आरोग्ये ॥

सुस्थिर । त्रि० चाञ्चल्यरहिते । स्थिरतरे ॥

सुस्ना । स्त्री० खड्गकारी । खिसारी० हि० प्र० शमीधान्ये ॥ सुस्नाद्ध्वर्षा लताकुचाकषायाविषदागुरुरिति राजनिघंण्टः ॥

सुस्नात । पु० यज्ञान्तस्नानकृति । त्रि० सुन्दररूपेणकृतस्नाने ॥

सुस्नातकः । पुं० शोभनस्नातके ।

। स्वर्णपुष्पे ॥ न० चितुन्नके ॥ सूक्ष्मपर्णे ।

सूक्ष्मपत्रक. । पुं० सूक्ष्मपर्णे ॥ स्वार्थे कः ।

सूक्ष्मपत्रा । स्त्री० क्षुद्रजम्बूम् ॥ जीवन्त्याम् । दीर्घपत्रायाम् । डिण्डाम् ॥

सूक्ष्मपत्रिका । स्त्री० शतपुष्पायाम् ॥ शतावर्याम् । क्षुद्रोपोदिकायाम् दुरालभायाम् । आकाशमांस्याम् ॥ लघुब्राह्म्याम् ॥

सूक्ष्मपत्री० स्त्री० आकाशमांस्याम् ॥

सूक्ष्मपर्णा । स्त्री० जीर्णदारुणि । जीर्णफलन्याम् ॥ डिण्डाम् ॥

सूक्ष्मपर्णी । स्त्री० रामदूत्याम् । नागदन्तिकायां ॥

सूक्ष्मपिप्पली । स्त्री० वनपिप्पल्याम् ॥

सूक्ष्मपुष्पी । स्त्री० यवतिक्तायाम् ॥ गर्भे ॥

सूक्ष्मप्रपञ्च । पुं० हिरण्यगर्भे ॥

सूक्ष्मफल । पु० भूकर्बुदारे ॥

सूक्ष्मफला । स्त्री० तामलक्यां ॥

सूक्ष्मबदरी । स्त्री० भूबदर्यां ॥

सूक्ष्मभुवनाष्टकम् । न० अमरपुरविशेषु ॥ यथा । सूक्ष्मासरपुराण्यष्टौ पुर्यौपैशाचमादितः । राक्षसंयाक्षगान्धर्वैन्द्रमुमर्षिमत् ॥ सौम्यं प्राजेश्वरं ब्राह्म सौनमष्टमम्प्रि येति । पुष्टिकरसे० सूक्ष्मभुवनाष्टकम् । तेषुपैशाचमादितस्त्वष्टौ पैशाचम् । ततोराक्षसादि । ब्राह्म० सौम्यपरमयाश्रियेति । महर्षिमतो म. हेन्द्राद्यपतिशयाय । अधिककान्ति ॥ कृ० मृ० स० ता ॥

सूक्ष्मभूतम् । न० अपञ्चीकृताकाशादिभूते ॥

सूक्ष्ममर्माञ्चक. । पु० मशके ॥

सूक्ष्ममूला । स्त्री० जयायाम । वैजयन्तिकायाम् । आदि० कृ० प्र० पुष्पके । सूक्ष्ममूलमख्या ॥

सूक्ष्मबदरी । स्त्री० भूबदर्याम् ॥

सूक्ष्मवल्ली । स्त्री० जतुकायाम् ॥ ताम्रवल्ल्याम् ॥

सूक्ष्मवल्कम् । न० सूक्ष्मवसने ॥

सूक्ष्मवीज । पु० खसखसे ॥

सूक्ष्मव्रण । पु० किणे ॥

सूक्ष्मशरीरम् । न० सप्तदशावयवे लिङ्गशरीरे ॥ विज्ञानमयमनोमयप्राणमयकोशा० ज्ञानेच्छाक्रियाशक्तिप्रधाना एतत्कोशत्रयमिलितसत्० सूक्ष्मशरीरमित्युच्यते । यथाह भगवतीहिमाद्रिप्रतिदेवीगीतायाम् । ज्ञानेन्द्रियाणि पञ्चैव पञ्चकर्मेन्द्रियाणि च । प्राणादि पञ्चकञ्चैव धिया च सहितं मनः ॥ एतत्सूक्ष्मशरीरस्यान्ममलिङ्गमुच्यते । इति । सूक्ष्मशतन० शरीरम ॥

सूक्ष्मशर्करा । स्त्री॰ वालुकायाम् ॥

सूक्ष्मशाख । पु॰ जालवर्बुरे ।

सूक्ष्मशालि । पु॰ अणुधान्यविशेषे । सूचिशालौ ॥

सूक्ष्मषट्चरण । पुं॰ पक्ष्मयूके ॥

सूक्ष्मा । स्त्री॰ यूथिकायाम् ॥ वालुकायाम् ॥ क्षुद्रैलायाम् ॥ करुणायाम् । सूक्ष्मे आलिङ्गितटाप ॥ चाज्ञातकेशराधिवासिन्यामन्यायाम् ॥

सूक्ष्मेक्षणम् । न॰ शिल्पविद्याप्रसिद्धयन्त्रविशेषे ॥

सूक्ष्मैला । स्त्री॰ उपकुञ्चिकायाम् । त्रिपुट्याम् । त्रुटी । छोटीइला यवी॰ इ॰ भा॰ । अस्या गुणा यथा । एलासूक्ष्मा कफश्वासकासार्शो मूत्रकृच्छ्रहृत् । रसे तु कटुका शीता लघ्वी वातहरी मता ॥

सूच । पु॰ दर्भाङ्कुरे । सीव्यति । छिद्रं तन्तुसन्ताने । सिवेष्टूचेति चट् ॥

सूचक । पुं॰ सीवनद्रव्ये । वेधके ॥ शुनि । चोरे । बिडाले ॥ काके । वायसे । बुद्धे । सिद्धे ॥ पिशाचे ॥ कथके ॥ सूक्ष्मशालौ ॥ सूत्रधारे ॥ त्रि॰ पिशुने । दुर्जने । कर्णेजपे । परदोषाख्यायके । परस्य सतामसतां वा दोषाणां वा ख्यापके ॥ सूचयति । सूच पैशुन्ये॰ ण्वादिरन्तस्य । ण्वुल् ॥

सूचनम् । न॰ गन्धने ॥ ज्ञापने ॥ सूच॰ । ल्युट् ।

सूचना । स्त्री॰ व्यधने । वेधने दृष्टि । दृष्टौ ॥ गन्धने ॥ अभिनये ॥ टाप्

सूचि । स्त्री॰ व्यधन्याम् । सूच्याम् । सुकृ॰ इ॰ भा॰ प्र॰ ॥ नृत्यप्रभेदे ॥ शिखायाम् । सूच्यतेऽनया । सूच॰ । अचइ. ॥ अल्पगंसे ॥

सूचिक । पु॰ सौचिके । तुन्नवाये ॥

सूचिका । स्त्री॰ सूच्याम् । सीवनद्रव्ये ॥

सूचिकाधर । पु॰ गजे । हस्तिनि ॥

सूचिकापुष्प । पु॰ केतक्याम् ॥

सूचिकाभरणम् । न॰ औषधविशेषे ॥

सूचिकामुखम् । न॰ जलकरङ्के । जलशङ्खे । त्रि॰ सूच्यास्ये ।

सूचित । त्रि॰ ज्ञापिते ॥ सङ्क्षेपतोदर्शिते । सूच॰ । क्त ।

सूचिपत्र । पुं॰ शितावरशाके ॥

सूचिपुष्प । पु॰ केतकवृक्षे ॥

सूचिरोमा । पुं॰ शूकरे ॥

सूचिवान । पु॰ गरुडे ॥ इ॰ भ॰ व॰ सौ ॥

सूचिवदन । पुं॰ नकुले । मशके ॥ सूचितुल्यं वदनं यस्य ॥

सूचिशालि । पुं॰ सूक्ष्मशालौ ।

सूची । स्त्री • सीवनसाधने ॥ चाणिक्याऽभिनयान्तरे । अङ्गहारचेष्टायाम् ॥ स्त्रिया करणं ॥ सीव्यतेऽनया । षिवु तन्तुसन्ताने सिवेष्टू रूचेति चट् । टित्वान्ङीप् ॥ त्रि• पिशुनइति• श्रीधरस्वामिन ॥

सूचीदल । पुं• सितावरे ॥

सूचीपत्रा । स्त्री• गण्डदूर्वायाम् ॥ जलस्थ याम् ॥

सूचीपाश । पु• सूचीबन्धनहेतुभूते छिद्रे ।

सूचीपुष्प । पु• केतक्यां ॥

सूचीमुख । पु• शक्रदर्भे ॥ व्यूहविशेषे । न• हीरके ॥ नरकान्तरे ॥ त्रि• सूच्यास्ये ॥

सूचीरोमा । पु• शूकरे । त्रि• सूचीतुल्यरोमविशिष्टे ॥ सूचीसदृशानिरोमाणियस्यस ॥

सूचीव्यूह । पु• सूच्याकारव्यूहविशेषे ॥ पिपीलिकापङ्क्तिरिवायतश्रेणिवेन• सम्यग्रूपतया• यत्र यत्र• सैनिकावस्थान• समीपप्रवीरपुरुषमुख : सूचीव्यूह । तेनायतोऽभयसन्धियायात् ॥

सूच्यग्र : । पु • खण्डके । उज्ज्वल• दू• गौ• दे• भा• प्र• तृणविशेषे ॥ न• दर्भे ॥ सूच्यग्रभागे ॥

सूच्यग्रस्थूलक । पुं• तृणविशेषे ॥ यथा । सूच्यग्रस्थूलकोदर्भोऽपि व्यग्रपरच्छदइतिरत्नमाला ॥

सूच्यास्य । पु• मूषिके ॥ महानरकप्रभेदे ॥ त्रि• सूचीतुल्यमुखे ॥

सूच्याह्व । पु• सितावरे ॥

सूत । पु• सारथौ ॥ सुवतिगमयतिअश्वान् । सू• । गत्यर्थात्क्त ॥ त्वष्टरि । तक्ष्णि ॥ ब्राह्मण्यांक्षत्रियाज्जाते ॥ यथा । क्षत्रियाद्विप्रकन्यायांसूतोभवतिजातितइति । अस्यविवाहासम्भवात् कन्याग्रहणं स्त्रीमात्रप्रदर्शनार्थम् । ब्राह्मण्यांक्षत्रियाज्जात्यासूतनामा सञ्जायते ॥ पितामहस्य यज्ञे पृथोर्वैन्यस्ययज्ञे सूत्यांसोमाभिषवभूमौ सौत्येऽहनिसमुत्पन्नोनारायणांश• पुराणानांवक्तरि । पौराणिके ॥ यथोक्तंविष्णुपुराणे । तस्यैतदविवेचक्र इष्टातस्यपितामहः । विष्णोरंशपृथुमन्त्रापरितोषंपरययौ । तस्यैवकालमावस्ययज्ञे पैतामहेशुभे । सूत सूत्यांसमुत्पन्नः सौत्येऽहनिमहामती ॥ तस्मिन्नेवमहायज्ञे जज्ञेप्राज्ञोऽथमागध । प्रोक्तौ तदामुनिवरैस्तावुभौसूतमागधौ । स्तूयतामेषनृपतिः पृथुर्वैन्यः प्रतापवान् । इति १ अंशे १३ ऽध्याय : ॥ वन्दिनि ॥ सूर्ये ॥

• गृहम्• गेहम्• भवन
।वासौवा ॥
ोग । पु• नवप्रसूतायाव्या
॥
ष्ठी । स्त्री• सूतिकागारेजा
काख्यषष्ठदिनेपूज्यदेवीविशेषे॥
म् । न• सूतिकागारे ॥
त । पु• जन्ममासि । वैज
सूतौ प्रसवस्यमास ॥ सू
सौवैजननोनवमोदशमोपि
ाटाधर ॥
। न• गुडत्वचि । त्वक्पत्रे
े ॥
। त्रि• दक्षे । चतुरे ॥ सु
ःत्यामसुश्रोणीश्च ॥ न• श्री
थाने ॥
स्त्री• यज्ञस्नाने । अभिषवे
ने ॥ युवत्याम् । सूतयुवत्या
व्यण्डादेश ॥ सोमलतारस
सूतिकाश्चित्भरत ॥
न• सूतह• भा• प्र• वस्त्रा
। तन्तौ ॥ व्यवस्थायाम् ॥
दिसूचनायन्थे ॥ पदसाधक
॥ सूत्रलक्षणन्तु । यथा । स
ारिभाषाविधिर्नियमएवच
तथैवाधिकारश्चषड्विधंसूत्र
। अपिच । अल्पाक्षरमस
सारवद्विश्वतोमुखम् । अस्तो
ावद्यञ्चसूत्रंसूत्रविदोविदुरि



ति ॥ सूचनात्सूत्रमुच्यतइतिच ॥
सूत्र्यते । सूत्रवेष्टने• अदन्त• । एर
च् । सीव्यतेनेनवा । षिवु• । ष्ट
विसुच्योष्टेरूचेतिचकारात्• कि
तृष्टन्षप्रत्ययः ॥ भूतकारणे ॥
यथा । अण्डारम्भकभूतानामपञ्ची
कृतभूतकम् । एतच्चकारणमित्यर्थ
तदागमेनैवगम्यते ॥ अण्डारम्भक
पञ्चभूतकारणस्यापञ्चीकृतपञ्चभूत
तत्कार्यात्मकसूत्रस्यागमैकगम्यत्वा
त्तत्कागम्यत्वम् । तत्रस्मृतिमप्रमा
णयति । अचिन्त्याः खलुयेभावा
नतांस्तर्केणयोजयेत् । सूत्रान्त-
र्यस्यचराचितांकिंकानानुमन्वते
॥ तर्काभासोभवेत्तेषुहेतुदृष्टान्तव
र्जनादिति ॥ पत्रपाञ्चपविवक्ष
क्षया पुंसिचेतिपुंस्त्वमपि ॥
सूत्रकण्ठ । पु• विप्रे । द्विजन्मनि
॥ खञ्जरीटखगे ॥ कपोते ॥
सूत्रकोण । पु• डमरौ ॥
सूत्रगण्डिका । स्त्री• एषण्याम् ॥
सूत्रतन्तु । पु• सूत्रे ॥
सूत्रतर्कुटी । स्त्री• तर्कुण्याम् । तर्कु
वा• इ• भा• ॥
सूत्रधार । पु• इन्द्रे ॥ शचीपतौ
॥ नान्द्यन्तरसञ्चारिणि• नटवि
शेषे ॥ सतुरङ्गभूमिपरिक्रम्य
नाटकीयकथासूत्रसूचक । त
ल्लक्षणंयथा । चतुरोवाद्यनिपुणा

तोऽङ्गैरभूषितः समाहितः । नाना
भाषागमज्ञश्च काव्यशास्त्रप्रवृत्तिवि
त् ॥ नानागतिप्रचारज्ञो रसभाव
विशारदः । देशोपचारचतुरो ना
नाशिल्पकलान्वितः । छन्दोऽभि
धानतत्त्वज्ञः सर्वशास्त्रविचक्षणः
। तत्सङ्गीतानुगत्या च कलातालाव
धारणः ॥ अवधार्यप्रयोगानां योक्तॄ
णामुपदेशकः । एवं गुणगणोपेतः
सूत्रधारः स उच्यते ॥ शिल्पकारि
प्रभेदे । त्वष्टरि । रथकारे । वर्द्ध
कौ । इति हे॰ भा॰ । कुलाल॰ इति
गौ॰ दे॰ भा॰ प्र॰ ॥ सूत्रं धरति
। धृञ्॰ । कर्मण्यण् ॥

सूत्रपुष्पः । पु॰ कार्पासे ॥

सूत्रभित् । पु॰ सौचिकः । सौचि
के । तुन्नवाये ॥

सूत्रमध्यभूः । पुं॰ धूनके । यक्षधू
पे ॥

सूत्रयन्त्रम् । न॰ वायदण्डाख्यकाष्ठे
। सूत्रवेष्टनकाष्ठे । तसर॰ इति
गौ॰ भा॰ प्र॰ ॥ यथा । आवा
यन सूत्रयन्त्र यत्सूत्रैरभिवेष्ट्यते ॥
इति शब्दमाला ।

सूत्रला । स्त्री॰ तर्कुण्याम् ॥ इति
हा॰ लौ॰ ॥

सूत्रवीणा । स्त्री॰ वीणाप्रभेदे । ला
वुक्याम् ॥ इति हारावली ॥

सूत्रवेष्टनम् । न॰ तन्तुवायोपकरणे
। वसरे । तसर॰ इति गौ॰
भा॰ प्र॰ ॥ सूत्रस्य वेष्टनम् ॥ सू
त्रं वेष्टतेऽनेनेति तु स्वामी ॥

सूत्रात्मा । पु॰ समष्टिलिङ्गशरीराभि
मानिनि चैतन्ये । हिरण्यगर्भे ॥
सर्वानुस्यूतत्वात् सूत्रात्मा ॥
वायौ ॥ यथा । योऽण्डादि
स्थितो वायुः सूत्रात्मेति स्मृतोरि
त ॥

सूत्रामा । पुं॰ गोत्रभिदि । इन्द्रे । सु
ष्ठु॰ त्रै॰ । अत्यर्थं पुनःपुनस्त्रा
यते । रक्षपालने । आतोमनि
न्क्वनिब्वनिपश्च इति मनिन् ॥

सूत्राली । स्त्री॰ गलसूत्रे । गलमेख
लायाम् ॥ इति हारावली ॥

सूत्री । पु॰ काके । तत्पर्यायाय
था । ककिंतुकरटारिष्ट बलिपुष्ट
सकृत्प्रजाः । ध्वांक्षात्मघोषपर
भृद्बलिभुग्वायसा अपीत्यमरः । का
के । रतज्वरः सूचीभ्रामकोमूढमैथु
न । कारव । परभृत्खलुष्टाको
मौकुलिर्धिङ्क । मकर । सत्थवा
क काणोऽपकृष्टोनगरीवक । ऐ
न्द्रिगनाडोजकूटनिकायडकाकवाच
का ॥ त्रि॰ सूत्रविशिष्टे ॥

सूत्रोद्देश । पुं॰ भूमिकायां ॥

सूद । पु॰ सूपकारे । बल्लवे । आ
रालिके ॥ व्यञ्जने ॥ सारथ्ये ॥
लोध्रे ॥ अपराधे ॥ पापे ।

षूङ्प्राणिगर्भविमोचने । प्राणिप्रसवे च । सूङ क्ति॰ । चादेव ॥ सूर्य्यः ॥

सूरी । पु॰ पण्डिते । विदुषि ॥ सूर, सूर्योऽस्य पाअन्याऽस्य । च तद्धनिठणाविशौनि ॥ न॰ धूमे ॥

सूरी । स्त्री॰ कुन्त्याम् । पृथायाम् ॥ सूर्यस्त्री । पुयोगादितिङीष । सूर्यतिष्यागस्त्येतियलोपः ॥ राजसर्षपे । राजिकायाम् ॥

सूर्चम् । न॰ चादरे ॥ सूर्चादरे । ल्युट् ॥

सूर्च्य । पु॰ माषे ॥

सूर्प । पुं॰ प्रस्फोटने ॥ शोधितभाजने ॥ कुम्भपरिमाणे । द्रोणद्वयपरिमाणे । कृतिश्चैकपरिमाणा ॥ समर्ति । सृगतौ । सृशृभ्यामूच्चेतिदशपादीस्थपाठात्प ॥

सूर्पणखी । स्त्री॰ रावणस्य भगिन्याम् ॥ सूर्पशोधितभाजनम् । नखविदूषणं । सूर्प्पं शोधितभाजने नयश्चादिसत्क्रियानखयतिदूषयतीतिसूर्पणखी ॥

सूर्पपर्णी । स्त्री॰ मुद्गपर्ण्याम् ॥ पूर्वपदादितिणत्वम् ।

सूर्पारकम् । न॰ तीर्थविशेषे । रामतीर्थे ॥

सूर्म्मी । स्त्री॰ अयः प्रतिमायाम् ॥ शोभनाजीवं । बहुवीहिर्वा । सर्वतोक्तिन्नर्थादिति॰ गौरादित्वाद्वा ङीष् ॥ सूर्म्मी ज्वलन्तीप्रतिकृ न्मृच्यविशुरुष्णग ॥

सूर्य्य । पु॰ अर्कपर्णे ॥ सूरे । अर्यम्णि । आदित्ये । तपने । सवितरि । रवौ ॥ अश्वद्भ्यादिभि पूज्योऽप्यवराहपुराणे । यथा । उदयाद्रि' स्त एवं यस्तु भक्त्यानरो दिज । दृष्ट्वता ञ्जलिभिस्तं तद्भि पूजयेच्छुचि , । तस्यभाग्य पञ्चस्याशुभ यत्समुपार्जितम । तत्क्षणादेवनिर्दग्ध भस्मीभवतितस्यतादृति ॥ रश्मीनाप्रा चानारसानास्वीकरणात्सूर्यः ॥ यद्वा । सरत्याकाशे । सृ॰ । कर्त्तरिक्यप । निपातनादुत्वम् । तथ्मरपरस्वावलिचेतिदीर्घः ॥ यद्वा । सुवति॰ कर्मणिलोक प्रेरयति । षूप्रेरणे । कर्त्तरिक्यप् । निपातनात्क्यपोरुडागमः । उभयत्रराजसूयसूर्येत्यादिनानिपातनम् ॥ स्वतेजसाघ तिसर्वजगदितिवा । षूङ् प्राणिगर्भविमोचने । पूर्वन्निपातनम् सर्वावभासके ॥ पौर्णमासीचन्द्रे ॥ यथा । परीतन्तुदिवाप्रोक्तं विपरीतन्तुशर्वरी । पौर्णमासीगतश्चन्द्र सूर्य्यइत्यभिधीयतइति ॥

सूर्य्यकान्त । पु॰ अग्निमणौ । अग्निगर्भे । सूर्यमणौ । स्फटिकम नि । पुष्पवृक्षविशेषे । सूर्यमणी

सूर्य्यभक्ता । स्त्री॰ सुवर्चलायाम । आदित्यभक्तायाम् । तुल्‌तुल्॰ द्र॰ भा॰ ॥

सूर्य्यमणि । पु॰ सूर्य्यकान्तमणौ ॥ पुष्पवृक्षविशेषे । मचत्पुटे । पुष्पवृक्षे ॥

सूर्य्यमण्डलम । न॰ अर्कविम्बे ॥ सूर्य्यस्यमण्डलम् ॥

सूर्य्यमण्डलभेदी । पुं॰ परिव्राजि ॥ योगिनियुद्धस्थेऽभिमुखेऽभिमुखाहत तस्मिन् ॥

सूर्य्यलता । स्त्री॰ आदित्यभक्तायाम् ॥

सूर्य्यमुखी । स्त्री॰ सूर्य्यमुखीतिख्याते पुष्पवृक्षे ॥ सूर्य्यमुख्याहरेत्स्फोटयोनिरुक्रमिपाण्डुताम् । अर्कद्रुविशेष ॥

सूर्य्यलोक । पु॰ सौरभुवने ॥

सूर्य्यवंश । पु॰ सूर्य्यसन्ताने ।

सूर्य्यसञ्ज्ञम् । न॰ कुङ्कुमे ॥

सूर्य्यसारथि । पु॰ अरुणे ।

सूर्य्यहृदयम् । न॰ सूर्य्यस्तवविशेषे ॥

सूर्य्या । स्त्री॰ सूर्य्यस्येदेवताया मये या सिति सूर्य्यस्यदेवता । सूर्य्यादेवतायाचाप् । इन्द्रवारुण्यामोषधौ । विशाखायाम् ॥ नवोढायाम् ॥

सूर्य्यार्घ्यम । न॰ सूर्य्यसम्प्रदानकार्घ्ये ॥

सूर्य्यालोक । पु॰ आतपे ॥

सूर्य्यावर्त्त । पु॰ तुल्‌तुल्॰ इति प्रसिद्धेक्षुपविशेषे । सुवर्चलायाम् ॥ सूर्य्यावर्त्तो विषघ्नश्च ॥ सुगन्धिश॰ द्र॰ गौ॰ दे॰ भा॰ प्र॰ शाकविशेषे अयमपथ्यः यथा । मार्त्तेयमकरभोविशिर कपिपिप्पलो । आमातासौकर्कवितूप्रोक्ता सूर्य्यावर्त्त.सितोऽपरद्वतिरत्नमाला ॥ अराधकालोकाथत सूर्य्यावर्त्तसुशान्दिको रितिष्ट रायलोऽश्विरोरोगविशेषे ॥ यथा । सूर्य्योदय या प्रतिमन्दमन्दम क्षिञ्जु रुक समुद्र विगाढम् । विवर्द्धते चाशुमतश्चैव सूर्य्योऽवहतोऽनिवर्त्ततेव ॥ शीतेनशान्तिलभते कश्चिद्दुष्णो नजन्तु सुखमाप्नुयाद्वा । सशीर्षक कष्टतम विकारसूर्य्यावर्त्तसमुदाहरन्ति ॥ सूर्य्योदयमिति अधोक्ताआरभ्ये तियावत् । सूर्य्यावर्त्तो॰ सूर्य्यअधोगतौ ॥ इति ॥

सूर्य्यावर्त्ता । स्त्री॰ आदित्यभक्तायाम् ॥

सूर्य्याश्मा । पुं॰ सूर्य्यकान्तमणौ ।

सूर्य्याह्व । सूर्य्यवेटके ॥ सूर्य्याह्वेकाताटवविरोसमावितिचिकाण्डशेष ॥

सूर्य्याह्वम । न॰ ताम्रे ॥ पु॰ अर्कवृक्षे ॥ त्रि॰ सूर्य्यनामके ॥

सूर्य्येन्दुसङ्गम ॥ पु॰ दर्शे । अमा

स्थायाम ॥ सूर्य्येन्दूसङ्गच्छेतोष्विन । च ॥

सूर्य्योढ । पु॰ सूर्यास्तकालप्राप्तेऽतिथौ ॥ यथा। सूर्य्योढस्तुसम्प्राप्तो य सूर्य्येऽस्तङ्गतेऽतिथिरितिहेमचन्द्र । अप्रणोद्योऽतिथि : सायसूर्य्योढोगृहमेधिनेतिमनु ' ॥ सूर्य्येणऊढ प्रापित. ॥ अस्तंगतसूर्य्ये ॥ यथा । दिवातिथौतुविमुखेगतेयत्पातकभवेत् । तदेवाष्टगुणं रात्रौसूर्य्योढेविमुखेगतइतिविष्णुपुराणम ॥

सूर्य्योदय । पु॰ भानोः प्रकाशे। सयथादेवीभागवते । पञ्चपञ्च ५५ उषःकाल सप्तपञ्चा ५७ रुणोदय । अष्टपञ्च ५८भवेत्प्रात शेष सूर्य्योदय ' स्मृतइति । तत्रप्रयननिषेध यथा । सूर्य्योदयेचास्तमितेच शयानंविमुञ्चतियोऽपिचक्रपाणिनमिति ॥

सृक । पु॰ वाणे ॥ कुमुदे । कैरवे ॥ उत्पले । पद्मे वाते । वायौ ॥ सरति॰ सर्पतिवा । सृगतौ । सृवृभृशुषिमुषिभ्य कक् । सृकसरणशीलमितिवेदभाष्यम् ॥

सृकण्डु : । पुं॰ कण्डूरोगे ॥

सृका । स्त्री॰ पद्मवत्यारत्नमय्यांमालायाम् ॥ अकुत्सितायांरत्नमय्यांगतौ ॥ टाप् ।

सृकाल : । पुं॰ सृगाले ॥

सृक्कम् । न॰ सृक्वणि ॥

सृक्कणी । न॰ २ ओष्ठयोः प्रान्तभागे । सृजतिलालादि । सृजविसर्गे । बाहुलकात्कनिन् । अत्वम् ॥ प्रान्तावोष्ठस्यसृक्कणीद्वयमर । ओष्ठप्रान्तौजाताविकत्थन ॥

सृक्क । )
सृक्का । ) न॰ सृक्वणि ॥

सृक्कि । न॰ सृक्वणि ॥ स्वर्णकणोभरतश्च ॥

सृग । पु॰ भिन्दिपाले ॥ सरति । सृ॰ बाहुलकात्॰ गक् ॥

सृगाल । पु॰ गोमायौ । जम्बुकेशिवाल॰ इ॰ भा॰ प्र॰ मृगधूर्त्तके ॥ सृजतिमायाम । सृज॰ । बाहुलकात्कालन् । न्यङ्क्वादि । असृगालातिवा । क ' । पृषोदरादि । सृगंलातिवा । पञ्चस्वर ॥ दैत्यविशेषे ॥

सृङ्का । स्त्री॰ सृकायाम ॥ सृतौ ॥

सृङ्ग् । पु॰ सृष्टिकर्त्तरि ॥ सृजेक्विप ॥ सृजीसृज॰ कृष्यादिकर्मणि ॥

सृजकाक्षर । पुं॰ सर्जिकाक्षारे ॥

सृज्यमान । त्रि॰ सक्तलभूतसृष्टि ॥

सृञ्जय । पुं॰ पाण्डवानांसेनापतौ ॥

सृक्वि । पुं॰ चन्द्र ॥ सूर्ये ॥ वायौ ॥ सरति । सृ॰ जनिदेश्या

द्विमासर्ति क्विन् ॥ धर्मौ । पुं० स्त्री० बहुवी ॥ सृणिः विद्यामि अमरः । सृणि. स्यादङ्कुशोपुमा निति । तोभवति कीयमङ्कुश ॥ सरतिचन्तरगच्छति • अनयाया । सृ० । सृवृधिभ्यां किदितिनि • ॥

सृणिका । स्त्री० लालायाम् ॥ संज्ञायाकन् ॥

सृणीका । स्त्री० लालायाम् ॥ सरति । सृ० । सर्तेर्नुक्चेति• ईकन् ॥

सृत । वि० गते ॥ सृधातोः क्त प्रत्ययेननिष्पन्न ॥

सृतिः । स्त्री० गमने ॥ मार्गे ॥ सरत्यनया । सृगतौ । क्तिन् ॥ एकायाम् । कुत्सितायांम् दुःखमय संसारायांगती ॥

सृत्वा । पुं० विसर्पे ॥ पश्चिष्वि हयौ ॥ प्रजापतौ । सरति । सृ० । श्रीङ्कीभ्यादिना क्वनिप । तुक ॥

सृत्वर । वि० गमनशीले ॥ सरति तच्छील । सृ० इण् नशजिस र्त्तिभ्य क्करप् ॥

सृत्वरी । स्त्री० गमनकर्त्याम् ॥ टिड्ढेतिङीप् ॥

सृदर । पुं० । सर्पे ॥

सृदाकु । पुं० वायौ ॥ अग्नौ ॥ ज्वलने ॥ धर्मौ ॥ प्रतिसूर्यकै ॥ दावाग्नावितिहैम । सरत्यग्र धर्मम् । सृ० । सर्त्तेर्दुक्चेति काकुप्रत्यय ॥

सृदाकु । स्त्री० नद्याम् ॥

सृपाट । पुं० सृपाव्याम् ॥

सृपाटिका । स्त्री० चञ्च्वाम् ॥

सृपाटी । स्त्री० माने । गौरादित्वा न्ङीष् ॥ रक्तधारीयाम् ।

सृप्रः । वि० गते । प्रविष्टे ॥

सृप्यमाण । वि० पच्यमाने ॥ सृ प्यमाण पदीयस्मिन्पतन्त्युपरिगा स्तथा ॥

सृप्र० । पुं० चन्द्रे । निशाकरे ॥ सर्पति । सृपस्लगतौ । स्फायि तञ्चिवञ्चिशकीच्छादिनारक् ।

सृमर । पुं० मृगविशेषे ॥ यस्य गौलवालो कान्ताकचसाहाय्य क्रियते • सचमश्चिमाक्रान्तिर्भवति । सरणशील । सृ गतौ । सृघस्यद क्मरच् ।

सृष्ट । वि० निर्म्मिते । रचिते । युक्ते ॥ निश्चिते ॥ प्रचुरे । प्राप्ते । भूषिते ॥ मुक्ते । त्यक्ते । सर्जनम । सृज० । भावेक्त ॥

सृष्टि । स्त्री० सर्गे । निर्माणे । निर्मितौ ॥ स्वभावे । त्यागे ॥ सर्जनम् । सृज० क्तिन् । सृ ज्यतेद्वितिकर्म्मणिवाक्तिन् ।

सृष्टिप्रदा । स्त्री० गर्भदायोक्षुपे ॥

सेतुश्च मूर्द्धसञ्ज्ञा ॥ लग्नस्तु बिमा
न । सेयेतिसीतालुरिभेनियेऽस्मिन्
हिमुसिललमेससद्स्वरायने । चतु
ष्टयेविक्रमबैरिलाभगेरसाभुभि ।
सेतुनिबन्धनमर्थे ॥ इति १९ अ
ध्याय ॥

सेतुभेदी । पु॰ दन्तीवृक्षे ॥

सेतुवृक्ष । पु॰ वरुणद्रुमे ॥

सेवम् । न॰ बन्धनद्रव्ये । निगडे ।
षिञोङ्॰ भा॰ प॰ ॥ सीयतेऽनेन
। षिञ्बन्धने । दाम्नीशसेतिकर
णेष्ट्रन् ॥

सेदिवान् । त्रि॰ निषस्ने ॥ षद्लृ॰
। भाषायांसदवसश्रुवइति॰ लिट
स्क्वसादेश लिटिधातोरिति द्वित्वे
॰ अतएकहल्मध्यइति॰ एत्वा
भ्यासलोपौ । इट् ॥ स्त्रियांसुगित
स्त्रीलिङ्गेऽपि॰ वसोरितिसम्प्रसार
णे वलादित्वाऽभावान्नेट् । से-
दुषी ॥

सेदु । पुं॰ नाटाक्षे । रावनेमिषि ।
तरक्षुणि ॥

सेना । स्त्री॰ ध्वजिन्याम् । वाहिन्या
म् । पृतनायाम् । सैन्ये इन्द्रा
ण्याम्चरि ॥ सिनोति । षिञ्॰
। कृवृजृसिद्रुपन्यनिस्वपिभ्योनिदि
तिनन् । टाप् ॥ सहइनेनस्वामि
नावा ॥

सेनाग्रग । पुं॰ सेनापतौ ॥ सेनाया
अग्रेगच्छतिगम्॰ । डः ॥

सेनाग्रणी । पु॰ सेनाग्रेसरे ॥

सेनाङ्गम् । न॰ हस्त्यादिचतुष्के ॥ त
था । हस्त्यश्वरथपादातं सेनाङ्ग
स्याच्चतुष्टयमिति ॥ अम॰ नाविका
टविकादीनांपदातावन्तर्भाव । नौ
कानांरथेष्वन्तर्भाव । महिषादीनां
गजाश्वेष्वन्तर्भाव । सेनायाअङ्गम् ॥

सेनानायक । पु॰ बलाध्यक्षे । से
नापतिद्ध्यक्षोऽन्यस्मिन्पत्यौ ॥

सेनानिवेश । पु॰ शिबिरे ॥

सेनानी । पु॰ अग्निभुवि । गुहे ।
कार्त्तिकेये । सेनापतौ ॥ पृतना
धिपे ॥ सेनांनयति । णीञ॰ ।
सत्सूद्विषेतिक्विप् ॥

सेनानुचारी । पु॰ सेनाग्रगे ॥ सेना
मनुचरन्यागेकरोति । णिनि ॥

सेनापति । पु॰ सैन्यपे । वाहिनी
पतौ ॥ पत्तिद्वयकस्यैक पति ।
सेनापतिरुच्यते । तल्लक्षणं यथा ।
कुलीन शीलसम्पन्नोधनुर्वेदवि
शारदः । हस्तिशिक्षाश्वशिक्षासु
कुशलः श्लक्ष्णभाषणः ॥ निमित्ते
शकुनज्ञानेवेत्ताचैवचिकित्सिते ।
कृतज्ञः कर्मणांशूरस्तथाक्लेशसहो
ऋजुः । व्यूहतत्त्वविधानज्ञः फ
ल्गुसारविशेषवित् । राज्ञासेनाप
तिःकार्योब्राह्मणः क्षत्रियोऽथवेति
मात्स्ये राजधर्मे ॥ कार्त्तिकेये ।

नावसाद्विसीवने । कृतौ । षि
वुतन्तुसन्तानेः ल्युट् ॥ सेइसेव
नेवा ।
सेवना । स्त्री॰ परिचर्यायाम् । सेवा
याम् ॥
सेवनी । स्त्री॰ सूच्याम ॥ शरीरावय
वसंयोगविशेषे ॥ यथा । सेवन्य
स्यतासास्तुभवेयु पञ्चमस्तके ।
एकाशिफासिजिह्वायामेकाशिवेन्न
ता क्वचिद्दितिभावप्रकाश ॥
सेवन्ती । स्त्री॰ शतपत्र्याम् ॥
सेवा । स्त्री॰ । सेवने । भक्तौ ॥ से
व्यचित्तानुवर्त्ती । सर्वभावेनसेव्या
नुकूलकारितायाम् । श्ववृत्तौ ॥ वे
तनग्रहणेनाज्ञाकरणसेवेतिव्याख्या
तार । सेवातुदीनहर्षसन्दर्शन
स्वामितर्जनीचक्रियादिधर्म्मयो
गात् ॥ शुनइववृत्तिर्भवति । ब्राह्मणे
नसानकार्या । सेवाश्ववृत्तिराख्या
तातस्मात्तांपरिवर्ज्जयेदितिमनुवच
नात् ॥ सेवनम् । सेव॰ । गुरोश्च
हलः । टाप ॥ सेवनमाराधन
मुपभोगश्चाश्रयणञ्चेति । यथा । विष्णु
सेवनी॰ सुखसेवनी॰ तीर्थसेवनीसा
धुरिति ॥ परस्मैपदप्रवृत्तु । नीच
मप्युत्तमपिसेवतिनीचएव । स्वाधी
नैविभवैप्यवीनरपतिंसेवतिकिमा
निन ॥ इत्याद्युदाहरन्ति ॥
सेवि । न॰ सेवे । सेविते । मुष्टि
प्रमाणवदरे ॥
सेविका । स्त्री॰ दुग्धपक्वाल्पपिष्टके ।
सिमई॰ सेवी॰ इ॰ भाषा॰ प्र॰
॥ यथा । समितावर्त्तिका सू
क्ष्मासुसूक्ष्मायवसन्निभा । शुष्का
क्षीरेषु संसाध्या भोज्याघृतसिता
न्विता ॥ सेविकातर्पणी वल्या
गुर्वीपित्तानिलापहा । ग्राहिणी
सन्धिकृद्रुच्यातावद्दोषातिमाध
या ॥
सेविकामोदक । पु॰ लड्डुकविशे
षे । सेवकालडू॰ इ॰ भा॰ प्र॰ ॥
तत्प्रक्रियायथा । घृताढ्यसमि
तयाकृत्वासूचाविसानितु । नि
पुणोभर्ज्जयेदाज्ये खण्डपाकेनयोज
येत् । युक्तेनमोदकान्कुर्यात्तेषु
णेमंठकायथा ॥
सेवितम् । न॰ सेविवदरे । सैवफले
॥ त्रि॰ समुपासितेगुर्वादौ । वरि
वसिते ॥ अनुष्ठिते ॥ उपभुक्ते ॥
आश्रिते ॥
सेव्य । पु॰ अश्वत्थवृक्षे ॥ हि
ज्जलद्रुमे । न॰ उशीरे । वीरण
मूले ॥ त्रि॰ सेवार्हे ॥ सेवि
तुमर्हे । विहृसेवने । ण्यत् ॥
सेव्या । स्त्री॰ वन्दाकवृक्षे ॥
सैंह । त्रि॰ सिंहसम्बन्धिनि ॥ सिं
हस्याऽयम् । अण् ॥
सैंहली । स्त्री॰ सिंहपिप्पल्याम् ।

न: । तत्रभवद्गत्व्यन् । चर्ष ' ।
सैरिभ । इवाच्च ॥ सैरीय .
ककपातवत् ॥

सैरीयक ' । पुं॰ भिण्टाम् ॥ स ष्टा
र्थकन् ॥

सैरेय . । पुं॰ भिण्टाम ॥ सैरिभ
व . । नवाङ्गिण्टोटक ॥

सैरेयक । पु॰ भिण्टाम् ॥ सैरेय
शब्दात् स्वार्थकन् ॥ पक्षमुणाय
था । सैरेय कुष्ठवातास्रकफकण्डु
विषापह । तिक्तोष्णोमधुरोदन्त
सुस्निग्ध केशरञ्जन ' ॥ इति ॥

सैवालम । न॰ शैवाले ॥

सोढ । वि॰ क्षान्ते । सहिष्णौ ।
सह्यतेस्म । षहमर्षणे । क्त ' । स
हिवहोरोदवर्णस्य ॥

सोढा । वि॰ तितिक्षासयुक्ते । सहित
रि ॥ क्षन्तो ॥ सहते । षहमर्षणे ।
षद्‌लृत्‌वा वितितृच् ॥

सोत्कण्ठ ' । वि॰ उत्कण्ठायुक्ते ।
उत्के । उन्मनसि ॥

सोत्प्रास ' पु॰ सशब्दहासे । चा
टुरितकि । आदायचुरितक हा-
स ' सोत्प्रासस्तुभसर ॥ उत्प्रा
सनम् । असुक्षेपणे । षसुगति
दीप्त्यादानेषुवा । घञ् । उत्सहि
त ' सोत्प्रास : । उत्प्रासेनाधिक्ये
नार्थप्रयोजनासहित सोत्प्रास ' ॥
न॰सोक, ठनि । प्रियवाक्ये ॥



सोदक ' । पुं॰ पिण्डप्रदातारं पुरुष
मारभ्यदशमपुरुषान्तेषु ॥ यथा ।
पिण्डदात्सप्तपुरुषा सपिण्डा.स
प्रिता . प्रिये । सोदकादशमान्ता .
कुलात ' श्रीवर्णगोत्रजाइति ॥

सोदय । वि॰ उदयेनसहवर्त्तमाने ।
वृद्धियुक्ते । लाभसमेत इ॰भाषा ॥

सोदर । पु॰ सहोदरे ॥ सहउ
दरेयवर्त्तते । वोपसर्जनस्येतिस
। सहसमानमुदर यस्येतिवा ॥ स
मा स् तोयस्यापि ॥

सोदरा । स्त्री॰ सहोदरायांभगिन्या
म् । टाप् ॥

सोदर्य . । पु॰ समानोदर्ये । सग
र्भ्ये । सहजे । समानेउदरेशयि
त स्थित . । सोदराद्य . । वि
भाषोदरे॰ इतिसमानस्यस . ॥

सोनह । पु॰ लशुने ॥ इ॰ म॰
र॰ को ॥

सोन्माद । वि॰ उन्मादिन्यौ । सोन्मा
दे। सहोन्म देनवर्त्तते । वोपसर्ज्ज
नस्य ॥

सोपकरण . । वि॰ उपकरणेनसह
वर्त्तमाने । उपकरणविशिष्टे ॥

सोपकार । वि॰ उपकारविशिष्टे ॥

सोपधम् । वि॰ सच्छद्मदानादौ ॥

सोपपदा । स्त्री॰ चतुर्थ्यायविशेषे ।
यथा । सिताश्वेहितीयायथा
ऽऽविनेदशमीतया । चतुर्थीवादशी

माधिपता सोपपदाः स्मृताः ॥
इति ॥

सोपप्लव । पु॰ राहुग्रस्ते॰ इन्दौ । राहुग्रस्ते पूषणि । राहुग्रस्ते त्रि न्दौ च॰ पूष्णि च । सोपप्लवोपर क्तौ हा विश्वमरः । राहुकर्तृकग्र सनकर्मीभूतचन्द्रे पूषणि च । उपर क्ते ॥ सहउपप्लवेन राहुणा॰ इति सोपप्लव । तेनसहेतीतिसमासः । वोपसर्जनस्येतिसहस्य स ॥ त्रि॰ आपद्गते ॥

सोपमर्द । त्रि॰ तिरस्कारसहिते ॥

सोपवास । त्रि॰ उपवासविशिष्टे ॥

सोपाक । पु॰ चाण्डालेनपुक्कस्यां निर्तेऽन्त्यजविशेषे । भङ्गीतिप्रसि द्धे ॥ मारवोचिताघराधि॰ राजा देशेनमारयन्॰ तेनास्यवृत्ति । यथा । चाण्डालेनतुसोपाकोमूल व्यसनवृत्तिमान् । पुक्कस्यांजायते पाप सदासज्जनगर्हितः ॥ इ तिमनु ॥

सोपाधि । त्रि॰ उपाधियुक्ते ॥ प्रतिज्ञाभेक्ष्यादिमाद्रामादौ ॥

सोपानम् । न॰ पाषाणादिरचिते॰ सौधाद्यारोहणे । आरोहणे । पैडी॰ इ॰ भा॰ प्र॰ । सहविद्य मानउपरिचारोगमनमनेन ॥ आ रोहणस्सोपान पैडोइतिसमाख्ये । सोपानिकाछचटिर्तिनि श्रेणि

स्वधिरोहिणीतिशब्दरत्नावली ॥

सोभाञ्जन । पु॰ शोभाञ्जने ॥

सोम । पु॰ शिवे ॥ उमयासहि त । हिमदीधितौ । चन्द्रे ॥ सोमेऽमावास्यायामरुणोदयमारभ्य स्नानकालपर्यन्त मौनीभूत्वास्ना नात्गोसहस्रदानफलम्भवतीत्या हव्यास । सिनीवालीकुहूर्वापि यदिसोमदिनेभवेत् । गोसहस्रफ लदद्यात्स्नानयन्मौनिनाकृतमि ति ॥ अमृतसौति॰ सोम । षुप्रसवैश्वर्ययो । अर्तिस्तुसुहु सृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्निति मन् ॥ वानरे ॥ कुबेरे ॥ पितृदेवे । यमे ॥ समीरणे ॥ व सुप्रभेदे । नीलपत्री ॥ कर्पूरे ॥ सोमलतौषधौ ॥ सोमलतारसे ॥ सोमलतासाधनकेयागे ॥ दिव्यौ षध्याम् ॥ अमृते ॥ पर्वतविशे षे ॥ न॰ नीरे । जले ॥ काञ्जि के ॥ स्वर्गे ॥

सोमगर्भ । पुं॰ विष्णौ ॥ सोमो गर्भोऽस्य ॥

सोमज । पु॰ बुधे ॥ न॰ दुग्धे ॥ त्रि॰ चन्द्रजे । सोमाज्जात । जनी॰ । ड ॥

सोमतीर्थम । न॰ प्रभासतीर्थे ॥

सोमधारा । स्त्री॰ देवपथे । नभ सरिति ॥

दे। पर्णोकटुस्त्रिला। रसायनीति ॥ अपि च। सोमवल्ली महागुल्मा यज्ञश्रेष्ठा धनुर्लता। सोमा द्विगुल्मवल्ली यज्ञश्रेष्ठा द्विजप्रिया। सोमक्षीरा च सोमा च यज्ञाङ्गा रुद्रसंख्यया। सोमवल्ली कटुः शीता मधुरा पित्तदाहहृत्। तृष्णाविशोषशमनी पावनी यज्ञसाधनीति रा॰ नि॰ ॥ ब्राह्मीौषधी ॥

सोमवल्लिका। स्त्री॰ गुडूच्याम्। सोमवल्याम् ॥

सोमवंश। पुं॰ युधिष्ठिरे अजातशत्रौ। चन्द्रवंशे। सोमस्य वंश ॥

सोमवल्क। पुं॰ धवलकट्फले। खदिरे। रीठाकरञ्जे। करञ्जे ॥ सोमस्य वल्को वल्कलमस्य ॥

सोमवल्कल। पुं॰ कट्फले। श्वेतखदिरे ॥ सोमस्य वल्कलमस्य ॥

सोमवल्लरी। स्त्री॰ ब्राह्म्यामोषधौ ॥ सोमवल्लरी। सोमलतायाम् ॥

सोमवल्लिका। स्त्री॰ सोमराजिनि ॥ सोमवल्ली। स्वार्थे कन् ॥

सोमवल्ली। स्त्री॰ वत्सादन्याम्। छिन्नरुहायाम्। गुडूच्याम् ॥ सोमस्य वल्ली ॥ वाकुच्याम्। सोमलतायाम् ॥ सोमवल्ली त्रिदोषघ्नी कटुः। तिक्ता रसायनी ॥ पातालगरुड्याम्। ब्राह्म्याम् ॥ सुदर्शनायाम् ॥

सोमवार। पुं॰ सोमस्याधिष्ठिते दिने ॥

सोमविक्रयी। पुं॰ सोमलतारसविक्रयकर्त्तरि ॥

सोमवृक्ष। पुं॰ कट्फलवृक्षे। श्वेतखदिरे ॥

सोमशकला। स्त्री॰ शशाङ्कलेखायाम् ॥ चन्द्रखण्डविशिष्टायाम् ॥

सोमसञ्ज्ञम्। न॰ कर्पूरे ॥

सोमसद्। भू॰ लि॰ पितृगणान्तरे ॥ विराट्सुता सोमसदः साध्यानां पितरः स्मृताः ॥

सोमसवन। पुं॰ ब्रह्मलोकस्याश्वत्थवृक्षे। सोमोऽमृतं सवतीति। युच् ॥

सोमसार। पुं॰ खदिरे ॥

सोमसिद्धान्त। पुं॰ बौद्धविशेषे ॥

सोमसिद्धान्ती। पुं॰ सोमसिद्धान्तवेत्तरि। कापालिके ॥ तल्लक्षणं प्रबोधचन्द्रोदये यथा। नरास्थिमालाकृतचारुभूषणः श्मशानवासी नृकपालभोजनः। पश्यामि योगाञ्जनशुद्धदृष्टिर्जगन्मिथो भिन्नमभिन्नमीश्वरात् ॥ अपि च। मस्तिष्कान्त्रवसाभिघारितमहामांसाहुतीर्जुह्वतां वह्नौ ब्रह्मकपालनिर्मितसुरापानेन नः पारणा। सद्यः कृत्तकठोरकण्ठविगलत्कीलालधारोज्ज्वलैरर्च्यो नः पुरुषोपहारबलिभिर्देवो महाभैरव इति ॥

क्। टिट्ढाणञिति ङीप्॥
सौप्तिकम्। न॰ रात्रिमारणे। रात्रियुद्धे॥ महाभारतस्यपर्वविशेषे॥ त्रि॰ सुप्तिसम्बन्धिनि॥
सौभम्। न॰ खसस्थारिपुरे॥ हरिश्चन्द्रपुरे॥
सौभगम। न॰ सुभगत्वे॥
सौभद्र। पु॰ सुभद्रातनयेऽभिमन्यौ॥ सुभद्राया अपत्यम्। अत्रबाह्वो मदीमानुषीभ्यश्चण्॥ सङ्ग्रामविशेषे॥ सुभद्राप्रयोजनमस्य। सङ्ग्रामेप्रयोजनयोद्धृभ्यश्चण्। ग्रन्थविशेषे॥ सुभद्रामधिकृत्यकृतो ग्रन्थः। अधिकृत्यकृतेग्रन्थे॰ ण्। त्रि॰ सुभद्रासम्बन्धिनि॥
सौभद्रेय। पु॰ अभिमन्यौ॥ सुभद्राया अपत्यम्। स्त्रीभ्योढक्॥ विभीतकवृक्षे॥
सौभरम्। न॰ सामविशेषे॥
सौभरि। पु॰ पुराणप्रसिद्धेपरमहंसे। मुनिविशेषे। *
सौभागिनेय। पु॰ सुभगासुते॥ सुभगाया अपत्यम्। कल्याण्यादीनामिनङ्चेतिढक्॰ इनङादेशश्च। हृद्भगेत्युभयपदवृद्धिः॥
सौभागिनेयी। स्त्री॰ सुभगात्मजायाम्॥
सौभाग्यम्। न॰ विष्कम्भाद्यन्तर्गतयोगविशेषे॥ तज्जातफलं यथा। सौभाग्यजन्मासुभगोमनुष्यः स्याच्छ्रीजनानां धनवान् गुणज्ञः। उदारचित्तोबलवान्विवेकीमहाभिमानी प्रियभाषणश्चेति॥ सिन्दूरे॥ टङ्कणे॥ सुभगत्वे। तल्लक्षणं यथा। अत्यनिद्रोऽल्पभुक्त्वागम्भीरमितभाष्यमसूयकइति॥ सुभगस्यभावः कर्मवा। ष्यञ्। हृद्भगसिन्ध्वन्तेपूर्वपदस्यचेत्युभयपदवृद्धिः॥ व्रतविशेषे॥
सौभाग्यकरणम्। न॰ वाक्सम्यक्तौ॥ यस्यार्वजन्यसुभगत्वमिच्छेद्वाक्सर्वसत्त्वदेसुपरीक्षणम्। प्रीतिदोषानसतोऽप्यनेकान्परस्यदोषकर्णांकरोति॥
सौभाग्यचिन्तामणि। पुं॰ सारकौमुद्युक्तौषधविशेषे॥
सौभाग्यशुण्ठी। स्त्री॰ पाकविशेषे॥ यथा। नागरस्यपलान्यष्टौघृतदेयञ्चतत्समम्। क्षीरं त्रिप्रस्थसंयुक्तं खण्डस्याष्टशतं पलम्॥ पचेन्मृदग्निनासम्यक् यथापाकोभवेत्तदा। चूर्णंदद्यात्त्रिजातस्यत्र्योषस्यचपलोन्मितम्॥ भक्षयेत्प्रातरुत्थायशुभिरश्मूलघ्नमाहृतम्। सूर्यावर्त्तहनुस्तम्भमन्यास्तम्भगलग्रहम्॥ बलवर्णकरंहृद्यंवलीपलितनाशनम्। अनेनपाकशमनं सौभाग्यकरमुत्तमम्भिषितपाकावली॥
सौभात्रम्। न॰ सुभ्रातृणांभावे॥ यु

आदित्वादण् ॥

सौमदत्ति: । पुं॰ क्षत्रियविशेषे । भूरिश्रवसि ॥ सोमदत्तस्याऽपत्यम् । अतइञ् ॥

सौमनसा । स्त्री॰ जातिपत्र्याम् ॥

सौमनसायनी । स्त्री॰ जातिपत्र्याम् । मालतीपत्रिकायाम् । जातिकी ॰ इ॰ भा॰ प्र॰ ॥

सौमनस्यम् । न॰ शोभनमनोभवे ॥ कुसुमसमूहे ॥ श्राद्धेपिण्डदानानन्तरं ब्राह्मणहस्ते पुष्पदानमन्त्रे

सौमनस्यवान् । त्रि॰ प्रीतिमति ॥

सौमनस्यायनी । स्त्री॰ मालतीकलिकायाम् ॥ यथा । मालतीपुष्पकलिकासौमनस्यायनीविदुरितित्रिकाण्डशेष: ॥

सौमिक: । पुं॰ सोमरससाध्येऽग्निष्टोमादियागे ॥

सौमिकी । स्त्री॰ दीक्षणीयेष्टौ ॥ इ॰ है॰ चन्द्र ॥

सौमित: । पुं॰ लक्ष्मणे ॥

सौमित्रि । पुं॰ रामानुजे । लक्ष्मणे ॥ सुमित्रायाअपत्यम् । बाह्वादित्वादिञ् ॥

सौमी । स्त्री॰ ज्योत्स्नाविशेषे ॥ सोमोदेवताऽस्याः । सोमाड्ट्यण् । ङीप् । यलोप: ॥

सौमेधिक: । पुं॰ सिद्धे ॥

सौमेरव: । त्रि॰ सुमेरुसम्बन्धिनि ॥

सौमेरुकम् । न॰ सुवर्णे ॥

सौम्य: । पुं॰ सोमात्मजे । बुधे ॥ वत्सरविशेषे ॥ तत्फलंयथा । सुभिक्षंक्षेममारोग्यंसुखञ्चनिरुपद्रवम् । सौम्यदृष्टिर्भवेद्राजासौम्येसौख्यंप्रकीर्त्तितमिति ॥ ४२ ॥ भास्करे ॥ द्युतिधरणौविप्रे ॥ उदुम्बरद्रुमे ॥ भूखण्डविशेषे ॥ कृच्छ्रव्रतविशेषे ॥ न॰ मृगशिरोनक्षत्रे ॥ तीर्थविशेषे ॥ करमध्ये सौम्यतीर्थम् ॥ त्रि॰ अनुग्रे ॥ साधौ ॥ मनोज्ञे ॥ सोमदैवते ॥ सोमइवसौम्य: । शाखादिभ्यो य: । तत: प्रज्ञाद्यण् ॥ सोमोदेवताऽस्य । सोमाड्ट्यण् ॥ य द्वा । सोमइवसोम: । ततश्चातुर्वर्ण्यादित्वात्ष्यञ् ॥

सौम्यकृच्छ्र: । पुं॰ व्रतविशेषे ॥ यथा । पिण्याकाचामतक्राम्बुसक्तूनांप्रतिवासरम् । एकैकमुपवासश्चकृच्छ्र: सौम्योयमुच्यते ॥

सौम्यगन्धी । स्त्री॰ शतपत्र्याम् ॥

सौम्यग्रह: । पुं॰ शुभग्रहे ॥ यथा । अदृष्टेविन्दुकसौराराः पापाः सौम्यास्तथापरे । पापयुक्तोबुधः पापैराहुकेतूचपापदौ ॥

सौम्यता । स्त्री॰ प्रियदर्शनतायाम् ॥

सौम्यत्वम् । न॰ सौमनस्ये ॥ स

वंशीकाहितेविल्वे ॥ प्रतिविद्वधा विल्वणी ॥

सौम्यधातु । पुं० कफे । श्लेष्मणि ॥

सौम्यवपुः । न० अनुग्रहशरीरे ॥

सौम्या । स्त्री० अनुग्रायाम ॥ मनोज्ञायाम् ॥ दुर्गायाम् । गौर्यम् ॥ मालपर्याम् ॥ महाज्योतिष्मत्याम् ॥ गुञ्जायाम् ॥ उत्तरदिशि ॥ ब्राह्म्याम् ॥ मल्लिकायाम् ॥ रुद्रजटायाम् ॥ शुभ्याम् ॥ महेन्द्रवारुण्याम् ॥ मल्लिवल्ल्याम् ॥

सौम्या । स्त्री० बहुत्वे० मृगशिरशिर स्थासु पञ्चतारकासु । इल्वलासु ॥

सौम्यायनम् । न० उत्तरायणे ॥

सौर । पु० शनैश्चरे ॥ मासविशेषे । सूर्यैकराशिभोगावच्छिन्नेमासि ॥ यथा । आदित्यराशिभोगेनसौरो मास प्रकीर्त्तितइति । एकस्मात्सङ्क्रमाद्दासङ्क्रान्ति सौरोभिधीयतइतिच ॥ दिनविशेषे ॥ वर्षविशेषे । तुम्बुरुवृक्षे ॥ त्रि० सूर्यसम्बन्धिनि ॥ न० उपपुराणविशेषे । त्रि० सूर्योपासके ॥ सूर्यस्यार्कस्थायम् । तस्य दमित्यण् ॥

सौरज । पुं० तुम्बुरुवृक्षे ॥ फलविशेषे । त्रि०सौरजाते ॥

सौरदिनम् । न० सौरदिवसे ॥

सौरनक्तम् । न० व्रतविशेषे ॥ यथा । हस्तयुक्तेर्कदिने सौरनक्तसमाचरेत् । स्नात्वार्कंसमभ्यर्च्य नीरोगोबहुजीवति ॥ आत्मनोद्विगुणच्छाय यदास तिष्ठतेरविः । सौरनक्तं विजानीयान्ननक्तंनिशिभोजनमितिनारसिंहे ६४ अध्याय ॥

सौरभम् । न० कुङ्कुमे । वोले । सुगन्धितायाम् ॥ विषमवृत्तान्तरे ॥ अयमुक्ततासदृशमेवपदद्वितीयमन्यथा । जायतेरनभगैर्यदितं कथयन्तिसौरभमिदंतदीदृशम् ॥ यथा । परिभूतकुन्दमतपत्रवनविस्तगधविभ्रमा । कस्यकृष्णहरतोदहरिमुखपद्मसौरभकणातशङ्कुता ॥

सौरभेय । पु० वृषे ॥ सुरभ्याअपत्यम । स्त्रीभ्योढक् ॥

सौरभेयी । स्त्री० माहेय्याम् । गवि । उस्रायाम् ॥ सुरभ्यौ . स्त्र्यपत्यम् । ढक् । ङीप् ॥

सौरभ्यम । न० मनोज्ञत्वे ॥ सौगन्ध्ये । सुगन्धितायाम् ॥ गुणगौरवे । पु०कुवेरे ॥

सौरमास । पुं० सूर्यैकराशिभोगावच्छिन्नकाले ॥ यथा । एकराशौरविर्यावत्काल मास सभास्कर । अयषडभि सौरमासैरयनं परिकीर्त्तितम् ॥

सौरसम्वत्सर । पु॰ सूर्य्यद्वादशराशिभोगावच्छिन्नकाले । यथा । सौरसंवत्सरस्यान्ते मानेनार्द्धिकेन तु पश्चाद् ।तिरिच्यन्ते दिनानि भृगुनन्दन ॥

सौरसेन । पु॰ देशविशेषे । यथा । मागधाद्दक्षिणे तु दिश्यात्प्रश्चिमतः स्थिते । सौरसेनाभिधो देश सूर्य्यवंशप्रकाशक ॥

सौरसेय । पु॰ कार्त्तिकेये । स्कन्दे ॥ सुरसायाअपत्ये ॥

सौरसैन्धव । त्रि॰ गङ्गासम्बन्धिनि ॥ सुरसिन्धोरयम् । अण् । हृद्भगसिन्ध्वन्ते पूर्व्वपदस्य च । इत्युभयपदवृद्धि ॥

सौराष्ट्र । पु॰ देशविशेषे ॥ कोङ्कणात्पश्चिमतीर्थे समुद्रप्रान्तगोचरम् । हिङ्गुलाजान्तको देवि दशयोजनदेशक । सौराष्ट्रदेशो देवेशि स्मात् गुर्ज्जराभिधः ॥ कुन्दुरुके ॥ न॰ कांस्ये ॥

सौराष्ट्रक । न॰ पञ्चलौहे ॥

सौराष्ट्रमृत्तिका । स्त्री॰ काक्ष्याम् । तुवर्य्याम् । फट्करी॰ इ॰ भा॰ प्र॰ ॥

सौराष्ट्रा । स्त्री॰ तुवर्य्याम् ॥

सौराष्ट्रिकः । पु॰ विषभेदे । सौमल्खार॰ सङ्खिया॰ इ॰ भा॰ प्र॰ ॥ सुराष्ट्रविषयेषु जातत्वात्सौराष्ट्रिक उच्यते ॥ त्रि॰ सुराष्ट्रजे सुराष्ट्रदेशविशेषभवे । अध्यात्मादित्वाट्ठञ् ॥

सौराष्ट्री । स्त्री॰ सौराष्ट्रमृत्तिकायाम् ॥ स्फटिकायां तुवरी सर्वसौराष्ट्राप्यपि कीर्त्तिता ॥ सुराष्ट्रे भवा । अण् । ङीप् ॥ सौराष्ट्रीकफपित्तघ्नी विसर्पव्रणनाशिनी ॥

सौरि । पु॰ शनैश्चरे । शनिग्रहे ॥ सूरस्यार्कस्यापत्यम् । अतइञ् । श्रीकृष्णे ॥ सूरो यादवेन्द्रस्तस्यानपौ तिमधुमाधवौ । तस्य वसुदेवस्य पिता । तद पत्याग्(॰सौरि कृष्ण । ऋष्यन्धेऽपि बाह्वादेराकृतिगणत्वादिञ् अतग्रहणं ॥ आदित्यभक्तायाम् ॥

सौरिकः । पुं॰ स्वर्गे ॥ न॰ सुरानिमित्तधने ॥

सौरिरत्नम् । न॰ नीलमणौ ॥

सौरी । स्त्री॰ रश्मौ । सूर्य्यकिरणे ॥ सूर्य्यस्येयम् । अण् । ङीप् । सूर्य्यतिष्येति यलोप ॥

सौव । त्रि॰ स्वकीये ॥ स्वस्येदम् । अण् ॥

सौवर्चलम् । न॰ सर्ज्जिकाक्षारे ॥ सुवर्चलायाइदम् । तस्येदमित्यण् ॥ सञ्चर॰ इ॰ प्र॰ लवण । कृष्णलवणे । चर्णे । रुचके । सुवर्च्चले । वर्च्चीघ्नी । इषादित्वात्कणप ।

दीपत्यं तस्यापत्यमित्यण् । हृद्भ
गसिन्ध्वन्ते पूर्वपदस्य चेत्युभयपद
वृद्धिः ॥ न० सौजन्ये ।
शोभनहृदयत्वे ॥ सख्ये । मैत्रा
म् ॥ सुहृदस्य भाव कर्म वा ।
मित्रे सुहृदादेश ॥

सौहार्द्यम् । न० सौहार्दे । सख्ये ॥
सुहृदयस्य भाव । ष्यञ् । वाशी
काष्यञ्रीगे च्चितिहृदादेश ॥

सौहित्यम् । न० तृप्तौ ॥ सुहितस्य भा
व॰ ॰ कर्म वा । पुरोहितादित्वा
द्यक् ॥ पर्याप्ते ॥

सौहृदम् । न० सौहार्दे । सख्ये ॥
सुहृद: कर्म भावो वा । युवादि
त्वादण् ॥ प्रेमणि ॥

सौहृद्यम् । न० सौहार्दे ॥ सुहृदस्य
स्वभाव । ष्यञ । वाशीकाष्यञ
रीगेच्चितिपक्षे हृदादेशाभाव ॥

स्कन्द । पुं० कार्त्तिकेये । महासेने
। पार्वतीनन्दने ॥ सेनापतीनाम
स्मि देवसेनापति कार्त्तिकेयो भगव
द्विभूति ॥ स्कन्दति गच्छति० शो
षयति वा दैत्यान् । स्कन्दिर् गतिशो
षणयो । पचाद्यच् । तथा च वा
युपुराणम् । स्कन्दितं... गणा
नस्कन्द, प्रतापवानिति ॥ द्व
व्याकारपालविशेषे ॥ नृपती ॥ पु
राणविशेषे ॥ शरीरे ॥ पारदे ॥
शास्त्रविशेषे ।

स्कन्दनम् । न० रेचने ॥ क्षरणे ॥
गमने । शोषणे ॥

स्कन्दपुराणम् । न० स्कान्दमहापुरा
णविशेषे ॥ तच्छ्लोकसङ्ख्या श्रीदे
वीभागवते यथा । एकाशीतिसह
स्राणि स्कन्दाख्यं परमाद्भुतमिति ॥

स्कन्दांशक । पु० पारदे ॥

स्कन्ध । पु० देहावयवविशेषे । भु
जशिरसि । असे ॥ अमरकोष य
था । कदलीस्तम्भसङ्काशा पवस्क
न्धाश्चयैनरा । राजानस्ते भविष्य
यामशोभामहाबला : ॥ निर्मां
सरोमबहुलानिष्ठेनस्यप्रकीर्त्तिता
इति समुद्र । स्कन्द्यते । स्कन्दि
र् । कर्मणि घञ् । स्कन्देश्च स्वा
ङ्ग इति० बाहुलकादनत्यपि
पृषोदरादित्वात् ॥ नृपती ॥ सम्परा
ये ॥ व्यूहे । समूहे ॥ काये । प्र
काण्डे ॥ यथा । अस्त्रीप्रकाण्ड
स्कन्ध० स्यान्मूलाच्छाखावधिस्त
रोरिति । आचार्ये ॥ छन्दोभेदे
॥ विज्ञानादिपञ्चसु ॥ तत्र० वि
ज्ञानवेदनारूपसंज्ञासंस्कारस्क
न्धा पञ्चत्वेनाभिज्ञानां बौद्धप्रसि
द्धा ॥ ग्रन्थपरिच्छेदे ॥ पथि ॥
कर्शिरोदधाति । दधाञ्० । आ
तोऽनुपसर्गे क० । पारस्करादित्वा
त्सुट् ॥ वा स्कन्धते० चाकर्षते ।
स्कन्दिर्० । कर्मणि घञ् । पृषो

कीर्त्तितम् ॥ अपिच । अन्यायेनपरस्वस्वहरणंस्तेयमुच्यते ॥ इति ॥ स्तेनस्यभाव कर्म वा । स्तेनाद्यन्नलोपश्च ॥ महापातकेषु ब्राह्मणसुवर्णहरणं ॥ निक्षेपस्यापहरणं नराश्वरजतस्य च। भूमिवज्रमणीनां च रुक्मस्तेयसमं स्मृतम् ॥

स्तेयफल । पु० काष्ठद्रुमे । तेजःफले ॥

स्तेयी । पुं० चौरे ॥ स्वर्णकारे ॥ स्तेयमस्त्यस्य । अतइनि ॥

स्तैनम् । न० स्तेये ।

स्तैन्य । पु० चौरे ॥ न० स्तेनस्यभावे० कर्म्मणि च । चौर्य्ये ॥ स्तेनस्य भाव कर्म वा । स्तेनाद्यन्नलोपश्च० स्तेनादित्ययोगविभागात्ष्यञ् ॥

स्तैमित्यम् । न० जडतायाम् ॥ शरीरस्यार्द्रचर्मावगुण्ठितत्वमितिवैद्याः ॥

स्तोक । पुं० चातके ॥ त्रि० अल्पे ॥ स्तुच्यते । ष्टुच प्रसादे । घञ् । न्यङ्क्वादित्वात्कुत्वम् ॥ स्तूयतेवा । बाहुलकात्तन् . क ॥

स्तोकक । पु० चातके ॥ स्तोकंजलमस्य ॥ स्तोकंकायतिवा । कै शब्दे । आतोनुपसर्गेक ॥

स्तोतव्य । त्रि० स्तवनीये । स्तुत्ये ॥

स्तोता । त्रि० स्तवकर्त्तरि ॥ स्तौति ष्टुञ् । तृच् ॥

स्तोत्रम् । न० स्तवे ॥ स्तूयतेऽनेन ष्टुञ् । दाम्नीतिकरणे ष्ट्रन् । तितुत्रेतिनेट् ॥ प्रगीतमन्त्रसाध्यायां स्तुतौ । छन्दोगादिनागीयमानेऋग्जाले । प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानंस्तोत्रमितियाज्ञिकानां व्यवहारः ॥

स्तोभ । पु० न० अर्थशून्ये वर्णे ॥ स्तोभ० आत्मानविच्छेदेहेलनेऽपिचेतिहेमचन्द्रः ॥ साङ्केत्यं पारिहास्यं वास्तोभंहेलनमेव वा । वैकुण्ठनामग्रहणमशेषाघहरं विदुरित्यत्र० स्तोभगीतालापपूरणार्थक्षरमितिश्रीधर स्वामिन ॥

स्तोभित । त्रि० प्रोत्साहिते ॥

स्तोम । पुं० समूहे । यज्ञे । स्तोत्रे ॥ स्तूयतेऽनेन । ष्टुञ् । अर्त्तिस्तुस्वितिमन् ॥ सोमयागेछन्दोगैः क्रियमाणायांपृष्ठादिसञ्ज्ञकायांस्तुतौ ॥ मन्त्रसमूहे ॥

स्तोमधारः । पु० सर्वधारे ॥

स्तीमवल्ली । स्त्री० काण्डीरे । नासावेदने । काण्डवेल० इ० गौ० भा० प्र० लताभेदे ॥

स्तौपिकम् । न० बुद्धद्रव्ये । चौधा० इ० भा० प्र० ॥

स्त्यानम् । न० स्निग्धे ॥ प्रतिध्वानौ ॥ घनत्वे ॥ आलस्ये ॥ स्त्यैष्ट्यै शब्दसङ्घातयोः । क्तः ॥ अकर्म

न्निवदेवाम्बतस्य पुष्पजलादिकम् ॥ ध्यानेन वा किं तपसा जपहोमप्रपूजने । विष्णयाचैव यश्र सा स्त्रीभिर्यं स्वमनोहरमिति श्रीदेवीभागवते तुलस्युपाख्यानम् ॥ तत्र स्वर्गोऽपि निषिद्धः । यथा । स्त्रीजितस्य धर्म्मा च यशः पुण्यं प्रणश्यति । न भ्रूणीपातकी पापात् पापिनां स्त्रीजितात् परः ॥ इति । स्त्रिया जितः ॥

स्त्रीधनम्, क्ली । स्त्रियाः स्वाधीनं धनम् । यस्मिन् धने पत्यादिनिरपेक्षतया स्त्रिया अधिकारस्तत् ॥ तद्विधम् । पितृमातृसुतभ्रातृदत्तमध्यग्न्युपागतम् । आधिवेदनिकं बन्धुदत्तं शुल्कान्वाधेयकमिति ॥ मनुः । अध्यग्न्यध्यावाहनिकं दत्तञ्च प्रीतिकर्म्मणि । भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम् ॥ नारदोऽपि । अध्यग्न्यध्यावाहनिकं भर्त्तृदायस्तथैव च । भ्रातृदत्तं पितृभ्याञ्च षड्विधं स्त्रीधनं स्मृतम् ॥ याज्ञवल्क्यः । पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम् । आधिवेदनिकाद्यञ्च स्त्रीधनं परिकीर्त्तितम् ॥ तदेवमव्यवस्थितसंख्यस्त्रीधनकीर्त्तनात् षट्त्वसंख्या विवक्षिता । किन्तु स्त्रीधनकीर्त्तनमात्रपराणि मुनिवचनानि । तदेवं स्त्रीधनं यत्र स्त्री स्वातन्त्र्येण दानविक्रयभोगान् कर्त्तुमधिकरोति । तदिदं किञ्चित् संक्षिप्य दायभागः । कात्यायनः । प्राप्तं शिल्पैस्तु यद्वित्तं प्रीत्या चैव यदन्यतः । भर्त्तुः स्वाम्यं भवेत्तत्र शेषं तु स्त्रीधनं स्मृतम् । अन्यत इति । पितृमातृभर्तृकुलव्यतिरिक्तात् । यल्लब्धं शिल्पेन यदर्जितं तत्र भर्त्तुः स्वाम्यम् । स्वातन्त्र्यम् । अनापद्यपि भर्त्ता ग्रहीतुमर्हति । तेन स्त्रियाः अपि धनं न स्त्रीधनमस्वातन्त्र्यात् । एतद्व्यतिरिक्तधनन्तु स्त्रिया एव दानाद्यधिकारात् ॥ कुलार्णवसंहितायां श्रीसदाशिवः । पितृभिः श्वशुरैर्वापि दत्तं यद्धर्म्मसम्मतम् । स्वशक्त्योपार्जितं यच्च स्त्रीधनं तत् प्रकीर्त्तितम् इति ॥ स्त्रियाः धनम् ॥ न भर्त्ता नैव च सुतो न पिता भ्रातरो न च । आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णव इति दायभागः । प्रभविष्णवः प्रभवः ॥

स्त्रीधर्म्मः, पुं । ऋतौ । पुष्पे । आर्त्तवे । रजसि ॥ स्त्रीणामनुष्ठेये ॥ तत्र मनुः । बालया वा युवत्या वा वृद्धया वापि योषिता । न स्वातन्त्र्येण कर्त्तव्यं किञ्चित् कार्य्यं गृहेष्वपि ॥ बाल्ये पितुर्वशे तिष्ठेत् पाणिग्राहस्य यौवने । पुत्राणां भर्त्तरि प्रेते न भजेत्

स्त्रीस्वतन्त्रताम् ॥ पित्रा भर्त्रा सुतैर्वापि नेच्छेद्विरहमात्मनः । एषां हि विरहेण स्त्री गर्ह्ये कुर्य्यादुभे कुले ॥ सदा प्रहृष्टया भाव्यं गृहकार्य्येषु दक्षया । सुसंस्कृतोपस्करया व्यये चामुक्तहस्तया ॥ यस्मै दद्यात् पिता त्वेनां भ्राता वानुमते पितुः । तं शुश्रूषेत जीवन्तं संस्थितञ्च न लङ्घयेत् ॥ मङ्गलार्थं स्वस्त्ययनं यज्ञश्चासां प्रजापतेः ॥ प्रयुज्यते विवाहेषु प्रदानं स्वाम्यकारणम् ॥ अनृतावृतुकाले च मन्त्रसंस्कारकृत् पतिः । सुखस्य नित्यं दातेह परलोके च योषितः ॥ विशीलः कामवृत्तो वा गुणैर्वा परिवर्ज्जितः । उपचर्य्यः स्त्रिया साध्व्या सततं देववत् पतिः ॥ नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषितम् । पतिं शुश्रूषते येन तेन स्वर्गे महीयते ॥ पाणिग्राहस्य साध्वी स्त्री जीवतो वा मृतस्य वा । पतिलोकमभीप्सन्ती नाचरेत् किञ्चिदप्रियम् ॥ कामन्तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः । न तु नामापि गृह्णीयात् पत्यौ प्रेते परस्य तु ॥ आसीतामरणात् क्षान्ता नियता ब्रह्मचारिणी । यो धर्म्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम् ॥ अनेकानि सहस्राणि कुमारब्रह्मचारिणाम् । दिवं गतानि विप्राणामकृत्वा कुलसन्ततिम् ॥ मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्य्ये व्यवस्थिता । स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः ॥ अपत्यलोभाद्या तु स्त्री भर्त्तारमतिवर्त्तते । सेह निन्दामवाप्नोति पतिलोकाच्च हीयते ॥ नान्योत्पन्ना प्रजास्तीह न चाप्यन्यपरिग्रहे । न द्वितीयश्च साध्वीनां क्वचिद्भर्त्तोपदिश्यते ॥ पतिं हित्वापकृष्टं स्वमुत्कृष्टं या निषेवते । निन्द्यैव सा भवेल्लोके परपूर्व्वेति चोच्यते ॥ व्यभिचारात्तु भर्त्तुः स्त्री लोके प्राप्नोति निन्द्यताम् । शृगालयोनिं प्राप्नोति पापरोगैश्च पीड्यते ॥ पतिं या नाभिचरति मनोवाग्देहसंयता । सा भर्त्तृलोकमाप्नोति सद्भिः साध्वीति चोच्यते ॥ अनेन नारीवृत्तेन मनोवाग्देहसंयता । इहाग्र्यां कीर्त्तिमाप्नोति पतिलोकं परत्र च ॥ इति मानवे धर्म्मशास्त्रे ऽध्यायः ॥

स्त्रीधर्म्मिणी । स्त्री॰ ऋतुमत्याम् ॥ स्त्रीधर्म्मो रजोऽस्त्यस्याः । अत इनिठनाविति । ङीप् ॥

स्त्रीधवः । पुं॰ पुरुषे ॥

स्त्रीपरः । पुं॰ कामुके । विटे ॥

स्त्रीपण्योपजीवी । पुं॰ सम्भोगार्थमन्यस्मै स्त्रियं दत्त्वा तद्धनोपजीविनि ॥

स्त्रीपुंसौ । पुं॰ २ मिथुने । द्वन्द्वे ॥ स्त्री च पुमांश्च । अचतुरेत्यच् ॥

स्त्रीपुंसलक्षणा । स्त्री॰ पेटायाम् ॥

विवसिद्धीमूत्रमलान्मतानां हरीत
कीभ्यात्सह भोजनेन ॥ अन्नपानक्ष
तान्दोषान्वातपित्तकफोद्भवान् ।
हरीतकी हरत्याशु भुक्तस्योपरियो
जिता ॥ लवणेन कफं हन्ति पि-
त्तं हन्ति सशर्करा । घृतेन वातजा
न् रोगान् सर्वरोगान् गुडान्विता
॥ सिन्धूत्थशर्कराशुण्ठीकणामधु
गुडैः क्रमात् । वर्षादिष्वभया
प्राश्या रसायनगुणैषिणा ॥ अध्वा
तिखिन्नो बलवर्जितश्च रूक्षः कृशो
लङ्घनकर्षितश्च । पित्ताधिको ग
र्भवती च नारी विमुक्तरक्तस्त्वभयां न
खादेत् । इति ॥ अस्याः सप्त भेदाः
नष्टदुग्धमाः कालिन्दास । कृष्णा
भयानागरपूर्वसैन्धवानारक्तौ विधेयो
लघुभेद्यमेनृगे । अवलयोर्निन्दमि
तैश्चवासरे पथ्याजयानन्दवतीषु
धीमतीति ॥ हरीतक्याः फलं हरी
तकी । विकारोऽवयवयोरत्य ॥ प्र
त्ययस्य हरीतक्यादिभ्यश्चेति लुप
। लुपियुक्तवद्व्यक्तिवचने । हरीत
क्यादिषु व्यक्तिरिति लिङ्गमेव प्रकृतिव
त्सङ्ख्या ॥ पथ्याभया तु पञ्चभूती
वातपित्तहरी गुरु ॥ अस्या पाक पा
कादल्यादिवर्गीय ॥

हरीश्वर । पु॰ हनूमति ॥ वालि
वानरे ॥ सुग्रीवे ॥

हरीषा । स्त्री॰ पक्वमांसप्रभेदे ॥ यथा
। पाकपात्रे तु दत्त्वाथ तिमांसखण्डानि
नि क्षिपेत् । पानीय प्रचुरं सर्पिं
प्रभूतं हिङ्गुजीरकम् ॥ हरिद्रामा
र्द्रकं शुण्ठीलवणं मरिचानि च । त
ण्डुलांश्चापि गोधूमान् जम्बीराणि च र
सान्वहून ॥ यथा सर्वाणि वस्तूनि
सुपक्वानि भवन्ति हि । तथा पचेत्तानि
पूर्णो वहुमण्डस्थितिर्यथा ॥ एषा ह
रीषा बलकृद्वातपित्तापहा गुरुः ।
शीतोष्णा शुक्रदा स्निग्धा सरा सन्धा
नकारिणी ॥ इ॰ भा॰ प्र॰ ॥

हरेणु । पु॰ सतीने । कलाये ॥ क
लायस्त्रिपुटः प्रोक्तः सतीनो वर्त्तु
लोऽमलः । हरेणुस्त्रिपुटोऽन्यो यो विशे
षो वसुदाहृतः ॥ हरति । हृञ्॰
। कृहृभ्यामेणुः ॥ स्त्री॰ रेणुकाया
म् । भस्मगन्धिन्याम् ॥ कुलयो
षिति ॥

हरेणुक । पुं॰ कलाये ॥

हर्त्ता । त्रि॰ हरणकर्त्तरि ॥ हरति ।
हृञ्॰ । तृच् ॥

हर्म्मी । न॰ जृम्भणे ॥ इ॰ म॰ र॰
को ॥

हर्म्मित । त्रि॰ क्षिप्ते ॥ दग्धे ॥

हर्म्यम् । न॰ धनिनां वासे । कोष्ठ
काद्विना ह्यतिधवलगृहे ॥ यथा । र
म्यहर्म्यतले नभि वसतयेऽप्य न
गातादिकमूर्धितप्राक्समासमाग
कसुखाजे वाधिक प्रीतये । किन्तु

हलपद्धति । स्त्री॰ लाङ्गलपद्धतौ । सीतायाम् । हलरेखायाम् । हलस्यपद्धतिः ॥

हलप्रवाह । पु॰ सीरकर्षणे ॥

हलभूति । स्त्री॰ कृषिकर्मणि ॥

हलभृति । पु॰ मुनिविशेषे । उपवर्षे । कृषिकर्मणि ॥

हलराख्यम् । न॰ आहुल्ये । आखगपुष्पकी । तरवट॰ वृ॰ आस्फोरभाष प्र॰ ॥

हलरेखा । स्त्री॰ सीतायाम् ॥ हलस्य रेखा ॥

हला । अ॰ नाट्योक्त्यासख्याह्वाने ॥ समानाभिस्तथासख्यो हलाभाष्याः परस्परमितिभरत ॥ हल॰ । बाहुलकाद्डाप्रत्ययः ॥

हला । स्त्री॰ सख्याम् ॥ वारुण्याम् । मातृधवाद्दाप ॥ मद्ये । क्षौ ॥ भूमौ ॥

हलायुध । पु॰ बलदेवे ॥ हलमायुधं यस्य ॥ हलस्य बलभद्रस्य गगनादागतत्वादिति जरासन्धयुद्धे ज्ञेयं विष्णुपुराणम् ॥

हलाह । पु॰ चित्रिताश्वे ॥

हलाहल । पु॰ ब्रह्मसर्पे ॥ हयभाषी ॥ हलि । क्षुद्रभेदे ॥ पु॰ न॰ विषप्रभेदे ॥ हलतिकठरम् । हल॰ । अच । नञ्लति॰ आहलतिवा । अच् । अहलम्॰ आहलवा । लत कर्मधारय ॥ स्त्री॰ अप्सरायाम् ॥ हृष्यायाम् ॥

हलि । पु॰ महाहले । सन्ध्यायाम् । कृष्टसमीकरणार्थस्थूलकाष्ठे ॥

हली । पु॰ बलभद्रे ॥ हलोऽस्यस्य । सुखादिभ्यश्चेतीनि ॥ कर्षके ॥

हलिनी । स्त्री॰ लाङ्गलिकायाम् ॥ हलसमूहे ॥

हलिप्रिय । पु॰ कदम्बवृक्षे । हलिनो बलदेवस्य प्रियः सुराया अधिवासनत्वात् ॥

हलिप्रिया । स्त्री॰ सुरायाम् । मदिरायाम् ॥ हलिनः सङ्कर्षणस्य प्रिया ॥

हली । स्त्री॰ कलिकार्याम् ॥

हलीनः । पुं॰ कितवयाम् । शाकवृक्षे ॥

हलीमक । पु॰ पाण्डुरोगप्रभेदे ॥ यदा तु पाण्डोर्वर्णः स्याद्धरितश्यावपीतकः । बलोत्साहक्षयस्तन्द्रामन्दाग्नित्वं मृदुज्वरः ॥ स्त्रीष्वहर्षोऽङ्गमर्दश्च श्वासस्तृष्णारुचिर्भ्रमा । हलीमकं तदा तस्य विद्यादनिलपित्ततः ॥ इति भावमिश्र ॥ पाण्डौ पाण्डुरोगिणि ॥

हलीषा । स्त्री॰ लाङ्गलदण्डे ॥

हल्यम । त्रि॰ हलकृष्टक्षेत्रे । कृष्टे ॥ हलेनकृष्टम्॰ हलस्यकर्ष॰ । मतजनहलादितियत् ॥

हल्या । स्त्री॰ हलसमूहे ॥ हलानां समूहः । पाशादिभ्यो यः ॥

हल्लकम् । न॰ रक्तसंध्यके । रक्तसौगन्धिकमिति ख्याते । हिला॰ कु॰ गो॰ भा॰ प्र॰ पुष्पे ॥ रक्तवर्णे विकालविकाशिपुष्पविशेषे॰ कुष्यन्ये ॥ हल्लति । हलविकसने । ख्लु॒ ॥ यद्वा । हलनम् । सम्पदादित्वात् क्विप् । हल लाति । लादाने । आतोनुपीति कः । संज्ञायां कन् ॥

हल्लनम् । त्रि॰ प्रचलायिते । कु॰ ज॰ धर ॥

हल्लीषम् । न॰ येरिषतामण्डलीनृत्ये ॥ स्त्रीणां हल्लीष सहनर्त्तनमितिधिकामण्डलीष ॥

हल्लीषकम् । न॰ स्त्रीणामण्डलिकानृत्ये ॥ मण्डलेन तु यन्नृत्यं स्त्रीणां हल्लीषकन्तु तद्विति हेमचन्द्रः ॥ एकस्य पुंसो बहुभिः स्त्रीभिः सहक्रीडने । तत्तु रासक्रीडा । यथा । गोपीनां मण्डलीनृत्य बन्धे हल्लीषकं विदुरिति कोशात् । तस्य च रासनीलत्वाद्रष्टव्यम् ॥

हव । पु॰ आह्वाने । निदेशे ॥ आह्वाने । हूतौ ॥ अध्वरे । सततक्रौ ॥ ह्वानम् । ह्वेञ् स्पर्द्धायाम्वद्धे च । भावेऽनुपसर्गस्य च बप सम्प्रसारणञ्च ॥ हूयतेऽनेनेति वा ॥ आहवे॰ कृतवेदविद । आहूयन्ते परस्परं युद्धार्थं योद्धारोऽत्र ॥

हवङ्ग । पु॰ कायपार्श्वे दधिमिश्रितान्नभक्षणे । कृतिकर्षित् ॥

हवनम् । न॰ होमे ॥

हवनायु । पु॰ अग्नौ ॥

हवनी । स्त्री॰ हवनकुण्डे ॥

हवनीयम् । त्रि॰ हविषि । होमीयद्रव्ये ॥ हूयते हु॰ अनीयर् ॥

हविषो । स्त्री॰ होमकुण्डे ॥

हविरशन । पु॰ अग्नौ ।

हविर्गन्धा । स्त्री॰ शम्या ॥

हविर्गेहम् )<br>हविर्गृहम् । ) न॰ हवनगृहे । होमीये ॥

हविर्भुक् । पु॰ अङ्गिरस पुत्रे चन्द्रपितरि ॥ अग्नौ ॥ हवींषि । भुङ्क्ते । भुज॰ । क्विप ।

हविर्भू । स्त्री॰ पुलस्त्यपत्न्याम् ॥

हविर्मन्थ । पु॰ अग्निमन्थे । शमीपर्णे ॥

हविष्कृत् । स्त्री॰ देवानामर्थे या हविः सम्पादयति तस्याम् ॥

हविष्मत् । पु॰ हविर्भुजि । त्रि॰ घृताज्यादिमति ॥ ध्यानभावनावति ॥

हविष्यम् । न॰ हवनीये ॥ भोज्यभेदे ॥ मुन्यन्नादिषु ॥ घृते ॥ हविषिहितम् । उगवादिभ्योयत् ॥

हविष्यान्नम् । न॰ हविष्ये । व्रतादा

वह्नीयद्रव्यविशेषे ॥ हविष्यघृत
दन्नश्च ॥

हवि । न० होतव्यद्रव्ये । साम्नाय्ये
। देवतोद्देशेनाग्नौत्यज्यमानद्रव्ये
। त्यागप्रत्यक्षक्रियाया साक्षात्
कर्मकारके ॥ तद्द्विविधम् । पुरो
डाशरूपमाज्यरूपञ्च ॥ घृते । सर्पि
षि ॥ हविषापरिणामीय यदेतद
खिल जगत् ॥ हूयते । हुदानाद
नयो अर्चिशुचिहुसृपीच्छादिभ्य
सि ॥ मुन्यन्नानिपय सोमोमां
संयवानुपस्करम् । अक्षारलवण
ञ्चैवप्रकृत्याहविरुच्यतइतिमनुः ॥

हवुषा । स्त्री० हपुषायाम् ॥

हवै । अ० प्रश्नार्थस्मरणार्थौनिपा-
तौ ॥ प्रसिद्धार्थद्योतकौवैदेनि
पातौ ॥

हव्यम् । न० दैवेऽन्ने । हवनीये ।
हूयन्तेप्रीणयन्तेदेवायेन० हूयते०
प्रक्षिप्यतेवा । हु० । अचोयत् ।
गुणावादेशौ ॥

हव्यपाक । पु० चरौ ॥ पच्यते ।
पचे कर्मणिघञ् । हव्यञ्चतत्०
पाकश्च कर्म । भावेघञ् । पच
नम्० पाक । हव्यस्यपाक ०
पाकोऽधिकरणम् ॥

हव्यवाट् । पु० अग्नौ ॥

हव्यवाहन । पुं० अग्नौ ॥ हव्यं वा
हयति । ण्यन्ताद्वहेर्ल्युः ॥

हव्याश ।)
हव्याशन ।) पु० अग्नौ ॥
हव्येश ।)

हस । पु० हास्ये ॥ हसनम् । ह
सेर्हसने । स्वनहसोर्वेत्यप् ॥

हसन् । त्रि० हास्यं कुर्वति ॥ हसेर्ल
ट् शतृ ॥

हसनम् । न० हास्ये ॥ हसि० । ल्युट् ॥

हसनी । स्त्री० अङ्गारधान्याम् ॥ ह
सति । हसि० । करणल्युट्इतिल्यु
ट् । टिड्ढेतिङीप् ॥

हसनीमणि । पु० पर्य्यङ्के । अ
ग्नौ ॥

हसन्तिका । स्त्री० हसन्त्याम् । अङ्गा
रधान्याम् ॥

हसन्ती । स्त्री० अङ्गारधान्याम् ॥ मल्लि
काप्रभेदे ॥ शाकिनीविशेषे ॥ हस
ति । हसि० । लट् शतृ । उगितश्चे
तिङीप् । शप्श्यनोरितिनुम् ॥

हसितम् । न० अट्टहास्ये ॥ हास्ये ॥
त्रि० विकसिते । फुल्ले ॥ हसि० ।
नपुंसकेभावेक्तः ॥

हस्त । पु० करे । पक्षशाखे । शये
। पाणौ । शब्द० च० भा० प्र० ॥
करिकरे शुण्डायाम् । सं० च०
च० भा० प्र० ॥ मानभेदे । चतुर्विं
शत्यङ्गुलमितेसप्रकोष्ठकरे ॥ यथा
। यथानातस्ड्मैरेकमङ्गुलं चाष्ट
भिर्वितः । अदीर्घैर्योजितैर्हस्त

चतुर्विंशद्भिरङ्गुलैरितिकाशिखो पुराणम । द्रुमेदे ॥ चयोदृग्धें । हस्तायाम् ॥ यथा । पुष्योहस्तोमे चमघ्याश्विनसश्चस्वार्याहु, सर्वं दि गद्दारकाणीति ॥ वेशात्परीज्ञाते ॥ यथावीशहस्त • कासम् हस्त र्थं । हसति• हस्तेषा । हसे• । हसिमृचिघिणितितन् ॥ चि•हस्ता यांजाते ॥ अविष्टाफस्तु नौस्यणीलु क । न• चर्मप्रतीविकायां ॥

हस्तधारणम् । न• परिवाणे ॥ प्राक्सुं मुखतस्यहस्तस्थधारणरोध । रस्त कस्यपृष्ठेहस्तस्थापन वा ॥ भुकय हर्ण ॥

हस्तप्रुच्छम् । न• कन्धुषि । कलमवि । हार्थोंछा• हू• भा• प्र• ॥

हस्तवारणम् । न• परिवाणे । मार णोद्यतस्यनिवारणे ॥ हस्तेन•- हस्तस्यवा• वारणम् ॥ कारेणवि शेषे ॥

हस्तविम्बम । न• चन्दनादिनादेह विलेपनविशेषे । स्थासके ॥

हस्तसिद्धि । स्त्री• भतौ । वेतने ॥ हस्ताभ्यांसाध्यासिद्धि ॥

हस्तसूत्रम् । न• कारसूत्रे । कगणा • कृतिविवाहप्रसिद्धे ॥

हस्ता । स्त्री• अश्विन्यादौत्रयोदश्यां ॥ तत्कातस्यफलंयथा । दातायश स्वीसुतरामनस्वीभूदेवदेवार्चनकृ न नयस्तु । प्रसूतिकालेकिलयस्य हस्ताहस्तस्थितातस्यसमस्तसम्पत् ॥

हस्ताङ्गुलि । स्त्री• करशाखायां ॥

हस्तामलकम । न• करस्थितामलकी फले ॥ करस्थितस्वच्छजले । वेदा न्तग्रन्थविशेषे । पुं• शङ्कराचार्य शिष्यविशेषे ॥

हस्तावसेचनम् । न• उत्तरापोशाने ॥

हस्तास्त्रम् । न• प्रहरणे । हथियार हू• भा• प्र• ॥

हस्तकन्द । पु• हस्तकन्दविशेषे । कुष्ठहन्तरि• गजकन्दे ॥

हस्तिकन्दक । पु• हस्तिकन्दे । स्वा र्थेक ॥

हस्तिकरञ्ज । पु• महाकरञ्जे ॥

हस्तिकर्ण • । पु• उरुबूके । एरण्डे । रक्तैरण्डे । स्वनामख्याते प लाशप्रभेदे ॥ हस्तिकर्ण परक्षयो मेधायुर्बलवर्द्धन ॥ हस्तिकन्दे ॥ गणदेवताप्रभेदे ॥

हस्तिकर्णक । ) पु• हस्तिकर्णी
हस्तिकर्णदल । )

भिघिपलाशे । किंशुके ॥

हस्तिकारणी । स्त्री• अजमोदायां ।

हस्तिशीलि । गोमघोरटायाम् ॥

हस्तिगिरि । पुं• काञ्चीदेशे ॥

हस्तिघोषा । स्त्री• कोशातकीप्रभेदे । महाकोशातक्याम् । तुनिया• घो यातोरओ• हू• भा• ॥

हस्तिचारिणी । स्त्री० महाकरञ्जे ॥

हस्तिचेष्टितम् । न० गजचेष्टिते ॥ तद्यथा । तत्रादौ दन्तकल्पनविधानम् । दन्तस्य मूलपरिधिं द्विरायतं प्रोज्झ्य कल्पयेच्छेषम् । अधिकमनूपचराणां न्यूनं गिरिचारिणां किञ्चित् ॥ श्रीवत्सवर्द्धमानच्छत्रध्वजचामरानुरूपेषु । छेदे दृष्टेष्वारोग्यविजयधनवृद्धिसौख्यानि ॥ प्रहरणसदृशेषु जयो नन्द्यावर्ते प्रनष्टदेशाप्तिः । लोष्टे तु लब्धपूर्वं लभति देशस्य रत्नाप्तिः ॥ स्त्रीरूपे स्वविनाशो भृङ्गारेऽभ्युत्थिते सुतोत्पत्तिः । कुम्भेन निधिप्राप्तिर्यात्राविघ्नं तु दण्डेन ॥ ४ ॥ कृकलासकपिभुजङ्गेष्वसुभिक्षव्याधयो रिपुवशित्वम् । गृध्रोलूकध्वाङ्क्षश्येनाकारेषु जनमरकः ॥ ५ ॥ पाशेऽथवा कबन्धे नृपमृत्युर्जनविपत् स्रुते रक्ते । कृष्णे श्यावे रूक्षे दुर्गन्धे चाशुभं भवति ॥ शुभच्छेदलक्षणन्तु । शुक्लः समः सुगन्धिः स्निग्धश्च शुभावहो भवेच्छेदः । गलनस्रवणम्लानानि च दन्तस्य समानि भङ्गेन ॥ अथ शुभाशुभमाह । मूलमध्यदशनाग्रसंस्थिता देवदैत्यमनुजाः क्रमात्ततः । स्फीतमध्यपरिपेलवं फलं शीघ्रमध्यचिरकालसम्भवम् ॥ अथ विशेषफलमाह । दन्तभङ्गफलमत्र दक्षिणे भूपदेशबलविद्रवप्रदम् । वामतः सुतपुरोहितेभयान् हन्ति साटविकदारनायकान् ॥ पुनरपि । आदिशेदुभयभङ्गदर्शनात् पार्थिवस्य सकलं कुलक्षयम् । सौम्यलग्नतिथिभादिभिः शुभं वर्द्धते शुभमथोऽन्यथा भवेत् ॥ दन्तभङ्गस्य विशेषफलमाह । क्षीरमिष्टफलपुष्पपादपेष्वापगातटविघट्टनेन वा । वाममध्यरदभङ्गखण्डने शत्रुनाशकृदतोऽन्यथा परम् ॥ ११ ॥ अधुनागजेष्टितमाह । स्खलितगतिरकस्मात् त्रस्तकर्णोऽतिदीनः श्वसिति मृदु सुदीर्घं न्यस्तहस्तः पृथिव्याम् । द्रुतमुकुलितदृष्टिः स्वप्नशीलो विलोमो भयकृदहितभक्षी नैकशोऽसृक्छकृत्कृत् ॥ १२ ॥ शुभचेष्टितमाह । वल्मीकस्थाणुगुल्मक्षुपतरुमथनः स्वेच्छया हृष्टदृष्टिर्यायाद्यात्रानुलोमं त्वरितपदगतिर्वक्त्रमुन्नम्य चोच्चैः । कक्ष्यासन्नाहकाले जनयति च मुहुः शीकरं बृंहितं वा तत्काले वा मदाप्तिर्जयकृदथ रदं वेष्टयन् दक्षिणञ्च ॥ प्रवेशनं वारिणि वारणस्य ग्राहेण नाशाय भवेन्नृपस्य । ग्राहं गृहीत्वोत्तरणं द्विपस्य तोयात् स्थलं वृद्धिकरं नृपस्य ॥ १४ ॥ इति वाराह्यां ९२ऽध्यायः ॥

हस्तिच्छाया । स्त्री० गजच्छायायाम् ॥ कुञ्जरच्छायायाम् ॥

हस्तिनीपुरम् । न० हस्तिनापुरे ॥
हस्तिप । पु० हस्तिपके ॥ ह स्तिनं पाति । पा० । आतोनुपे सिक ॥
हस्तिपक्ष । पु० कुम्यारीष्टे । चघो रथे । निषादिनि ॥ स्वार्थेकन् ॥
हस्तिपत्र । पु० हस्तिकन्दे ॥
हस्तिपर्णिका । स्त्री० राजकोशातक्याम् ॥
हस्तिपर्णी । स्त्री० राजकोशातक्याम । मेतुबा० डू० भा०प्र० ॥ एर्वारी । मार्कण्याम् ॥ मोरटायाम् ॥
हस्तिमद । पु० गजमदे । दाने ॥
हस्तिमल्ल । पु० सुरद्विपे । ऐरावते । अभ्रमातङ्गे ॥ विनायके । विघ्न राजे ॥ भङ्खनागे ॥
हस्तिमुख । पु० गणेशे ॥ हस्तिव न्मुखं यस्य ॥
हस्तिरोहणक । पुं० सप्ताश्वरज्जे ॥
हस्तिलक्षम । न० गजलक्षणे ॥ तन्नि रूपणं यथा । भद्रोमन्दोमृगोमिश्र इतस्रोगजजातय ॥ तत्राद्रोभद्र लक्षणम् । मध्वाभदन्ता सुविभ क्तदेहानचोपदिग्धाजकथा . घना ङ्ग । गात्रे समेश्चापसमानवंशा वराहतुल्यै र्जघनैश्चभद्रा : ॥ मन्द लक्षणं यथा । वक्षोऽथकक्ष्याबलय श्लथाश्चलम्बोदरस्त्वग्बृहतीगलश्च । स्थूलाचकुक्षि ; सहमेचकेनसैंही

चदृष्ट्मन्दमतङ्गजस्य ॥ २ ॥ मृग लक्षणं लक्षणन्तु । मृगास्तुक्र शाधरदोषमेढ्राश्चन्वङ्घ्रिकण्ठवि अर्हकर्णा । स्थूलेक्षणास्चेतिय थोक्तचिह्नै सङ्कीर्णनागाव्यतिमि श्रचिह्ना ॥ ३ ॥ अथैतेषांसमुन्नति दैर्घ्यपरिणाहमानप्रमाणमाह । प ञ्चोन्नति ० सप्तमृगस्यदैर्घ्यमष्टौ चहस्ता परिणाहमानम् । एकाडि वृद्धावथमन्दभद्रौसङ्कीर्णनागोऽनि यतप्रमाण . ॥ अथैतेषांवर्णमदल क्षणमाह । भद्रस्यवर्णोहरितोमद श्चमन्दस्यहारिद्रकसन्निकाश . । कृष्णोमदश्चाभिहितोमृगस्यसङ्कीर्ण नागस्यमदोविमिश्र ॥ ५ ॥ गजा नांशुभलक्षणान्याह । ताम्नोष्ठता लुवदना : कलविङ्कनेत्रा : स्निग्धो न्नताग्रदशना पृथुलायतास्या । चापोन्नतायतनिगूढनिमग्नवंश न्वेकरोमचितकूर्मसमानकुम्भा . ॥ ६ ॥ विस्तीर्णकर्णहनुनाभिल लाटगुह्या कूर्मोन्नतेद्विनवविंश तिभिर्नखैश्च । रेखात्रयोपचितवृ त्तकरा सुवालाधन्या सुगन्धिम दपुष्करमारुताश्च ॥ दीर्घाङ्गुलिरक्त पुष्करा सजलाम्बोदनिनादबृंह णा । बृहदायतवृत्तकन्धराधन्याभ् मिपतेर्मतङ्गजा ॥ ८ ॥ अथाशुभ लक्षणान्गजानाह । निर्मदाभ्यधि

तत्पर्यायाः यथा। अथसर्पौ॰ ख
ञ्जनिकातुलिका॰ स्फाटिकेतिवि
कारडशेष । गौभण्डीर वक्र
कोरोहापुत्रोराजभङ्कितिहाराव
ली ॥

हाफिका। स्त्री॰ जृम्भणे। जृम्भाया
म्। उपपुष्पिकायाम्। जम्भाई॰
ई॰ भा॰ ॥

हायन। पु॰ अर्चिषि। ज्वाले।
अग्ने शिखायाम्॥ व्रीहिप्रभे
दे। नीवारादाविति मुकुट।
षष्टिकद्रुतिस्वामी। शालिजातिवि
शेषे॰ इति भिषज॥ पु॰ न॰
संवत्सरे। शरदि। वर्षे॥ जहा
तित्यजत्युदकम्। ओहाक् त्यागे।
भावान् जिहीते व्याप्नोतिवा। ओ
हाङ् गतौ। हस्रोहिणालयोरि
त्युभयत्रणट्।

हार। पु॰ मुक्तावली। मुक्तादाम
नि। युधि। सङ्ग्रामे। प्रयुगे।
गुरुवर्णे॰ऽ॰॥ सुग्रीववानरस्य श्व
शुरे। न॰ हरिश्चरिते॥ त्रि॰ मनो
हरे॥ मनोहारिणेन। हृञ्॰।
घञ्॥ यद्वा। हारपतिमन॰
स्वार्थेऽण्णादच्॥ हरणम्। भा
वे घञ्।

हारक। पु॰ कितवे। चौरे॥ ग
द्यभेदे॥ विज्ञानविशेषे॥ शाखोट
वृक्षे॥ भाजकाङ्के॥ त्रि॰ हरणक
र्त्तरि॥ हरति हृञ्॰। ण्वुल्
॥ क्रियते। बाहुलकात्कर्मणि
वा ण्वुल्॥

हारहारा। स्त्री॰ कपिलद्राक्षायाम्॥

हारहूरम्। न॰ मद्ये। द्रू॰ हैमच
न्द्र॥

हारहूरा। स्त्री॰ द्राक्षायाम्॥

हारहूरका। स्त्री॰ गोस्तन्याम्॥

हारावली। स्त्री॰ पुरुषोत्तमकृतको
षविशेषे॥ हारपङ्क्तौ॥

हारि। स्त्री॰ पथिकसन्ततौ। पथि
कपङ्क्तौ॥ द्यूतदौपराजये॥
त्रि॰ मनोज्ञे। रुचिरे॥ शुभे॥
हरति। हृञ्॰। बाहुलकादिञ्॥

हारिकण्ठ। पु॰ कोकिले॥ त्रि॰
हाराऽन्वितगले॥

हारिणिक। पु॰ मृगयौ॥ हरिणा
न्हन्ति। पक्षिमत्स्यमृगान्हन्ती
तिठक्॥

हारिणी। स्त्री॰ अत्यष्टिछन्दः १७
प्रभेदे। तल्लक्षणन्तु। वेदत्वैश्चैर्म
भनमयलागश्चेत्तदाहारिणी। य
था। यस्यानित्यं स्तुतिकुवलयेश्री
शालिनीलोचनेराग लीलाऽधर
किसलयेलाक्षारसारञ्जनम्। गौ
रीकान्ति प्रकृतिरुचिरारम्याङ्गराग
स्फटासाकसारेरजनिनकथराधाम
नोहारिणी॥ हारवत्याम्॥

हारित। पु॰ पक्षिविशेषे। हारी

ते ॥ हारमित ॥

हारितकम् । न॰ शा॰की ॥

हारिद्र । पु॰ कदम्बवृक्षे । नीपे ॥ विषविशेषे ॥ यथा । हरिद्रातुल्य मूलोयोहारिद्र . समुदाहृत ॥ हरिद्रावर्णे ॥ त्रि॰ हरिद्रारञ्जिते ॥ हरिद्रयारक्तम् । हरिद्रामहारजना भ्यमञ् ॥

हारिद्रव । पु॰ मैत्रायणीयानांशाखा प्रभेदे ॥

हारिद्रुमत पुं॰ गौतमगोत्रेमुनिवि शेषे ॥ हरिद्रुमतोऽपत्यम् । अण् ॥

हारी । त्रि॰ हारविशिष्टे ॥ हारोस्त्य स्य । इनि ॥ हर्त्तरि ॥ अवश्यं ह रति । हृञ् । णिनि ॥

हारो । स्त्री॰ मौक्तिके । यथा । मुक्ता मुक्ताफलशुक्तिबीज हारोचमौक्तिक मितिशब्दरत्नावली ॥

हारीत : । पुं॰ धर्मशास्त्रप्रवर्त्तकमु निविशेषे ॥ कैतवे । ध्वनि ॥ पक्षि विशेषे । हरिलोहारीतलद्रतिलो कप्रसिद्धे ॥ अस्यमांसगुणायथा । हारीतीरूक्षउष्ण ' स्याद्रक्तपित्तक फापह । स्वेदस्वरकर प्रोक्तईष द्वातकरश्च स : ॥ हारीतोरक्तपीत' स्याद्दृधारितोऽपिसकथ्यते ॥ हारी मीत ॥ हारोस्त्यस्मिन वा । इ नि । हारिमनोहरमित'गमनम स्य ॥ यद्वा । हारयति । क्षिप । ए तिस्म । ईङ्गतौ । गत्यर्थेतिक्त ' । हारयासावीतश्च ॥

हारीतक । पु॰ हारीतखगे ॥ स्वा र्थेक ॥

हार्द्दम् । न॰ प्रेमणि । स्नेहे ॥ अ भिप्राये ॥ हृदयस्यकर्म । युवादि त्वात् । हायनान्तयुवादिभ्योणित्य ण् । हृदयस्यहृल्लेखितिहृदादेश ' ॥ हृदमर्थेण् वा ॥

हार्द्दी । त्रि॰ स्नेहवति ॥

हार्य्य ' । पु॰ कलिद्रुमे । बिभीतकि हरणीयाङ्के । भाव्ये ॥ अर्थे ॥ त्रि॰ हर्त्तव्ये ॥ हर्त्तुं योग्य ' । हृ ञ् । ऋहलोर्ण्यत् ॥

हाल ' । पु॰ बलदेवे ॥ शालिवाह नभूपतौ ॥ हलि ॥ हलति । ह लविलेखने । ज्वलतिकसन्तेभ्यो ण ॥

हालक : । पुं॰ पीतहरितवर्णाश्वे ॥

हालहलम् । न॰ पुं॰ हालाहलेविषे ॥ हालिबहलति॰ जठरम् । हल॰ । पचाद्यच । हलमिवहलतिवा । अच् । प्रज्ञाद्यण् ॥ मथ्यतिक्षि रान्धिवोचिताहृदयेहालहलमहवि षम् । अतएवनिपीयतेऽधरोहृदय मुष्टिभिरेवताड्यते ॥

हालहाल । पु॰ न॰ हालाहले ॥

हाला । स्त्री॰ सुरायाम् । बलदेवप्रि यायाम् । वरुणात्मजायाम ॥ ह

लक्षणम् । हल० । ज्वलतीतिण
हल्यतेऽनयावा । हलमेतिघ
ञ ॥ हालाहलं हन्तिघ्न वा हालातु
साम्रपीतपम् । तालमद्यं ॥

हालाश्च्यानम । न० चिदम्बराभि
धेदेश्या स्थाने ॥

हालाहल । पुं० न० विषप्रभेदे ॥
तत्स्वरूपन्तु । गौतमाभफलागुच्छ
स्तालपत्रच्छदस्तथा । तेजसायस्य
द्यन्तसमीपस्थाद्द्रुमादथ किञ्चि
न्मायाहिमालये । दक्षिणाब्धितटे
देशेकोङ्कणे पिचजायते ॥ हालेव
चाहलति । हल० पचाद्यच् ॥
हालाहलीनैवविष विषरमादरञ
माव्यव्ययमेवमन्वती । येगेनमाग
र्त्तिनिपीयतधिव स्मरनूरमामुद्य
तिनिद्रयाहरि ॥

हालाहल । पु० कीटविशेषे । च
ञ्जनिकायाम् । कुटिलकीटके ॥

हालाहलधर । पुं० सर्पे । हाला
हलस्यधरोधारकः ॥

हालाहला । स्त्री० चञ्जनिकायाम् ।
गिरिकायाम् । बालमूषिका
याम् ॥

हालाहली । स्त्री० मदिरायाम ॥

हालिक । पु० कर्षकवृषे । सैरि
के । हलेनखनति । तेनदीव्यतिप
मतीतिढक् । हल वहति० हल
स्यायवा । हलसीराट्ठक् ॥

हालिनी । स्त्री० स्थूलपलक्याम् ॥

हाली । स्त्री० कनिष्ठशालिकायाम ।
यथा । कनिष्ठाश्यालिकाहालीयष्टि
काक्षिलिकुल्किकेति हेमचन्द्र ॥ म
दिरायाम् ॥

हालु । पुं० दन्ते ॥

हावः । पु० आह्वाने ॥ स्त्रीणांविला
सादौ । नारीणांशृङ्गारभावसूचक्रि
यासु ॥ यथा । स्त्रीणांविलासविब्बो
कविभ्रमाललित तथा । हेला
लीलेत्यमीहावाः क्रियाःशृङ्गारभा
वजाः ॥ शृङ्गारात्० इत्यादि०
भावान्मनोविकाराज्जाता . क्रि
यास्त्रिष्टा च हङ्काराख्याविलासादि
काहावशब्दवाच्याइत्यर्थं ॥ हवन
म् । हुदानादनयो । क्वचिदपवा
दविषयेप्युत्सर्गोऽभिनिविशते० इत्य
त्विषयेघञ् । इतिशब्द प्रकारे
। तेनान्येपिबोध्य लीलाविला
सोविच्छित्तिर्विभ्रम किलकिञ्चि
तम् । मोट्टायितकुट्टमितबिब्बोको
ललिततथा । विहृतञ्चेतिमन्तव्या
दशस्त्रीणास्वभावजाइति ॥ हूय-
न्तेरागिणोऽनेतिहाव । यद्वाहूय
न्तेरागिण कामाम्नावनेनेतिहा
व । अविकारेकारणे वाघञ् ॥
यथोक्तम् । युवानोऽनेनहूयन्तेना
रीभिर्मदनातुरै । अतोनिरुच्यतेहा
वस्तेविलासादयोमताइति । हाव

ष्टवायतिशोषयति वैशेषये । ड ॥

हास । पु० हास्ये ॥ हसनम् । हसि हसने । स्वनहसोर्वेतिपक्षे घञ् ॥ प्रकाशे ॥

हासिका । स्त्री० हासे । हासो० दू० भा० ॥ हसे० । धात्वर्थनिर्देशे ण्वुल् । प्रकाशे ॥

हास्तिकम् । न० गजतायाम् । करिसमूहे ॥ हस्तिनांसमूह । अचित्तहस्तिधेनोष्ठक् । हस्तिनीनांसमूहो वा ॥ भस्य ढेतिपुंवद्भावः ॥ त्रि० हस्त्यारोहे ॥ हस्तिनाचरति० गच्छति । चरतीतिठक् ॥

हास्तिनम् । न० हस्तिनापुरे ॥ हस्तिदघ्ने । गजपरिमाणे ॥ हस्तिप्रमाणमस्य । पुरुषहस्तिभ्यामण्चेत्यण् । इनण्यनपत्ये इति प्रकृतिभावः ॥

हास्तिनपुरम् । न० हस्तिनापुरे ॥

हास्तिनायन । पु० हस्तिनो गोत्रापत्ये ॥ नडादित्वात्फक् । हास्तिनायनेति टिलोपाभावः ॥

हास्यम् । न० रसविशेषे । हसे हासे । यथा । विकृताकारवाग्वेशचेष्टादेः कुहकाद्भवेत् । हास्यो हासस्थायिभावः श्वेतः प्रमथदैवतः ॥ विकृताकारवाक्चेष्टं यदालोक्य हसेज्जनः । तदत्रालम्बनं प्राहुस्तच्चेष्टोद्दीपनं मतम् ॥ अनुभावोऽक्षिसङ्कोचवदनस्मेरतादिकः । निद्रालस्यावहित्याद्या अत्र स्युर्व्यभिचारिणः ॥ ज्येष्ठानां स्मितहसिते मध्यानां विहसितावहसिते च । नीचानामपहसितं तथातिहसितं तदेष षड्भेदाः ॥ ईषद्विकासिनयनं स्मितं स्यात्स्पन्दिताधरम् । किञ्चिल्लक्ष्यद्विजं तत्र हसितं कथितं बुधैः । मधुरस्वरं विहसितं सांसशिरःकम्पमवहसितम् । अपहसितं सास्राक्षं विक्षिप्ताङ्गं भवत्यतिहसितम् । हसि० । ऋहलोर्ण्यत् ॥ त्रि० परिहसनीये ॥

हाहलम् । न० हालाहले ॥

हाहा । अ० विस्मये । शोके ॥

हाहा । पु० गन्धर्वविशेषे ॥ हाहा हूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसः इत्यमरः ॥ हा इति शब्दं जहाति । आ हाक त्यागे । विच् । शसि हाहः । अव्युत्पत्तिपक्षे । शसि० हाहान् । आतोधातोरित्यस्याप्रवृत्तेः ॥

हाहाकार । पु० शोकध्वनौ ॥ हाहाशब्दे । हाहाकरणम् । भावे घञ् ॥

हाहालम् । न० हालाहले ॥

हूहू । पु० देवगन्धर्वे ॥ सान्तोयम् । गन्धर्वो हाहाहूहूश्चैते गन्धर्वा गायनेऽपि चेति साहसाङ्कः । गन्धर्वप्रीतिहा हूहूरिति वाचस्पतिः ॥

शाङ्गकृष्ट । पु० गन्धर्वे ।
हि च पादपूरणे ॥ हेतौ । विशेषे ।
अवधारणे । प्रश्ने । हेत्वपदेशे ।
सम्भ्रमे ॥ असूयायाम् ॥ अव्यये ॥
विद्वदनुभवप्रसिद्धौ । हिनोति । हि
गतौ । विच् । स स्वाप्नु वं अस्याह्नु
याभाव । क्रिंपितुगभावोवा ।
भावेवाप्रत्ययौ ॥
हिंसक पु० व्याघ्र । हिंसपशौ
। अथर्ववेदज्ञे ब्राह्मणे ॥ शत्रौ ।
त्रि० हिंसाकर्त्तरि । त्रवसे । घा
तुकी ॥ हिनस्तात्यर्थे । हिसि
हिंसायाम् । निन्दहिंसक्लिशेति
वुञ् । शरणागतबालस्त्रीहिंसका
नृस वसेन्नतु चीर्णव्रतानपिसदा
कृतघ्नसहितानिमान् ॥
हिंसा । स्त्री० चौर्यादिकर्मणि ॥
आदिनाव धनचासताडनादयोवा
च्या । घाते । वधे । प्रमादयोगे
प्राणिवधे ॥ स्वच्छन्दतकारितानु
मोदितभेदेनविविधा । कायवा
ङ् मनोभिः प्राणिनापीडनं ॥ प्रा
णप्तस्त्रिच्छेदे । स्वाभिप्रायप्रकटने
मपरव्यक्तिच्छेदने ॥ कायक्लेशम
नोदुःखवधबाप्राणिनांतुम ।
य प्रवर्त्तयतिहि बातसाहिंसेति
समासतः० दृतिदेवल । हिंसन
म् । हिंसि० । गुरोश्चेत्य० टा
प् ॥ अद्वेषुरारयर्ण्य वाणिनसस्ना
तमवानुहिन । नाऽवेदविहिताहिं
सामापद्यपिसमाचरेत् ॥ अथ त
हिंसनं हिंसायां वेदिकीदीक्षा
हिंशुहिंसामाधर्मायेत्यतआह ।
यावेदविहिताहिंसानियतास्मिंश्च
राचरे । अहिंसामेवताविद्यावेदा
द्धर्मोहिनिर्बभौ । दृतिमनु ।
यास्तुतविहिताकर्मविशेषदेशका
लादिनियता । अस्मिन्जगतिस्था
वरजङ्गमात्मनि० अहिंसामेवतांवा
नीयात्० हिंसाजन्याधर्मविरहात् ।
देवपशुहननम्० अधर्म० प्राणिह
ननत्वात्० ब्राह्मणहननवदित्याद्य
नुमानम० उपजीव्यशास्त्रबाधोदे
वनप्रवर्त्तते । दृष्टान्तोब्रह्मणब्राह्मण
हननमप्यधर्मत्वे । शास्त्रमेवोप
जीव्यम् । वेदाद्धर्मोहिनिर्बभौ ।
यस्मादनन्यप्रमाणकोधर्मोवेदादेव
नि शेषप्रकाशतःउङ्गतइतिकु
ल्लूकभट्ट ॥ यज्ञार्थंब्राह्मणैर्वं
ध्या प्रशस्तामृगपक्षिण । भृत्या
नाञ्चैवहत्यर्थमगस्त्योह्याचरत्पुरा
॥ बभूवुर्हिपुरोडाशाभक्ष्याणांमृग
पक्षिणाम । पुराणेष्वपियज्ञेषुब्रह्म
क्षत्रसवेषुचेतिमनु ॥ पुरोतनेष्वपि
ऋषिकर्तृकयज्ञेषुभक्ष्याणांमृगप
क्षिणांमांसेनपुरोडाशाअभवन् । त
स्मात्० यज्ञार्थमधुनातनैरपिमृग
पक्षिणोवध्याइतिकुल्लूकभट्ट ॥

हिंसाकर्म । न० अथर्ववेदोक्तमन्त्रप्रयोगादिना विप्रादितमारणोच्चाटनादिक्रियायाम् । अभिचारे ॥ हिंसाफलकर्म । मारणपाथिवादि ॥

हिंसात्मक । त्रि० हिंसास्वभावे ॥

हिंसारु । पु० व्याघ्रे ॥

हिंसालुक । पु० खादुकोमृगि । का टखना० खाखया० कुत्ताइ० भा० ॥

हिंसित : । त्रि० प्राप्तहिंसे । हिंसां प्राप्ते ॥ यथा । यस्तु कन्यांपिता दत्त्वा न प्रयच्छति तां पुनः । अहोऽपि हगयास्तेन हिंसिताः स यम . ॥ इ० सारायपु० ॥

हिंसीर । पु० व्याघ्रे ॥ त्रि० खले । दुष्टे ॥ हिनस्ति हिंसि० । हिंसीरक्षीरवो । खरेभेद ॥

हिंस्र । पु० शिवे ॥ भीमसेने ॥ हरे ॥ त्रि० हिंसाशीले । घराती । घातुके ॥ हिंस्रायां हिंसने दोषा भावीयथा । कृपाकार्यसताम्पवद हिंस्रेषु च जन्तुषु । हिंसायामपि दोषयहि खाघास्तवकोश्वर । इ० ब्र० वे० क्र० जन्मखण्डे ८५ ऽध्याय : ॥ हिनस्ति । हिंसि० । नमिकम्पिस्म्यजसकमहिंसदीपो र ॥

हिंस्रक । पु० हिंस्रपशौ । व्याडे ॥ स्वार्थेक ॥

हिंस्रपशु । पु० हिंस्रकजन्तौ । व्याडे । हिंस्रे ॥

हिंस्रा । स्त्री० चौस० इ० भा० प्र० वर्गे । काकोदुम्बर्याम् ॥ जटामांस्याम ॥ वसायाम् ॥ हिनस्ति । हिंसि० । र । टाप् ॥ गवेधुकायाम ॥ नाड्याम ॥

हिक्का । स्त्री० ऊर्द्ध्ववातप्रवृत्तौ शब्दविशेषे ॥ रोगोपसर्गविशेषे ॥ रोगविशेषे ॥ यथाविप्रकृष्टनिदानमाह । विदाहिगुरुविष्टम्भिरूक्षाभिष्यन्दिभोजनैः । शीतपानाशनस्नानरजो धूमैस्तथानिलैः ॥ व्यायामकर्म भाराध्ववेगाघातापतर्पणैः । हिक्काश्वासश्च कासश्च नृणां समुपजायते ॥ अपतर्पणम् अनशनादि ॥ सम्प्राप्तिमाह । वायु कफेनानुगत पञ्चहिक्काकरोतिहि । अन्नजां यमलांक्षुद्रांगम्भीरां महतींतथा ॥ सामान्यलक्षणम् । मुहुर्मुहुर्वायुरुदेतिसस्वनोयकृत्प्लिहान्त्राणिमुखादिवक्षिपन् । सघोषआशुहिनस्त्यसून् यतस्ततस्तु हिक्काभिधीयते बुधैरिति ॥ हिनस्तीतिहिक्का । पृषोदरादित्वाद्रूपसिद्धिः । हिगितिकायति० शब्दंकरोतीतिवा ॥ हिक्कनम् । हिक्कअव्यक्ते शब्दे । गुरोश्च टाप् ॥ यथा । हिक्कयते । हिक्कहि साम् । पचाद्यच् ॥

हिङ्कार । पु० सामभक्त्यन्तरे । पाघ्र

हिन्दोल । पुं० श्रावणशुक्लपक्षविहि
तभगवद्दोलायात्राविशेषे । दोलयात्रेति
प्रसिद्धे । षड्रागान्तर्गतरागविशे
षे । यथा । भैरवः कौशिकश्चैव
हिन्दोलो दीपकस्तथा । श्रीरागो मे
घरागश्च षडेते पुरुषाह्वयाः इति ॥
हिन्दोलक । पुं० यानविशेषे । दो
लायाम् । प्रेङ्खायाम् ॥
हिन्दोलनम् । न० दोलने ॥
हिन्दोला । स्त्री० दोलिकायाम् ॥
हिबुकम् । न० लग्नाच्चतुर्थभवने ॥
हिम । पुं० चन्दनवृक्षे ॥ कर्पूरे ॥
चन्द्रे । हेमन्तर्तौ ॥ हिमालयप
र्वते ॥ न० तुषारे । रजनीजले ॥
तत्पर्याया यथा । अवश्यायस्तु नीहा
रस्तुषारस्तुहिनं हिमम् । प्रालेयं म
हिकेति ॥ चन्दने ॥ नवनीते ॥
मौक्तिके ॥ पद्मकाष्ठे ॥ रङ्गे ॥ शी
ते ॥ त्रि० शीतले ॥ हन्ति ।
हन० । हन्तेर्हिचेति मक् ।
हिमक । पुं० विकङ्कतवृक्षे ॥
हिमकर ।)
हिमकिरण ।) पुं० चन्द्रे । कर्पूरे
॥ हिमाः कराः किरणा यस्य ॥
हिमकूट । पुं० शिशिरर्तौ ॥ हिम
कदम्बे ॥
हिमगिरि । पुं० हिमालयपर्वते ॥
हिमज । पुं० मैनाकाचले । मे
नकापुत्रे । हिमात् जात । ज
नी० । पञ्चम्यामिति ड ॥ न०
॥ हिमोद्भवे ॥
हिमजा । स्त्री० गौर्याम् । पार्वत्या
म् ॥ हिमात् हिमालयात् जाता
। जनी० । ड । टाप् ॥
शट्याम् । क्षुद्राख्याम् । क्षी
रिण्याम् ॥
हिमझण्ट । पुं० भूमिकायाम् ।
कुज्झटिकायाम् ॥
हिमतैलम् । न० कर्पूरतैले ॥
हिमदुग्धा ।)
हिमदुग्धिका ।) स्त्री० क्षीरिण्याम् ॥
हिमदुर्दिनम् । न० पक्षहिमे ।
हिमनिपातितैनदुःखदायकदिने ॥
हिमद्युति । पुं० इन्दौ । चन्द्रे ॥
हिमा द्युतिर्यस्य ॥
हिमद्रुमः । पुं० महानिम्बे ॥
हिमनामा । पुं० कर्पूरे ॥ हिम
स्य नामान्येव नामान्यस्य ॥
हिमप्रस्थ । पुं० हिमगिरौ ॥
हिमवान् । पुं० उमागुरौ । नगा
धिराजे । हिमालये ॥ शतद्रु
चन्द्रभागाद्या हिमवत्प्रभवा नद्यः
स्मृता । सर्वान्निवेश्य हिमवान्
भोगिनामलयाऽचल ॥ हिमम
स्त्यस्मिन् । मतुप् । वत्वम् ॥
हिमवत्सुत । पुं० हिरण्यनाभे ।
मैनाकाचले ॥
हिमवत्सुता । स्त्री० उमायाम् ।

गौर्य्याम् हिमवतः सुता ॥ ग ङ्गायाम् ॥ इ० ध० य ॥

हिमवत्सुतावधू । पु० । भौमि तीर्थविशेषे ॥

हिमवालुक । पु० कर्पूरे । इ० राजनिघण्टः ॥

हिमवालुका । स्त्री० कर्पूरे ॥ हि माघासौवलुकाच ॥

हिमशर्करा । स्त्री० यावनाल्याम् ॥

हिमशैल । पु० हिमवति । मे नाधवे ॥ हिमप्रधान शैल ॥

हिमशैलजा । स्त्री० पार्वत्याम् ॥

हिमसंहति । स्त्री० महाहिमे । हिमान्याम् । हिमानांसंहति ॥

हिमह । पु० आदित्ये ॥ वह्नौ ॥ हिम आडा हन्तीति हिमह . । ड

हिमहासक । पु० हिन्तालवृक्षे ॥

हिमा । स्त्री० नागरमुस्तके । सू क्ष्मैलायाम् ॥ रेणुकायाम् ॥ पृ क्कायाम् । भद्रमुस्तायाम् ॥ च र्म्मिकायां ॥

हिमांशु । पु० चन्द्रमसि । हि मांशवोयस्य ॥ कर्पूरे ॥

हिमांशुभस्म : । पु० कर्पूरे । न० रौप्ये ॥

हिमाग . । पु० हिमालये ॥ हि मप्रधानोग . ॥

हिमागम । पु० हेमन्ते ॥ हि मस्यागमोयस्मिन् ।

हिमाचल । पुं० हिमालये ॥

हिमात्यय । पुं० वसन्तर्त्तौ । हि मस्यात्ययोयस्मिन् ॥

हिमाद्रि । पु० हिमशैले ॥

हिमाद्रिजा । स्त्री० पार्वत्याम ॥ हिमाद्रेर्जाता । जनी० । ड । टाप् ॥ क्षीरिण्याम् ॥

हिमाद्रितनया । स्त्री० पार्वत्याम ॥

हिमाद्रितनयापति । पु० शिवे ॥

हिमानी । स्त्री० हिमसंहतौ । मह द्धिमम । हिमारण्ययोर्महत्त्वइति ङीषानुकौ ॥ यथा । आगतावत चरैवहिमानीसेव्यताम सुरतरङ्गि णीसदा । कृष्णवर्त्मनिगुणानुकूल यन्तीजीवनैकुलवधन्यनुरागम् ॥ यावनालशर्करायाम् ॥

हिमाराति । पु० चीतिहोत्रे । ध नञ्जये ॥ किरणमालिनि । सूर्य्ये ॥ हिमस्यआराति ॥

हिमाल । पु० हिमशैले । हिमेन चलति । चनभूषणादौ । घञ् ॥

हिमालय । पु० भारतवर्षस्यसी मावर्त्ते । उदग्गद्रौ । नगपतौ । मेनाधवे । उमागुरौ ॥ स्थावराणां मध्ये भगवतोविभूतिरयम् ॥ हि मस्यालय ॥ शुक्लखदिरे ॥

हिमालयसुता । स्त्री० पार्वत्याम् ॥

हिमालया । स्त्री० भूम्यामलक्याम ॥

हिमाब्जम् । न० उत्पले ॥

ण्डगर्भ उदरे यस्य स हिरण्यगर्भः । विराड्देहान्तर्गतवैराजपुरुषस्य तदन्तर्यामिणश्चाभेदेनोपासनात् हिरण्यगर्भोपासकैः कर्त्तव्य इति विवक्षयैव निरुक्तिः सङ्गच्छते । द्युपतय एव० तेनयद्युरन्तमनन्ततयोत्वमपि० यदन्तराण्डं निश्चयानुसारिणी । स्वर्भुवरजांसि यान्ति यस्यास्यैव च्छ्रुतयस्त्वयि विफलत्वात् तन्निरसनेनभवन्निधनादूतिवेदस्तुत्यन्तक्षमत्वात् ॥ यद्वा । विराड्परमात्मनो हि हिरण्मयब्रह्माण्डस्य गर्भीभूतत्वादन्तर्वर्त्तित्वाद्वैराजपुरुष एव हिरण्यगर्भ इत्युच्यते इति ॥ अथवा हिरण्यवदुज्ज्वलमण्डं यद्व्यगर्भे उदरे यस्य स । हिरण्मयमण्डद्रव्यं चराचरसृष्टिरेतसोऽस्याभिधानादिति ॥ समष्टिलिङ्गशरीराभिमानिनि चैतन्ये । ज्ञानशक्तिमदन्तःकरणोपहितत्वात् ज्ञानशक्तिप्रधाने ॥ सूक्ष्मरूपे । प्राणे । सूत्रात्मनि । ईशे । ईश्वरे ॥ हिरण्यगर्भो नाम सूक्ष्मप्रपञ्चाभिमानी । सूर्यमण्डलान्तर्गतः सूक्ष्मसमष्टिदेहो विज्ञानात्मा चक्षुर्गोलकानुगतेन्द्रियानुपाश्च स सारिणोऽर्थान्तरमिति व्याख्यातारः ॥ मायोपाधिकः परमात्मा लिङ्गशरीरसमष्ट्यभिमानी सन् हिरण्यगर्भ इत्युच्यते ॥ अयमादिपुरुषः प्रादुर्भावईश्वरश्चोच्यते । यथा । स वै शरीरी प्रथमः स वै पुरुष उच्यते । आदिकर्त्ता स भूतानां ब्रह्माग्रे समवर्त्तत इति स्मृतेः । विष्णौ ॥ शालग्रामविशेषे ॥ महादानविशेषे ॥

हिरण्यदंष्ट्र । पु० अमृतदंष्ट्रे । अभयदंष्ट्रे ॥

हिरण्यद । पुं० समुद्रे ॥ त्रि० स्वर्णदातरि ॥

हिरण्यदा । स्त्री० भूमौ ॥

हिरण्यनाभ । पु० मैनाकाचले ॥ हिरण्यमिव नाभिरस्य । अच् प्रत्ययन्ववेत्यचाजितियोगविभागाद्वा ॥

हिरण्यबाहु । पु० शोणनदे । हिरण्यबाहा यस्य ॥

हिरण्यरेता । पु० हुतभुजि अग्नौ ॥ हिरण्यं रेतोऽस्य ॥ सूर्ये ॥ चित्रकवृक्षे ॥ शिवे ॥

हिरण्यव । पु० दैवधने । न० निधिविशेषे ॥ त्रि० सहिरण्ये ॥ हिरण्यमस्त्यस्य । मन्त्वर्थीयो वप्रत्ययः ॥

हिरण्यवर्ण । त्रि० शुद्धवर्णे ॥

हिरण्यवर्णा । स्त्री० नद्याम ॥ इ० हे० न्द्र

हिरण्यवाह । पु० शोणनदे ॥ हिरण्यं वहति । कर्मण्यण् ॥

हिरण्यशीर्ष । पुं० ब्रह्मोपस्थादिविशेषे ।

हिरण्यस्तूप । पु० ऋषिविशेषे । अङ्गिरस पुत्रे ॥

हिरण्याक्ष । पु० कश्यपाद्दित्यांसमुत्पन्ने० आद्यदैत्यविशेषे ॥

हिरण्याश्व । पु० तुलापुरुषादिषोडशमहादानान्तर्गतमहादानविशेषे ॥

हिरण्याश्वरथ । पु० षोडशमहादानान्तर्गतमहादानविशेषे ॥

हिरुक् । अ० विनार्थे ॥ हिरुक् त्वामिमे च ॥ मध्यार्थे ॥ हिनोति । हिगतौ । रुक् प्रत्यय । सामीप्ये ॥ अधमार्थे ॥

हिलमोचि । स्त्री० हिलमोचिकायाम् ॥

हिलमोचिका । स्त्री० आहृत्याम् । आचार्याम् । चक्राङ्ग्याम् । हिल द्या० क्रू० गौ० भा० प्र० हिलसा व्यसाके । यथा । शोथ कुष्ठ कफ पित्त हरतेहिलमोचिका ॥ हिलति । हिलभावकरणे । क्रुपधेतिक । मोचयति । मुचि ण्वुल् । हिला चासौ मोचिका । डापोरितिक्स चुत्रे ॥

हिलमोची । स्त्री० हिलमोचिकायां ॥

हिल्ल । पु० अरारिपक्षिणि ॥

हिल्लोल । पु० तरङ्गे । नद्यादिजलस्य वायुनालियंगतृञ्चमने । रतिबन्धविशेषे ॥ यथा । हृदिकृत्वाङ्घ्रिय पादौ करार्भ्यांधरवेत् कुचौ । यथेष्टताडयेद्योनि बन्धोहिल्लोलसञ्ज्ञक ॥

हिल्वला । स्त्री० मृगशीर्षायाम् ॥

हिवुक । न० लग्नाच्चतुर्थभवने ॥

ही । अ० हु खेहेतौ ॥ विषादे ॥ विस्मये ॥ यथा । हन्तविधिलुलितानाहीविचित्रोविपाक ॥ हिनोति । हि० विच । सम्पापूर्वक्त्वान्नगुण । क्विपितुगभावोवा । भावेवाप्रत्ययौ । पृषोदरादित्वाद्दीर्घ ॥ हनतमनाहुतकाङ्गोर्वा ॥ शोके ॥

हीन । त्रि० गर्ह्ये ॥ ऊने । प्रतिवाद्दिविशेषे ॥ यथानारद । अन्यवादीक्रियाद्वेषीनोपस्थायोनिरुत्तर । आहूतप्रपलायीचहीन पञ्चविध स्मृतइति ॥ ओहाति० हीयतेस्मवाओहाक् त्यागे । आदिकर्मणिक्त० कर्मणिवा । ओदितश्चेतिनत्वम् । घुमास्थेतीत्वम् ॥

हीनक्रिय । त्रि० जातकर्मादिक्रियावर्जिते ॥

हीनवर्ण । त्रि० नीचजातौ ॥ यथा । हीनवर्णोपभुक्तायात्याज्या वध्यापिवाभवेदिति ॥

हीनवादी । त्रि० विरुद्धार्थवादिनि ॥ यथानारद । पूर्वंवादपरित्यज्य योन्यमालम्बतेपुन । वादसङ्क्रमणाज्ज्ञेयोहीनवादीसवैनरइति ॥ वाक्यवर्जिते । अधरे ॥

हीनाङ्ग । त्रि० स्वभावतोन्यूनाधि

ह्रागे । विकलाङ्गे । अपोगण्डे ॥ तेनसहपरिहासनिषेधोयथा । जातिहीनविद्याहीन रूपहीनमद्यच म् । हीनाङ्गमतिरिक्ताङ्ग तेनदोषित्वनाक्षिपे ॥ इतिब्रह्मपुराणाद्यहेदोवार्थविनिश्चयमिति कालिका पुराणे ४४ऽध्याय ॥

हीनाङ्गी । स्त्री॰ क्षुद्रपिपीलिकायाम् ॥

हीर । पु॰ शङ्करे । शिवे । हरे ॥ प्रलयेसकलम्हरति । हृञ॰ । पचाद्यच । पृषोदरादित्वादीत्वम ॥ वज्रे ॥ सर्पे ॥ श्रीहर्षकवेः पितरि ॥ हारे । तगणे॰ ऽऽ।॰ ॥

हीरक । पु॰ रत्नमुख्ये । सूचीमुखे । दधीच्यस्थ्नि । हीरे । वज्रे हीरा॰ ह॰ भा॰ प्र॰ रत्ने ॥ चल यस्वेषितु योग्य तदत्रोलिखितमया । तत्रैवतस्मादुद्दृष्टव्य गुणनामादिवर्णनम् । भाराहस्तान्तरे ॥ यथा । वज्रिटगणमन्त्वरगणमेवचरणाशोभितम्॰ पञ्चसुदतिनागन्तपतिरत्नदतिनोष्ठितम् । राजभजनकर्णलपठनपञ्चरटनरक्षनर्तोत्कृतिनामभवतिकामभवतिसज्जनम् ॥ यथा । ध्यानमटतसाम्पठतनामरटतकभवधर्मयतधर्मं भजतकर्मसृजतमेवम । दृषारभवनद्वारदमयसारदयमवासनातावदयति मावतरति॰ कालन्दपति शासनास्वार्थकं ॥

हीरा । स्त्री॰ लक्ष्म्याम् । श्रियि ॥ तैलपायिकायाम् ॥ पिपीलिकायाम् ॥ काश्मर्याम ॥

हीराङ्ग । पु॰ इन्द्रस्यास्त्र । वज्रे कुलिशे ॥

हीलम् । न॰ रेतसि । इतिकश्चित ॥

हीलुकम् । न॰ मद्यविशेषे । गौडाम ॥

हीहो । अ॰ विस्मये ॥ हास्ये ॥ यथा । कस्त्वं लोहितलोचनास्यचरणोहंस कुतोमानसात्किं तत्रास्तिसुवर्णपङ्कजवनं नीरं सुधासन्निभं । रत्नानानिचय प्रवाललतिकावैदूर्यरोह क्वचिन्मगडुकाश्चिल्लतवसन्तिनवकोराकण्ठं हीही बकम ॥

हुङ्कृतम् । न॰ हुङ्कारे । वन्यवराहशब्दे ॥

हुङ्कृति । स्त्री॰ वर्णोरवध्वनौ ॥

हुड । पु॰ । मेषे ॥ पालिकाकाटा ह॰ गौ॰ दे॰ भा॰ प्र॰ । चौरादिनिवारणार्थं भूमिनिहितलौहमयतीक्ष्णशङ्कुविशेषे ॥ लगुडे ॥ ह॰ महाभारतम् । भोजयावुरुजइतिख्यातेयोधगणाग्रयस्थाने ॥ विष्मूत्रोत्सर्जनगृहे ॥

हुडक्क । पु॰ हुडुक्के ॥
हुड् । पु॰ मेषे
हुडवा । पु॰ दात्यूहे ॥
हुडुक्क । पु॰ वाद्यभेदे मदमत्ते ॥ दात्यूहपक्षिणि ॥ हुडुक्की । हुडुक्का इ॰ गौ॰ दे॰ भा॰ प्र॰ वाद्यविशेषे ।
हुडम् । न॰ हुडमल्के ॥
हुडुक्क । पु॰ ऊर्ध्वमिति । हुडु म॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥
हुण्ड । पु॰ व्याघ्र ग्रामशूकरे ॥ मूर्खे ॥ राक्षसे ॥
हुत । पु॰ देवस्तुत्योः होमे ॥ त्रि॰ वषट्कृते । मन्त्रैः गौर्वाग्निर्वा घृ तादौ । हवि प्रक्षिपे । हूयते । हुशब्दादलयो । क्त ॥ न॰ हवने । होमे । अग्नौ हवि प्र क्षेपक्रियायाम् ॥ नपुंसकेभावे क्त ॥
हुतभुक्प्रिया । स्त्री॰ अग्निपत्न्या म ॥ स्वाहायाम् ॥ हुतभुज प्रिया ॥
हुतभुक् । पु॰ वैश्वानरे । अग्नौ ॥ हुतभुक् । भुज॰ । क्विप् ॥ चित्रौ ॥ हुत हविर्भुनक्ति पाल यति त्रिगुणमपि सगुणं करोति तस्मा मे । स्वाहादि इति हुतभुक् ॥
हुतवह । पु॰ अग्नौ ॥ हुतस्य वह ॥
हुताश । पु॰ अग्नौ ॥ हुतम श्नाति । अश॰ । कर्मण्यण् ॥
हुताशन । पु॰ अग्नौ ॥ हुत अशनमस्य ॥ यथा । लक्ष्ये मे तुरङ्गे स्यात कोटिहोमे हुताशन । पूर्णाहुत्यामृडोनाम शान्तिके वर द सदा ॥ शिवे ॥
हुताशनी । स्त्री॰ होलिकायाम ॥
हुति । स्त्री॰ हवने हु॰ क्तिन्॰ ॥
हुम् । अ॰ स्मृतौ ॥ अपाकृतौ ॥ अर्थप्रश्ने ॥ अभ्यनुज्ञायाम् ॥ वितर्के ॥ भये । भर्त्सने । कोपे । हूयते । हु॰ । बाहुल का त्डुम ॥
हुडुक्को । स्त्री॰ मुखवक्त्रायाम् । स्त्रीणामङ्गलजनकमुखध्वनिविशेषे । हुतलहुलु इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥
हुहु । ) पु॰ गन्धर्वविशेषे ॥ य
हूहू । ) था । हूहूहुहुस्त्रिविधौ हुहूहूहुस कुम्भिर्दितिमव्द्रतावकौ ॥
हू अ॰ आह्वाने । अवज्ञायाम् । अहङ्कारे ॥ शोके ॥
हूङ्कार । पु॰ हूमितिभयजनकध्व निकरणे ॥
हूड । पु॰ मेषे ॥
हूण । पु॰ । म्लेच्छजातिविशेषे ॥ यथा । श्वपाकास॰ पुक्कसा

कुञ्जीवयनहूस्यपि । तोकवाद्यास्तु येवाःजिगायायाचारवञ्जितं ॥ म्लेच्छ किरातशवरपुलिन्दाद्यास्तु तद्विदेतिजटाधरः ॥ देशविशेषे ॥ यथा । कोमगिरेः पूर्वभागेमरुदेशात्पश्चिमे । हूणदेश समाख्यातः शूरास्तत्रमानवाः ॥

हूतम् । न० आह्वाने ॥ नाम्नि ॥ त्रि० आहूते ॥

हूति । स्त्री० आकारणायाम । आह्वाने ॥ ह्वानम् । ह्वेञ् क्तिन् । वचिस्वपीतिसम्प्रसारणम् ॥

हूम । अ० प्रश्ने ॥ वितर्के ॥ रुषोक्तौ ॥ अनुनये ॥ स्मृतौ सम्भाव्ये ॥ अभ्युपगमे । कुत्सने ॥ प्राकाश्ये । हूयते । हु० । बाहुलकात् । मुषिद्रादि ॥ यद्वा । ह्वयनम् । ० डूम प्रत्यय ॥

हूरव । पु० शृगाले ॥

हूर्च्छनम् । न० कौटिल्ये ।

हूहू । पु० गन्धर्वविशेषे ॥

हूहू । पु० देवगन्धर्वे ॥ हूहूतिशब्दं ह्वयति । ह्वेञ् स्पर्धायांशब्देच । क्विप् । वचिस्वपीतिसम्प्रसारणम् । हलइतिदीर्घं । अजादौ० हूहू वौ० हूहूवःइत्यादिरूपाणि । अव्यत्ययपक्षे तु हूहौ० हूहूवःइत्यादि ।

हृच्छय । पु० मदने । मन्मथे । कामदेवे । हृदिवस्त्वविवेकिनांचेतसि शेते । शीङ् स्वप्ने । अधिकरणे शेतेरित्यच् ॥

हृच्छयालु । पु० कामदेवे ॥

हृच्छूलम् । न० हृदयशूले ॥ यथा । कफपित्तवस्तुमारुतौरसवर्द्धितः । हृदिस्य कुरुतेशूलमुच्छ्रासवावरोधकम् । सहृच्छूलइतिख्यातोरसमारुतकोपजः ॥

हृणिया । स्त्री० जुगुप्सने ।

हृणीया । स्त्री० भर्त्सने । जुगुप्सने ॥ हृणीङ् कण्ड्वादि । यक् । अप्रत्ययात् ।

हृत । त्रि० मुषिते । आकृष्टे ॥ अहारि । हृञ् । क्त । उपात्ते ॥

हृति । स्त्री० हरणे । देशाद्देशान्तरप्रापणाया

हृत्कम्प । पु० हृदयकम्पने ॥

हृत्पति । पु० अन्तर्यामिणि ॥

हृत्स्थ । त्रि० बुद्धिस्थे ॥

हृत् । न० बुक्के ॥ चित्ते । बुक्कौ । मानसे । अस्त्र कारणे । हृदयकमले ॥ नवमभवने ॥ हृदयस्य० पद्दन्नित्यादिना० हृदादेश ० । भतिसहचरणात्प्रकारार्थत्वात् क्वचित् स्वरादावपि । यद्वा । हरति० क्विपतेः हृञ् ० । हृञो पुक्‌तुकौचेति० बाहुलकात्केवलाद्‌विदुक् । यथा । अत्र पृथुत्वसन्तपार्श्वाद्धृदयस्मृतम् विपरीत सिरालखरोमश दु

स्वभागिनामिति ॥

हृदयम । न० उरसि । वक्षसि ॥ बुक्कायाम् । हृदयान्तर्गतमांसविशेषे । अग्रमांसि । मानसी । स्वान्ते स्मृतिप्रत्ययास्पदेस्थाने ॥ हरति० आहरतिविषयान्० क्रियतेविषये र्वा । हृञो सुक दुकौचेतिकयम् दुगागमश्च ॥ परमात्मनि ॥ हृदिस्थम ॥ हृदयकमले ॥ यथा 'पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखम् । हृदय तद्विजानीयाद्विश्वस्यायतनमहत् ॥ अपिच । हृदयं पुण्डरीकाख्यसदृश स्यादधोमुखम् । जाग्रतस्तद्विकसति स्वपतस्तु निमीलति । आशयस्तत्तु जीवस्य चेतनस्थानमुत्तमम । अतस्तस्मिन्तमोव्याप्ते प्राणिन स्वपयन्तिहि ॥

हृदयग्रन्थि । पु० अहङ्कारे । चिज्जडयं यन्नरूपेऽहङ्कारेचिद्रूपकारतादत्तयरूपे ॥ चिज्जडात्मकत्वात्० ग्रन्थिरिवग्रन्थि ' ॥ हृदयमेवग्रन्थिर्वा ॥ हृदुभ्यं ॥

हृदयङ्गमम । चि० सुखजनकोक्तौ । युक्तियुक्तवाक्ये । सङ्गते ॥ हृदयं गच्छति । गमश्चेतिखच् ॥

हृदयज ' । पु० पुत्रे ॥ चि० हृदयउत्पन्ने ॥

हृदयज्ञ ' । चि० हृदयप्रिये ॥ हृदयाभिज्ञे ॥

हृदयदौर्बल्यम् । न० मनसोभ्रमप्रादिरूपेऽधैर्ये ॥ हृदयस्यदौर्बल्यम् ॥

हृदयवान् । चि० हृदयालौ । मतुप् ॥

हृदयशल्य । पु० । सन्देहे ॥

हृदयशुद्धि । स्त्री० अनवरोधे ॥ हृदयस्यशुद्धि ।

हृदयस्थ । चि० सर्वान्तर्यामिणि ॥

हृदयस्थानम् । न० भुजान्तरे । क्रोडे । उरसि ॥

हृदयस्पृक । चि० मनोज्ञे । हृदयस्पृशति । स्पृश० । स्पृशोऽनुदकेक्विन् ॥

हृदयात्मक । )
हृदयात्मा । ) पु० कङ्कपक्षी ॥

हृदयालु । पु० प्रसन्नचेतसि । सुहृदये ॥ प्रशस्तहृदयमस्यास्ति । हृदयाच्चालुरन्यतरस्यामित्यालु ॥

हृदयाविन् । चि० पिशुने ॥ हृदयमाविध्यति । क्विप ॥

हृदयिक । चि० प्रसन्नचेतसि । हृदयिनि ॥ हृदयंप्रशस्तमस्यास्ति । ठन् ।

हृदयी । चि० प्रशस्तचेतसि । हृदयालौ ॥ हृदयप्रशस्तमस्य । इनि ॥

हृदयेश । पु० पत्यौ । भर्त्तरि । पत्यौ ॥

हृदयेशा । स्त्री० प्रेयस्याम् । भार्यायाम । कान्तायाम् ॥

हूतस्तेनागच्छति हि॰। जतियूतिजूतिसातिहेतिकीर्त्तयश्चेति क्तिन्नन्तानिपातिताः। हन्ति॰ हन्यतेऽनया वा। क्तिन्। जतियूतीतिसाधु॥

हेतु। पु॰ कारणे। बीजे। निमित्ते। नियतपूर्वभाविनि। येन विनाय नभवति तस्मिन्॥ हिनोति व्याप्नोतिकार्यम्। हिगतौ कर्मणिमनिणाभावाहिन्यस्येति तु॥ फलसाधनयोग्ये पदार्थे॥ हेतुलक्षणमाहगौतम उदाहरणसाधर्म्यात्साध्यसाधनं हेतुस्तथा वैधर्म्यात्॥ ३४॥ पक्षसाध्यसाधनं हेतुरिति सामान्यलक्षणम्। साध्यसाधनं साध्यसिद्ध्यनुकूलज्ञापकत्वबोधकत्वमर्थः तथाच साध्यतावच्छेदकावच्छिन्नसाध्यान्वितज्ञापकत्वबोधकं साध्यान्वितस्वार्थबोधकोऽवयव इतिफलितार्थः। तद्द्वैविध्यमाह उदाहरणसाधर्म्यात्॰ तथा वैधर्म्यादिति। साधर्म्यमन्वय॰ वैधर्म्यं व्यतिरेकः। तादृशव्याप्तिरितिफलितार्थः। उदाहरणसाधर्म्यम॰ उदाहरणबोध्यान्वयव्याप्तिस्ततोऽन्वयीहेतुर्ज्ञातव्य उदाहरणेतिहृष्टार्थम्। तथाच ज्ञातान्वयव्याप्तिकहेतुबोधकोहेत्ववयवः। ज्ञातव्यतिरेकव्याप्तिकहेतुबोधकोहेत्ववयव इतिफलितार्थः। एवमप्रतीतान्वयव्याप्तिकहेतुबोधकोहेत्ववयवोव्यतिरेकी हेतुः इत्थमेवप्रतीतान्वयव्यतिरेकव्याप्तिकहेतुबोधकोहेत्ववयवोऽन्वयव्यतिरेक्यपिसूचितमितिवदन्ति। साधने॥

हेतुक। पु॰ कारणे। स्वार्थे क। त्रि॰ तत्सम्बन्धिनि।

हेतुता। स्त्री॰ कारणतायाम्। हेतुत्वे॥ सङ्गतिविशेषे। प्रत्यक्षप्रमायां हेतुतासङ्गतिः। हेतोर्भावः। तस्य भावस्त्वतलावितितल्॥

हेतुमान्। त्रि॰ व्यक्ते। कारणवति युक्तियुक्ते। हेतुरस्यास्तीति मतुप फले॥

हेतुशास्त्रम्। न॰ तर्कशास्त्रे।

हेतौ। अ॰ निमित्तार्थे।

हेत्वाभास। पु॰ हेतुदोषे॥ सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधितभेदात्। यथोक्तं भाषापरिच्छेदे। अनैकान्तोविरुद्धश्चाप्यसिद्धः प्रतिपक्षितः। कालात्ययापदिष्टश्च हेत्वाभासास्तु पञ्चधा। आद्यः साधारणस्तु स्यादसाधारणकोऽपरः। तथैवानुपसंहारी त्रिधानैकान्तिको भवेत्। यः सपक्षे विपक्षे च भवेत्साधारणस्तु सः। यस्तूभयस्माद्व्यावृत्तः सचा

जातवेदसः । पतितं यत्तदा पृष्ठे रेतस्तद्धेमतामगात् । क्षितिमप्यापि भस्तितद्रसेन्द्रस्य विधत । स्वर्णं सुवर्णं कनकं हिरण्यं हेमहाटकं । तपनीयं कलधौतं गाङ्गेयं गर्भकाञ्चनम् । चामीकरं शातकुम्भं तथा कार्त्तस्वरं मतम् । जाम्बूनदं जातरूपं महारजतमप्यपि । दाहे रक्तं सितं छेदे निकषे कुङ्कुमप्रभम् । तारशुल्बोज्झितं स्निग्धं कोमलं गुरु हेम सत् । तच्छ्वेतं कठिनं रूक्षं विवर्णं समलं दलम् । दाहे छेदे ऽसितं श्वेतं कषे त्याज्यं लघु स्फुटम् । इत्त० दे० पतञ्जलि० वि० । स्फुटयद्घनाहत ॥ स्फुटतिति मीतिष्टीयते वा । हिनस्तीति वा । अस्मिन् । धत्तूरे । नागकेसरे ।

हेमन्त । पु० ऋतुविशेषे । सहस्यो । मार्गशीर्षपौषयोः । हन्ति शीतकालं ग्रीष्मं न । हन्तेर्मुट च झिच् प्रत्ययः । हन्तिर्हिंचेति हि राद्धिमुडागमो गुणश्च ॥

हेमन्तनाथ । पु० कपित्थे ॥

हेमपर्वत । पु० सुमेरुगिरौ ॥

हेमपुष्पम् । न० चम्पके । जवापुष्पे । पु० चम्पकवृक्षे ॥ हेमवर्णपुष्पमस्य ॥ राजवृक्षे ॥

हेमपुष्पक । पु० चम्पकवृक्षे । हेमवर्णपुष्पमस्य ॥ लोध्रे । अशोके ।

हेमपुष्पिका । स्त्री० स्वर्णयूथिकायाम् । पीतयूथिकायाम् । गणिकायूथिकाम्बष्ठासापीता हेमपुष्पिका ॥ हेमवर्णपुष्पमस्याः । पाककर्णेति ङीष् । स्वार्थे कन् । ह्रस्व ॥

हेमपुष्पी । स्त्री० स्वर्णयूथ्याम् । सुवर्णाख्याम् ॥ स्वर्णुल्याम् ॥ काण्डकार्याम् ॥ इन्द्रवारुण्याम् ॥ स्वर्णजीवन्त्याम् ॥ माञ्जिष्ठायाम् ॥ हेमवर्णपुष्पमस्याः । पाककर्णेति ङीष् ॥

हेमफला । स्त्री० स्वर्णकदल्याम् ॥

हेममाला । स्त्री० यमपत्न्याम् । स्वर्णस्रजि ॥

हेममाली । पु० सूर्ये ॥ कार्त्तवीर्ये ॥ त्रि० हेममालायुक्ते ॥

हेमयूथिका ।
हेमयूथी । } स्त्री० स्वर्णयूथिकायाम् ॥

हेमरागिणी । स्त्री० घर्षण्याम् । हरिद्रायाम् ॥

हेमल । पु० कलादे । स्वर्णकारे ॥ कृकलासे । सरटे । भिल्लान्तरे । कषपाषाणे । कसौटी० इ० भा० प्र० ॥

हेमलता । स्त्री० स्वर्णजीवन्त्याम् ॥

हेमलम्ब । पु० वत्सरविशेषे ॥ तत्फलं यथा । पीडाम्ले सर्वशस्यानि दैशिदेशिशुचिस्मृते । हेमलम्बे प्रजाः सर्वाः पीडयन्ते नात्र संशयः ॥ २१ ।

हेमवल्लम । न० मौक्तिके ॥

हेमशङ्ख । पु० विष्णौ ॥

हेमशिखा । स्त्री० स्वर्णक्षीर्य्याम् ॥

हेमसारम । न० तुत्थे । कृ० रसच
न्द्रिका ॥

हेमसूत्रकम् । न० हारविशेषे ॥

हेमहस्तरथ । पु० महादानविशेषे ॥

हेमा । स्त्री० अप्सरसांभेदे ॥ सुन्दर्यां
नार्याम् ॥

हेमाङ्ग । पु० गरुडे ॥ परमेष्ठिनि ॥
सुमेरौ ॥ सिंहे ॥ चम्पके विष्णौ
॥ न० हेमवर्णशरीरे ॥ त्रि० तद्व
ति ॥ हेमाङ्गवपुर्यस्य ॥

हेमाद्रि । पु० सुरपर्वते । मेरौ ॥
हेमाऽद्रिः । चिन्तामणिकामधेनु
कल्पद्रुमनामकस्मृतिसङ्ग्रहकारकेच
निद्देराजविशेषे ॥

हेमाद्रिशरण । पु० स्वर्णक्षीर्याम् ॥

हेमाह्व ।
हेमाह्वय । } पु० वनचम्पके ॥ चम्प
के ॥ धत्तूरे ॥

हेमाह्वया । स्त्री० स्वर्णजीवन्त्याम् ॥
हेमवाह्वयोयस्याः ॥

हेमाह्वा । स्त्री० हेमक्षीर्याम् । चोके
॥ गुणायथा । हेमाह्व रोचनीतिक्ता
मादिन्युत्क्लेदकारिणी । क्रिमिक
ण्डूविषानाहकफपित्तास्रकुष्ठनुदि
ति ॥ स्वर्णजीवन्त्याम ॥

हेय । त्रि० त्याज्ये । हातव्ये ॥ पुरु
षस्येष्टसाधनत्वेनाप्रयुक्तमनिरो
धितदुपादेयविपरीतन्तुहेयम् हा

तुर्वाच्य । चोदाक० । अचोयत्
ईद्यति । गुण ॥

हेर । त्रि० मुकुटप्रभेदे ॥ हरिद्रायाम् ॥ आसुर्यामायायाम ॥ कृ० का
शिन् ॥

हेरम्ब । पु० विनायके एकदन्ते ।
लम्बोदरे । विघ्नराजे । गणेशे ॥ हे
शङ्करे० रम्बते अग्निवत्समीपे आरम्बते
। रबिशब्दे । चोष्ठोपध । पचा
द्यच् । तत्पुरुषेऽलुक् इत्यलुक् । हेड
ष्टसिरम्बते० इतित्वामी ॥ महिषे
॥ शौर्यगर्विते, बुद्धविशेषे । हेरके
। बक्कटीके ।

हेरम्बजननी । स्त्री० दुर्गायाम् ।

हेरम्बहट्ट । पु० देशविशेषे ॥

हेरिक । पु० चरे ॥

हेरुक । पु० कामाख्यायांप्रसिद्धेशि
वलिङ्गविशेषे । महाकालगणे ॥ बु
द्धभेदे । बक्कटीके ।

हेलञ्ची । स्त्री० हिलमोचिकायाम् ॥

हेलनम । न० अवज्ञायाम । अवहेलने
॥ हेडृअनादरे । ल्युट् । लडयो
रैक्यम ॥

हेला । स्त्री० अवज्ञायाम ॥ वरयोषि
तांविलासे । स्त्रीणांशृङ्गारभावजक्रि
याविशेषे ॥ आङ्गारसूचकोहावोहेला
ऽत्यर्थानुभावनम् । अपिच । हाव
एवभवेद्धेलाव्यक्त, शृङ्गारसूचका
कृति ॥ सुरतप्रौढेच्छायाम् ॥ यदा

ष्य मधुराबद्धबर्णसद्वृति ॥ वि०
हेमन्तसम्बन्धिनि । हेमन्ते त्यं ।
हेमन्ते जात • भव • साधु वा
। सर्व्वताण्चतलोपश्चेत्यण ॥

हैमन्तम् । न० । पु० हेमन्तर्त्तौ ॥ वि०
हेमन्तसम्बन्धिनि ॥ हेमन्तभवे ॥ स
न्धिवेलेति० ऋत्वण ॥

हैमन्तिकम । न० शालिधान्ये । आ
मनधान० इ० गौ० भा० प्र० ॥

हैमवत । पु० विषप्रभेदे ॥ न० भा
रतवर्षे ॥ यथा । नाम्न इभारतव
र्षं हिमाद्रेस्तद्दक्षिणं । तेन हैमव
तनामपरिख्यं वसुप्रयेत् ॥ कुलाद्र
यः सौमेरवसुमेरौ परितोस्थितद्वि
ति ॥ वि० हिमवतिजाते ॥

हैमवतवर्षम् । न० हैमवते । भारत
वर्षे । यथा । एतद्धैमवतवर्षं भा
रतीयवसन्तति : । हेमकूटपरयत्र
नाम्नाकिम्पुरुषीमतद्वति ॥

हैमवती । स्त्री० उमायाम् । काल्याम्
। पार्व्वत्याम् । हिमवतोपत्य स्त्री ।
हिमवतोभवा वा । अण् । ङीप् ॥
गङ्गायाम् ॥ हिमवत प्रभवतिप्र
काशते • तत्रप्रथम दृश्यतइतिया व
त् । प्रभवतीत्यण् ॥ स्वर्णक्षीर्याम्
। पटुपर्ण्याम् । हिमावत्याम ॥ इय
पीतक्षीरानागजिह्विकाकाराभवति
। यथा । हैमवत्यीपयस्या हिमवद्भूमि
सम्भवा । सानागजिह्विकाकारात



न्मूलेवाखिलौषधमिति ॥ हरीतक्या
म् । श्वेतवचायाम् । हिमवतिजाता •
भवा वा । तत्रजातइति • तत्रभवइति
वा अण् । चोरिण्याम् । रेणुकायाम्
॥ अतस्याम् ॥ कपिलद्राक्षायाम् ॥

हैमा । स्त्री० पीतयूथिकायाम् ॥

हैमी । स्त्री० पीतयूथिकायाम ॥ हेमम
य्याम् ॥ स्वर्णकेतक्याम् । चोरिण्याम्
। काञ्चनक्षीर्याम् । हिमोद्भवायाम् ॥

हैयङ्गवीनम । न० एकरात्रिपर्युषिता द्
ग्धोत्पन्ने • गोदोहोद्भवे घृते । त
त्र हैयङ्गवीनयत् • ह्योगोदोहोद्भव
घृतमित्यमर । यथा । हविश्च स्त्रान्दु
ग्धोत्थ ततश्चातुर्धैयङ्गवीनकम । है
यङ्गवीनचक्षुष्यदीपनरुचिकृत्परम्
। बलकृद्बृंहणवृष्य विशेषात्ज्वरना
शनम् ॥ ह्योगोदोहस्य विकार । है
यङ्गवीनसंज्ञायामितिह्योगोदोहस्य
हियङ्गुरादेशो विकारार्थेखञ्निपात्य
ते ॥ नवनीते ॥

हैरण्यगर्भ । पु० स्वायम्भुवमनौ ॥
हिरण्यगर्भस्यापत्यम । अण् हिरण्य
गर्भोपासके ॥

हैरिक । पु० चौरे ॥

हैहय । पु० कार्त्तवीर्य्ये एकवीरन्
पे । हय्यापत्यम । स्त्रीभ्योढक् ।
पृषोदरादि । यथा । हैमन्दन्नेवा
• नाभिकदेशेनमामयखुवात् । हैमा
श्चन्दकुर्व्वन्त्वयतिगच्छतीतिहैहयोऽ

श्वस्तस्यायं हैहय । यद्वा । हेमन्त॰ हेमन्त इति वदन् हयति गच्छतीति हेहयो विष्णुस्तस्यायम् हैहय । देशविशेषे ॥ यथा । पश्चिमे हैहयास्तद्भिन्ने ष्वथासयकादयइति कूर्मचक्रम् ॥

हैहय । पु॰ कार्त्तवीर्ये । अ॰ श॰ र॰ लो ॥

हा अ॰ विस्मये । सम्बोधने । आह्वाने । हानम् । आहाङ् गतौ । डा प्रत्यय ॥

होड । पु॰ तराम्बौवहने । अह॰ हुडौ॰ कु॰गी॰ दे॰ भा॰ प्र॰ नौकाविशेषे ॥ न॰ लोप्त्रे । चौरधने ।

होडा । स्त्री॰ बालिकायाम् । वयसि प्रथमइति ङपि प्राप्ते अजादित्वा ट्टाप् ।

होडा । पु॰ चौरे । अकारान्त इति कश्चित् ॥

होढम् । न॰ चौरकर्त्तृकाहृतधने ।

होता । पुं॰ । ऋग्वेदविदि । देवानामाह्वानकर्त्तरि॰ ऋग्वेदऋत्विजि ॥ अग्नौ देवानाह्वातीति स्मृतिरत्नौ । होमकर्त्तरि । जुहोति । हुदानादनयोः । नप्तृनेष्टृत्वष्टृचचिहातृपोतृ पित्र्यादिनासाध ॥ तन्विधानस्त्विच् चानुपसर्गस्ये ति तृन्वा ॥

होत्रम् । न॰ हविषि । हूयते । हु॰ । हुयामाश्रुभसिभ्यस्त्रन् ॥

होत्रा । स्त्री॰ ऋत्विजि ॥ टाप् ॥

स्तुतौ ॥

होत्री । स्त्री॰ यजमानरूपायांशिवमूर्त्तौ ।

होत्रीयम् । न॰ होमालये । वि॰ होतृसम्बन्धिनि ।

होम । पु॰ । पञ्चमहायज्ञेषु दैवयज्ञे । साथ्यप्रातर्होमयो ॥ सावित्र्यचरुहोमादौ । हवने । देवतोद्देशेनाग्नौ हवि प्रक्षेपे । यागएवत्यज्यमानद्रव्यस्याग्नौप्रक्षेपाद्धोमइत्युच्यते ॥ अत्रानुकल्पश्लोकम् । ऋत्विक्पुत्रोगुरुर्भ्राताभागिनेयोऽथ विट्पति । एतैरेवहुत यत्तु तद्धुत स्वयमेवहीति । हवनम् हु॰ । अर्त्तिस्तुसुहुसृ इतिमन् ॥

होमक । पु॰ होतरि ।

होमकुण्डम् । न॰ हवन्याम् ।

होमधान्यम् । न॰ तिले ॥

होमधूम । पु॰ निगणे । इतिहेमचन्द्र ॥

होमभस्म । न॰ वैष्टुते ॥

होमाग्नि । पु॰ यज्ञाग्नौ । महाज्वाले । महावीरे ॥

होमि । पु॰ पावके । अग्नौ । घृते ॥

होमी । पु॰ होमकर्त्तरि । जुहोति । हु॰ । उत्पम् कर्दिहोमिनइतिन् होतेर्मिन् ॥

होमीय । त्रि॰ होतव्यद्रव्ये ।

ह्रदालयेश्वर । पुं॰ ह्रदालयेशस्थशिवे ॥

ह्रदिनी । स्त्री॰ नद्याम् । सरिति ॥ ह्रदाः सन्त्यस्याम् । अतइनि । ङीप् ॥

ह्रसिमा । पु॰ ह्रस्वत्वे । ह्रस्वस्यभाव । पृथ्वादित्वादिमनिच । स्थूलदूरेतिसाधु ॥

ह्रसिष्ठ । त्रि॰ अतिह्रस्वे । ह्रस्वतमे ॥ अयमेषामतिशयेनह्रस्व । इष्ठनि स्थूलदूरेतिसाधु ॥

ह्रसीयान् । त्रि॰ ह्रस्वतरे ॥ अयमनयोरतिशयेह्रस्व । ईयसुनिस्थूलदूरेतिसाधु ॥

ह्रस्व । पु॰ वामने ॥ एकमात्रवर्णे ॥ न॰ परिमाणविशेषे ॥ यथा । अणुदीर्घमहद्ध्रस्वमितितद्भेदइति तद्भूति ॥ गौरसुवर्णशाके । पुष्पकासीसे ॥ त्रि॰ प्रकृतपुरुषपरिमाणात् न्यूनमनुष्ये । खर्वे । वामने । मेदि॰ । भा॰ प्र॰ ॥ क्षुद्रवस्तुमात्रे । वामने । न्यञ्चि । नीचे । खर्वे ॥ ह्रसति॰ ह्रस्यतेवा । ह्रसशब्दे । बाहुलकात् । उल्वादिर्वा ।

ह्रस्वकुश । पु॰ श्वेतकुशे ॥

ह्रस्वगर्भ । पु॰ कुशे ॥

ह्रस्वगवेधुका । स्त्री॰ नागबलायाम् । काँगहीतिख्यातायाम ॥ गवेधूमीरधनौ । एध॰ । बाहुलकादु । सज्ञायांकन् । ह्रस्वाचासौगवेधुकाच ॥

ह्रस्वजम्बु । स्त्री॰ क्षुद्रजम्ब्वाम् ॥

ह्रस्वतण्डुल । पु॰ राजान्ने ॥

ह्रस्वदर्भ । पु॰ श्वेतकुशे ॥

ह्रस्वदा । स्त्री॰ शल्लक्याम् ॥ इतिराजनिघण्टु ॥

ह्रस्वपञ्च । पु॰ गिरिजमधूकागमे ॥

ह्रस्वपञ्चिका । स्त्री॰ अश्वत्थ्याम ॥

ह्रस्वब्राह्म । पुं॰ क्षुद्रमकरवर्णे । मुण्डे । ह्रस्वपर्णे । पीपरी ॥ गुणास्तु । ब्राह्म कटु कषायश्चिशिरोरक्त दोषजित् । मूर्च्छाभ्रमप्रलापघ्नोह्रस्वब्राह्मोविशेषतइति ॥

ह्रस्वफल । पु॰ मधुनालिकेरे ॥

ह्रस्वफला । स्त्री॰ भूमिजम्ब्वाम् ॥

ह्रस्वमूल । पुं॰ रक्तेक्षौ ॥

ह्रस्वशाखाशिफ । पु॰ ह्रस्वशाखामूले । क्षुपे ॥ शाखाच॰ शिफामूलञ्चतेशाखाशिफे । ह्रस्वेशाखाशिफेयस्य ॥

ह्रस्वा । स्त्री॰ खर्वायाम । वामन्याम् ॥ नागबलायाम । सुद्रपर्ण्याम् ॥ भूमिजम्ब्वाम् ॥

ह्रस्वाग्नि । पुं॰ चित्रके । ह्रयाम्नौ ॥

ह्रस्वाङ्ग । प॰ अष्टवर्गगतजीवकौषधौ । कूर्चशीर्षे । ह्रस्वान्यङ्गान्यस्य ॥

ह्रस्वैरण्ड । पु॰ रक्तैरण्डे ॥

ह्राद । पुं॰ स्तनिते । गर्जिते । श

न्दे । हिरण्यकशिपौ कनीयसि पुत्रे ॥

ह्रादनि । पु॰ गर्जितशब्दे ॥

ह्रादी । त्रि॰ सशब्दे ॥

ह्रादिनी । स्त्री॰ वज्रे ॥ ह्रादत्यवश्यम् । ह्रादअव्यक्ते शब्दे । आवश्यके णिनि । ह्राद स्फूर्जथुरस्त्यस्या इतिवा । ह्रनि । तडिति । विद्युति । ह्रादोऽव्यक्तशब्दोऽस्त्यस्या । इनि । अव्यवहितोत्तरोत्पत्तिकाल यस्या इतिवा अर्थः ॥ शल्लक्याम् । गजभक्ष्यायाम् । सुवहायाम । नद्याम् ॥ ह्रादत्यवश्यम् । ह्रादी सुखिच । आवश्यकेणिनि । रलयोरैक्यम ॥

ह्रास । पु॰ शब्दे । अभिलापे । ध्वनौ ॥ यथा । शब्दाभिलापौत्वभिधाऽभिधानवाचकौध्वनि । ह्रास कुत्सितस्त्रेतिमुद्गाख्लितञ्चिकाण्डशेष ॥ आरवे ॥ क्षये । यथा । ह्रासवृद्धौवसततद्दिनरात्र्योर्यथाक्रमम् । सन्ध्यामुहूर्त्तमाख्यात ह्रासवृद्धौचसा समेति ॥

ह्रिवेरम् । न॰ ह्रिवेरे । ह्रीवेरे ॥ द्व॰ द्वि॰ व ॥

ह्री । स्त्री॰ लज्जायाम् । अकार्यप्रवृत्त्या रुद्धोतत्प्रतिबन्धिकायांवा । लज्जायाम् ॥ ह्रीलज्जायाम् । सम्पदादित्वात् क्विप ॥ पार्वत्याम ॥

ह्रीक । पु॰ काको ॥ नकुले ॥ सव्वदेवे ॥ त्रि॰ लज्जिते ॥ जिह्रेति । ह्री॰ । ह्रियेरश्चलोवेतिकम् ॥

ह्रीका । स्त्री॰ त्रपायाम् । लज्जायाम् ॥ टाप ॥ चासौ ॥

ह्रीकु । पु॰ जतुनि ॥ त्रपुणि ॥ वालि ॥ मार्जारे ॥ त्रि॰ अप्रशस्ते ॥ अप्रगल्भे ॥ सलज्जे । लज्जिते ॥ जिह्रेति । ह्री॰ । ह्रिय कुकारश्चलोवा । बाहुलकाद्गुण ॥

ह्रीकू । स्त्री॰ भुवि ।

ह्रीजित । त्रि॰ सलज्जे । लज्जाशीले । लज्जिते ॥ ह्रियाजित ॥

ह्रीण । ) त्रि॰ लज्जिते । सपत्रे ॥
ह्रीत । )

अह्रैषीत् । ह्री॰ । क्त ॥ नुदविदोन्दत्राघ्राह्रीभ्योन्यतरस्यामितिनिष्ठा तस्यनोवा ॥

ह्रीता । स्त्री॰ लज्जितायाम् ॥ ह्रिय, क्तरित्र ॥

ह्रीवेरम् । न॰ सुगन्धिबाला ॰ ह्र॰ भा॰ प्र॰ गन्धवस्तुनि । तत्पर्यायायथा । बालंह्रीवेरवर्हिष्ठोदीच्यकेशाम्बुनामचेति ॥ गुणास्तु । ह्रीवेरकृद्धिंह्ल्लास तृष्णातीसारनाशनमितिराजवल्लभ ॥ ह्रीयुक्तवेरमस्य ॥

ह्रेपित । त्रि॰ ह्रियलज्जाप्रापिते ॥ जिह्रीतेर्ह्रणात्कर्म्म णिक्त । अर्त्तिह्री त्यादिनापुगागम ॥ *

ह्रेषा स्त्री॰ अश्वशब्दे । ह्रेषायाम्
। ह्रेषणम् । ह्रेषृशब्दे । गुरोश्च
ह्लः । टाप् ।

ह्लादः । पु॰ आह्लादे । प्रमोदे ॥

ह्लादक । वि॰ ह्लादकारी ॥ आध्य
र्षादिभ्य कन् ॥

ह्लादि । वि॰ । आह्लादी ॥

ह्लादी । वि॰ । ह्लादविशिष्टे ।

ह्लादिनी । स्त्री॰ शल्लक्याम । गजभ
क्ष्यायाम । ह्लादयत्यश्वम् । ह्ला
दि सुखेच । आवश्यकेतिणिनि ॥
शक्तिविशेषे । यथा । ह्लादिन्या स
म्विदाश्लिष्ट सच्चिदानन्द ईश्वर
स्वाविद्यासंवृतो जीव संक्लेशनि
कराकरः ॥

ह्लीक । पु॰ नकुले ॥ सहदेवे ॥
वि॰ लज्जिते । सत्रपे । लिङ्कृति
। ह्री॰ । ह्रियोरल्लोपेतिकन् ॥

ह्लीका । स्त्री॰ त्रपायाम । लज्जाया
म् ॥ लिङ्कृति । ह्रीलज्जायाम् । ह्रि
योरल्लोपेतिकन् । टाप् ॥

ह्लीकु । पु॰ जतुनि ॥ त्रपुणि ॥ मा
ले ॥ मार्जारे । वि॰ लज्जिते ॥
अप्रशस्त ॥ अप्रगल्भे ॥ लिङ्कृति
। ह्री॰ । ह्रिय कुकरल्लोपेति
कुक् ॥

ह्लीकू । स्त्री॰ धरित्र्याम् । भूमौ ॥

ह्लेषा । स्त्री॰ ह्रेषायाम् ।

ह्वरणम् । न॰ कौटिल्ये ॥ शक्तौरूप्य

मित्रस्त्रीव भुजगी विश्वं यद्ध्यानत
प्रोन्मीलत्यथ तन्निमीलति तरां यज्ज्ञा
नतः सर्वतः ॥ शान्तं निष्कलम
द्वितीयममलं संविद्घनं व्यापकं स्वा
त्मानं सकलाश्रयं श्रुतिशिरःसारं स
दोपास्महे ॥ १ ॥ श्रीमच्चिद्घनद्वा
त्मकहरिहरानन्दादिनाथ निजश्री
रस्मारमजस्रमेकमतुलं संसारपाश
च्छिदम् ॥ नत्वा तच्चरणाम्बुजन्मसु
खपूर्वानन्दनाथो मुदे । साधूनां सु
धियां चकार सुखदं शब्दार्थचिन्तामणि
म् ॥ २ ॥ अब्दे व्यङ्कधरामिते बर्षे
चैत्राङ्किते नामि माघासितसप्तम्यां
शनौ समाप्तिं गतो ग्रन्थः ॥ श्रीसु
खानन्दनाथस्य कृतिरेषा जगद्धिता
प्रौढ्यै भूयाज्जगत्यांभवानीविश्वना
थयोः ॥ इति श्रीहरिहरानन्दनाथ
भारतीशिष्यश्रीमदवधूतश्रीसुखान
न्दनाथसङ्कलितः शब्दार्थचिन्ताम
णि॰ समाप्तः ।

श्रावण कृष्णसप्तम्यां द्विवेदाङ्कश
शाङ्कमिति वैक्रमेऽब्दे शब्दार्थचिन्ता
मणिकोश पण्डितश्रीधरवाज
पेयिनाधिकारेणोदयपुरे मुद्रित

श्री

संवत्

१९१७ ग्रन्थपूर्तिः

( ❀—✻‡✻‡✻—❀ )

